**तत्राभवत्पङ्क्तिरथाभिधानो भर्ता भुवो भानुनिभः प्रभावैः ।**
**क्षत्रान्वयैर्बिभ्रदलङ्घ्यमन्यस्मानाथमानं जयमानमोजः ॥ १२ ॥**

---

आदौ क्षतानि नाशितानि पश्चादुद्दूहितानि परिपोषितानि क्षतोद्दूहितानि 'पूर्वकाले ति' समासः । तमसां समूहाः तामसानि 'तस्य समूह' इत्यण् क्षतोद्दूहितानि तामसानि यैस्तानि रक्ताश्मनीलोपलतोरणानि रक्ताः रक्तवर्णाः ते च ते उपलाश्च नीलोत्पलाः रक्तरत्नानि नीलसंज्ञकरत्नानि तेषां तोरणानि बहिर्द्वाराणि कर्तॄणि, 'तोरणोऽस्त्री' बहिर्द्वारं इति कोशः । विभाभिः विशिष्टा रक्ताः कृष्णवर्णाश्च भासश्च विभासः ताभिः निशासु रात्रिषु 'निशानिशीथिनी रात्री' त्यमरः । भ्रमतः भ्रमति चरतीति भ्रमन् अटतः नारीणां स्त्रीणां जनः लोकः तस्य क्रमेण क्रोधप्रमोदौ क्रोधः कोपः प्रमोदो हर्षः 'कोपक्रोधामर्षरोषप्रतिघा' 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरौ । विदधुः चक्रुः विपूर्वाद्धधातोर्लिट् । रात्रिषु प्रचरन्तीनामभिसारिकाणां रक्तमणीकृततोरणप्रकाशेन लोकानां स्वरूपज्ञानभीत्या क्रोधः नीलमणीकृततोरणजन्यनीलिम्ना स्वरूपाच्छादनात् हर्षे इति ज्ञेयं ॥ ११ ॥

इत्थं एकादशभिः श्लोकैः अयोध्यां पुरीं वर्णयित्वा कथां प्रस्तोतुं दशरथनामानं राजानं वर्णयति । तत्रेति । तस्यामिति तत्र अयोध्यायामित्यर्थः सप्तम्यास्त्रल् । पङ्क्तिरथाभिधानः पंक्तिरथ इत्यनेन तुल्यार्थत्वात् दशरथपदं गृह्यते 'पंक्तिश्छन्दोऽपि दशमं' इत्यमरात् पंक्तिशब्दस्य दशवाचित्वं । दृश्यते चैतादृशप्रयोगाः चंपूरामायणे 'पपात निःसंज्ञः पङ्क्तिरथः' इत्यादयः । तत् अभिधानं नाम यस्य' आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः । प्रभावैः प्रतापैः 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजं' मित्यमरः । भानुनिभः भानोः सूर्यस्य निभः तुल्यः 'भानूरश्मिदिवाकरौ' 'निभसंकाशनीकाश' इत्युभयत्राप्यमरः । क्षत्रान्वयैः क्षत्राणां क्षत्रियाणां अन्वयो येषां ते 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकात् व्यधिकरणो बहुव्रीहिः । अथवा क्षत्राणामन्वयाः परंपरा इत्यर्थः तैरलंघ्यं लंघितुमशक्यमिति अर्हे लघ्यं न लघ्यं अलंघ्यं लंघ धातोः ऋहलोर्ण्यत् इति कर्मणि ण्यत् नञ्समासः शत्रुभिरनुल्लंघनीयमिति यावत् । अन्यस्मानाथमाने नाथते आशास्ते नाथमानं अन्येषां इतरेषां शत्रूणामित्यर्थः क्ष्मा पृथ्वी तस्याः नाथमानं शत्रुभूम्यैषिणं इत्यर्थः अत्र शेषे षष्ठी सुप्सुपेति समासः षष्ठी समासस्तु पूरणगुणेति निषिद्धः एतादृशं ओजः बलं 'ओजो दीप्तिबले' इत्यमरः । जयो विजयः मानः शौर्यवीर्याद्यभिमानः अनयोः समाहारः जयमानं तत् बिभ्रत् बिभर्ति धारयति बिभर्तेर्लटिशतृप्रत्यये 'नाभ्यस्ताच्छतु' रिति नुमभावः । जयमानं ओज इत्यनयोः 'नामधे पुरुषान्तह' मितिवत् ... विनापि समुच्चयः । भुवः पृथिव्याः भर्ता बिभर्ति पोषयति धारयति इति वा ... ऽभवत् आसीत् भवतेर्लङ् । अनुप्रासालंकारः ॥ १२ ॥

**अखण्डमानो मनुजेश्वराणां मान्यो गुणज्ञो गुणजैर्मनोज्ञैः ।**
**दिशो यशोभिः शरदभ्रशुभ्रैश्चकार राजा रजतावदाताः ॥ १३ ॥**
**जिगीषुरभ्यस्तसमस्तशास्त्रज्ञानोपरुद्धेन्द्रियवाजिवेगः ।**
**आजावजय्यानजनन्दनोऽन्त स षड्द्विषः पूर्वमसौ विजिग्ये १४**

---

तमेव नयोदशभि श्लोकै वर्णयति । अखण्डमान इति । न खड अर्ध अवि च्छिन्नइत्यर्थ 'खडोऽर्ध ऐक्षवे' इति हैम । एतादृश मान सत्कार शौर्यादिभि मानो वा यस्य मनुजेश्वराणां मनो राजविशेषात् जाता मनुजा मनुष्या 'पच-म्यामजातौ' इति जनेर्ड । ईशितु शीलमेषा ते ईश्वरा 'स्थेशभासपिसकसोवरच्' इत्यनेन ईशेर्वरच् । मनुजानामीश्वरा इत्यत्र षष्ठीतत्पुरुष । तेषा राज्ञामित्यर्थ मान्य मानयितु पूजयितु योग्य मान्य मानयतेश्चुरादेरतोयत् इति यत् गुणज्ञ गुणान् सध्यादय तान् जानातीति 'आतोऽनुपसर्गे' इति कप्रत्यय उपपद समास एतादृश राजा राजतेरसौ राजा 'कनिन्युवृषि' इत्यनेन कनिन् प्रत्यय• दशरथ गुणजै गुणेभ्य सध्यादिगुणेभ्य शौर्यादिगुणेभ्यो वा जातानि गुणजानि पूर्ववत् डप्रत्यय 'शौर्यसध्यादिकेगुणा' इत्यमर । मनोज्ञै मजुलै 'मनोज्ञ मजु मजुल' इत्यमर । शरदभ्रशुभ्रै शरद शारदतो अभ्राणि मेघा 'अभ्रंमेघोवारिवाह' इत्यमर । तद्वच्छुभ्रै श्वेतै 'शुभ्रशुक्लशुचिश्वेत' इत्यमर• यशोभि कीर्तिभि• 'यश कीर्ति समज्ञा च' इत्यमर । दिश काष्ठा 'दिशस्तु ककुभ काष्ठा' इत्यमर । रजतावदाता रजत रूप्यमिव अव-दाता सिता 'अवदात सितो गौरो' इत्यमर । चकार करोतेर्लिट् यशस श्वेतत्ववर्णन कविसप्रदायसिद्ध । तथाच भारतचम्पां 'तस्यां वसन् पांडुरुदार-विक्रम प्रजामन पालयन् प्रशासनात् । यश प्रकाशैर्यमुनासखीसखैर्निनाय-लोक निजनामवाच्यताम्' इत्यादि । अत्र व्यनुप्रासालकार• उपमालकारश्च तल्लक्षण 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति' इत्यादि ॥ १३ ॥

जिगीषुरिति । जेतुमिच्छु जयते समतात् 'सनाशसभिक्षउ' इत्युप्रत्यय 'सन्लिटोर्जे' इति कुत्व जयेच्छुरित्यर्थ• । अभ्यस्तानि यानि समस्तानि निखि लानि शास्त्राणि तेषां ज्ञान कृष्णस्य कृतिरितिवत् कर्तरि षष्ठीय तत्कर्तृक ज्ञानमित्यर्थ तज्जन्यमिति यावत् तेन उपरुद्धा निरुद्धा इन्द्रियाण्येव हर्यादय एव वाजिन अश्वा तेषां वेगो रयो येन 'विश्वमशेष कृत्स्न समस्तनिखिलाखिलानि निःशेष' इत्य मर 'इन्द्रियं विषयीन्द्रियं' 'वाजिवाहार्वगधर्व' 'वेगस्तरसी तु रय' इत्यमरः । शास्त्रजन्यज्ञानेन निरुद्धेन्द्रियवेग इत्यर्थ एतादृशोऽजनन्दन नंदयति आल्हादयति इति नदन 'नद्यादित्वाल्यु' । अजस्य एतन्नाम्नो रघुपुत्रस्य नंदन पुत्र 'नदनस्तु तनये हर्षकारिणि' इति हैम स असौ दशरथ आजौ युद्धे 'समित्याजि समिद्युध' इत्यमर । जेतुं शक्या जय्या 'क्षय्यजय्यौ शक्यार्थे' इति शक्यार्थो

दण्डस्ततस्तस्य भुवं जिगीषोः कम्पं वितन्वन् विहिताङ्गमर्दः ॥
तापैकहेतुस्त्रिदशाधिपस्य दिशं ज्वरस्तीव्र इवाविवेश ॥ १६ ॥
समुद्रमुल्लङ्घ्य गतस्तदीयस्तेजोऽभिधानो गुरुरग्निराशिः ।
नितान्तसन्तापितपूर्वकाष्ठः प्रोत्स्वेदयामास नृपं कटाहे ॥ १७ ॥

---

सोऽनुष्ण ' इत्यमरः । न तेने नाऽकारीत्यर्थः तनोतेः कर्मणि लिट् द्वित्वं अभ्यासलोपश्च । सकलविषयभोगानुकूल्येपि स असन्तुष्टत्वेन अधिकदेशानां स्वायत्तीकरणेऽनलस आसीदित्यर्थः । ' असन्तुष्टा द्विजा नष्टा सन्तुष्टा क्षत्रपभव ' इति न्यायात् । श्लेषाऽनुप्रासावलङ्कारौ ॥ १५ ॥

येन अलसत्वं न तेने इति यदुक्तं तत् विस्पष्टमितु चतुर्दिग्विजयपुरादौ तावत् प्रागजयमाह । दंड इति । ततः अयोध्यापुरीनिवासानंतरं भुवं पृथ्वीं जिगीषोः जेतुमिच्छुः जिगीषुः तस्य जयतेः सन्नन्तादुप्रत्ययः सल्लिटोर्जेरिति कुत्वं तस्य दशरथस्य दंडः दमः ' साहसं तु दमो दंड ' इत्यमरः निदशाधिपस्य तृतीया दशा यौवनाख्या येषां ते निदशा देवाः अत्र वृत्तौ त्रिशब्दो पूरणप्रत्ययार्थकः शब्दशक्तिस्वाभाव्यात् त्रिविष्टपवत् तेषां अधिपातीत्यधिपः सुपीतियोगविभागात् कप्रत्ययः तस्य इन्द्रस्य दिशं काष्ठां प्राचीमित्यर्थः तीव्रः दारुणः ज्वर इवऽऽविवेश प्राविक्षत् । ज्वरो यथा सर्वांगं व्याप्नोति एवं जिगीषोस्तस्य दंडः प्राचीं व्याप । तत्र दंडज्वरयोर्विशेषणानि कंपं वेपथुं वितनोतीति वितन्वन् विपूर्वात्तनोतेर्लट् शत्रादेशः एतद्दंड शत्रुकंपक इत्यर्थः ज्वरोऽपि कंपमुत्पादयतीति सुप्रसिद्धमेतत् । पुनश्च विहितांगमर्दः अगानां राजविशेषाणां मर्दः मर्दनं नाश इत्यर्थः विहितः कृतः अगमर्दो येन ज्वरपक्षे अगानां शरीराणां मर्दः क्षोदनं । तापैकहेतुः तापस्य दुःखस्य एकः मुख्य हेतुः कारणं ' एके मुख्यान्यकेवला ' ' हेतुर्नाकारणं बीजं ' इत्यमरौ ' ताप सतापे कृच्छ्रे च ' इति हैमः अत्रापि श्लेषालंकारः ॥१६॥

समुद्रमिति । तदीयः तस्य दशरथस्य अयं तदीयः 'त्यदादीनि च' इति वृद्धसंज्ञत्वात् ' तस्येदमित्यर्थे ' वृद्धाच्छः समुद्रं मुद्रया मर्यादया सह वर्तते इति समुद्रं तं सागरं 'समुद्रोऽब्धिरकूपार' इत्यमरः । उल्लंघ्य अतीत्य उत्पूर्वाल्लघतेः क्त्वोल्यप् । गतः यातः तेजोऽभिधानः तेजः प्रतापः इति अभिधानं नाम यस्य ' तेजः प्रभावे दीप्तौ च ' इत्यमरः । गुरुः महान् । नितांतं अत्यंतं संतापिता संतापं प्रापिता पूर्वा काष्ठा दिशा येन पक्षे नितांतं अत्यंतं संतापितं दग्धं पूर्वकाष्ठं काष्ठस्य पूर्वं पूर्वकाष्ठं येन एतादृशः सन्तापित इत्यत्र, तत्करोति तदाचष्टे, इति णिच्, क्तः, प्रत्ययः, सन्ताप, शब्दात् ' तदस्यसजातमिति तारकादित्वादितच् प्रत्ययः । पूर्वकाष्ठ इत्यत्र ' पूर्वापराधरेति ' एकदेशिसमासः । एतादृशः अग्निराशिः अग्नेः चन्हेः राशिः समुदायः कटाहे द्वीपविशेषे तैलादिपाकपात्रे च 'कटाहो घृततैलादिपाकपात्रेऽपि कर्परे। शूर्पे कटाह कूर्मपृष्ठे च महिषीशिशौ ' इति विश्वः । 'द्वीपस्य च प्रभेदे च कटाह.

विनिर्जितोऽप्यस्य शरेण घातं लब्ध्वासुरासुप्रघसायुधस्य ।
आत्मानमन्यैरसमानमानं मेने मनस्वी युधि यावनेन्द्रः ॥ १९ ॥
तेजश्छलेनाथ हुताशनेन श्रीवासरम्यं प्रदहन् तुरुष्कम् ।
धूपैरिवासक्तगतैर्यशोभिराशीयमन्तं सुरभीचकार ॥ २० ॥

---

त्वामेव भवतीति तात्पर्यं । 'कर्कशो निर्दये क्रूरे कपिल्यकक्खाणयो । इक्षौ सा: इक्षिके कासमर्दके परुषे दृढे' इति हैम । श्लेषोपमे ऽलङ्कारौ ॥ १८ ॥

इदानीं पश्चिमदिग्जय वर्णयति विनिर्जित इति युधि युद्धे सुरविरुध्या असुराः नञर्थो विरोधः असुराणां दैत्यानां असव प्राणा 'पुंसि भूम्न्यसव प्राणा ' इति कोश ते प्रघसा । भोजन येषां तानि 'उपसर्गेऽद ' इत्यनेन प्रे उपपदे अत्ते कर्मणि अप् ' घञपोश्च ' इति घस्लादेश । एतादृशानि आयुधानि प्रहरणादीनि यस्य ' आयुध तु प्रहरणं ' इत्यमर । अस्य दशरथस्य शरेण बाणेन 'कलबमार्गण-शरा ' इत्यमर । घात ताडन हन्तेर्भावे घञ् लब्ध्वा विनिर्जितोऽपि पराजितोऽपि मनस्वी प्रशस्त मन, यस्य 'भूमनिंदाप्रशंसेति प्रशंसायां' अस्मायामेधास्रजोविनिः इति विनि गंभीर इत्यर्थ यावनेंद्र यवनानां समूहो यावन तस्य इन्द्र अधिपति अथवा यवनादेशविशेषा त एव यावना प्रज्ञादित्वात्स्वार्थे अण् तेषामिंद्र अ-धिपति पश्चिमदिगधीपति राजविशेष आत्मन स्व अन्यै इतरनृपै न समान तुल्य असमान अतुल्य मान सत्कारो यस्य त असमानमान अतुल्यसत्कारं मेने मनुते स्म । महद्भ्य पराजये प्राप्तेऽपि स्वतुल्येभ्य स्वस्य श्रेष्ठत्वमस्त्येव इति मेने इत्यर्थ । एतेन दशरथस्य अतीव महत्व ध्वनित अनुप्रासालङ्कार. ॥१९॥

इदानीमुत्तरदिग्विजयं वर्णयति । तेज इति । अथ पश्चिमदिग्विजयानंतर 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोअथ' इति कोश । तेज. प्रतापं छलं छद्म यस्य 'छल छद्मस्खलितयो ' इति त्रिकांडशेष तेजोरूपेणेत्यर्थं हुताशनेन हूयते इति हुत हविर्द्रव्य तत् अशन यस्य तेन अग्निना । श्रीवासरम्य श्रिय लक्ष्म्या वास निवास स्थितिरित्यर्थं तेन रम्य मनोज्ञ पक्षे श्रीवासो वृक्षधूपः 'श्रीवासो वृक्ष-धूपे स्यात् पंकजे मधुसूदने' इति मेदिनी तेन रम्य मनोज्ञ घ्राणतर्पण इति यावत् एतादृशं तुरुष्क उत्तरदिक्स्थ देशविशेष सिल्हकनामकं सुगंधिद्रव्यविशेष च 'तुरुष्क सिल्हके म्लेच्छजातौ देशान्तरेऽपि च' इति विश्वमेदिन्यौ । प्रदहन् प्रदहतीति सतापयतीति पक्षे भस्मीकरोतीति प्रदहन् अथवा उभयत्रापि भस्मी-करणमेवार्थ एतादृश प्रकरणप्राप्तो राजा असावकर्त मं सक्त असक्त संपृक्त भावे च अथवा यथास्यात्तथा गतं यांति धूपैरिव गन्धविशेषविकारैः 'धूपोऽभ्रा-शाविका' इति त्रिकांडशेष । यशोभि कीर्तिभि 'यशः कीर्ति ... ' इत्यमर । आशाप आशानां दिशां अय अन्तीय ... [illegible] ... पिनोपि कर्ष अत ... [illegible] ... रत्न ... [illegible]

परेषुवात्यापरिबृंहितोऽस्य क्रोधाभिधानो युधि चित्रभानुः।
आताम्रनेत्रच्युतवारिवर्षैरानायि शान्तिं रिपुकामिनीनाम् ॥२१॥
तस्यैकबाणासनभग्नशत्रोरालोकभूमौ चरणारविन्दे।
आसेदतुः सर्वनरेन्द्रमौलिरत्नप्रभालक्तकमण्डनानि ॥ २२ ॥

ब्दात्' कृभ्वस्तियोगेति च्वि प्रत्ययः अस्य च्वौ इति ईत्वं वेरपृक्तस्येति वेर्लोपः 'सुरभिर्हेम्निचंपके। जातिफलेमातृभेदे रम्ये चैत्रवसंतयोः। सुगन्धौगवि' इति हैमः। श्लेषः उपमा चेत्यलंकारौ ॥ २० ॥

एवं पूर्वादि चतुर्दिग्विजयमुक्त्वा पुनरपि तमेव वर्णयति। परेष्विति। युद्धे परेषां शत्रूणां इषवः बाणाः वातानां समूहो वात्या 'पाशादिभ्योयः' इत्यनेन समूहे य प्रत्ययः परेषव एव वात्या तया परिबृंहितः वर्धितः बृह बृहि वृद्धौ इत्यस्मात्कर्मणि क्तः शत्रुबाणपातेन वर्धित इत्यर्थः अस्य दशरथस्य क्रोधः कोपः अभिधानं नाम यस्य एतादृशः चित्रभानुः चित्राः विचित्राः भानवः मरीचयो यस्य स चित्रभानुरग्निः 'सूर्यवन्ही चित्रभानू' इत्यमरः। कर्म अतिशयितः कामः यासां ताः कामिन्यः अनेन सविलासत्वं 'ध्वनितं' 'कामिनी वामलोचने' इत्यमरः रिपूणां शत्रूणां कामिन्यः तासां 'रिपौवैरी सपत्नारि' इत्यमरः ईषत्ताम्राणि रक्तानि आताम्राणि कुगतिप्रादय इति समासः आताम्राणि च तानि नेत्राणि च तेभ्यः च्युतानि गलितानि साधनं कृताबहुलमिति समासः। वारीणां उदकानां वर्षाणि वर्षणानि 'भयादीनामुपसंख्यानमिति' वृषधातोर्भावे अच् प्रत्ययः 'आपः स्त्री भूम्निवार्वारि वृष्टिर्वर्षण जीवन' इत्युभयत्राप्यमरः। आताम्रच्युतानि एतादृशानि यानि वारिवर्षाणि उदकवर्षणानि तैरुनायं पूर्वाग्नीरिति यावत् शांतिं शम शाम्यते क्तिनि अनुनासिकस्य क्विझलोरिति दीर्घः। आनायि प्रापि। आङ् पूर्वात् नयते कर्मणि लुङि चिणि तलोपः। अत्र नयतेर्द्विकर्मकात् चित्रभानुरप्रधाने कर्मणि लुङ्। तदुक्तं 'गौणे कर्मणि, दुह्यादेः प्रधाने नीहृकृष्वहां' इति। अत्र रूपकालंकारः ॥ २१ ॥

लोकस्तदीये भुवि हारगौरे कीर्तिप्रताने प्रविजृम्भमाणे ।
अभिन्नकोशं कुमुदं निरीक्ष्य मुमोच चन्द्रोदयशङ्कितानि ॥ २३ ॥
समस्तसामन्तनृपोत्तमाङ्गान्यध्यास्य तस्योन्नतवृत्ति तेजः ।
जज्वाल चूडागतपद्मरागरागच्छटाविस्फुरणच्छलेन ॥ २४ ॥

---

चरणे 'करणे ल्युट्' ते अरविंदे इव कमले इव 'उपमितं व्याघ्रादिभिः' व्याघ्रादित्वात्समासः चरणारविंदे कर्तॄणि नराणां मानवानां इंद्राः अधिपतयः सर्वे च ते नरेंद्राः राजान. तेषां मौलय. किरीटा. 'चूडाकिरीटौ' इत्येवेषां रत्नानि मणयः तेषां प्रभा छवि. अलक्तकस्य यावस्यमंडलानि भूषणानि 'नरेंद्रमौलिरत्नप्रभा एव अलक्तमंडलानि 'परिष्कारो विभूषणं मडलं' इत्यमर' तानि कर्माणि आसेदतु' प्रापतु' आट् पूर्वात्सदेर्लिट् तसि अतुसि एत्वाभ्यासलोपौ । अनेन तस्य सर्वराजवंदितत्वेन सम्राट्त्वं स्पष्टीकृतं । अत्र तस्यैकवाणाशनमिति पाठो यद्यपि दृश्यते तथापि वाणासनमित्येव पाठो युक्त. अर्थसगतेः इति प्रतिभाति । अत्र तस्य चरणे सर्वराजैर्वंदिते इति वक्तव्ये एवं भंग्यंतरेण तस्यैवार्थस्य प्रतिपादनात् पर्यायोक्तमलंकारः तदुक्तं 'पर्यायोक्तं तु गम्यस्य वचो भंग्यंतराश्रयमिति ॥ २२ ॥

लोक इति । लोकः जनः 'लोकस्तुभुवने जने' इत्यमरः । भुवि भूम्यां 'भूर्भूमिरचलानंते' त्यमरः । हारः मुक्तावली तद्वद्गौरे अवदाते 'हारोमुक्तावली' 'अवदातः सितो गौरो' इत्युभयत्राप्यमरौ । तदीये तस्य दशरथस्य अयं तदीयः तस्मिन् तत्संबंधिनीत्यर्थः वृद्धाच्छः। कीर्तेः यशसः प्रतानः विस्तारः तनुविस्तारे भावे घञ् प्रविजृंभमाणे प्रकर्षेण विजृंभते स्फुरतीति विजृंभमाणः जवि पूर्वाज्जृंभतेः कर्तरि शानच् प्रस्फुरति सतीत्यर्थः 'यस्य च भावेन भावलक्षणं' इति सप्तमी । कुमुद चंद्रविकासि कमल 'सिते कुमुदकैरवे' इत्यमरः भिन्नः स्फुटितः कोशः कुड्मल. यस्य तद्भिन्नकोश भिन्नकोश विकसितं न भवतीति अभिन्नकोश अविकसितमित्यर्थः 'कोशोऽस्त्रीकुड्मले खड्गपिधाने' इत्यमरः निरीक्ष्य अवलोक्य चंद्रस्य उदयः आविर्भावः तस्य शंकितानि शङ्काः नपुंसके भावे क्तः । मुमोच तत्याज ॥ २३ ॥

समस्तेति । तस्य दशरथस्य उन्नतेषु उच्चेषु उद्वर्तितेषु च वृत्तिः वर्तनं यस्य 'वृत्तिर्वर्तनजीवने' इत्यमरः एतादृश तेजः प्रभावः 'तेजः प्रभावे दीप्तौ च' इत्यमरः समताद्भवा. सामंताः भवार्थे शैषिकोण् 'अव्ययानां भमात्रे टिलोपः' इति टिलोपः । सामंताः माण्डलिका एतादृशा ये नृपाः राजान 'नृपभूपमहीक्षितः' इत्यमरः । समस्ता निखिला ये सामंतनृपा तेषामुत्तमांगानि उत्तमानि च तानि मुख्यानि च तानि अंगानि च अवयवाः शिरांसीति यावत् 'सर्वेषु गात्रेषु शिर प्रधान' इत्युक्ते. 'उत्तमांग शिरः शीर्षं' इत्यमरः । चूडाः शिखा.

महेन्द्रकल्पस्य महाय देव्याः स्फुरन्मयूखा सरणिर्नखानाम् ।
पादद्वयान्ते जितपद्मकोशे मुक्तेव मुक्तावितति्र्विरेजे ॥ २७ ॥
लीला गतेरत्र निसर्गसिद्धा मत्तो न दन्ती मुषितो न हंसः ।
इतीव जङ्घायुगलं तदीय चक्रे तुलाकोट्यधिरोहणानि ॥ २८ ॥

---

ऽयं कोसल्यैव समयं विवाहकाल आचार वा 'समया शपथाचारकालसिद्धान्त संविद' इत्यमर । विदित्वा ज्ञात्वा मन्हे अग्रे समक्ष प्रत्यक्षं अक्ष्ण समीपमिति विग्रहे 'अव्ययं विभक्तीत्यनेन समास 'प्रतिपरसमनुभ्योऽक्ष्ण इति समासांत टच् प्रत्यय' विधिमर्ह विधिवत् यथाविधीत्यर्थ 'तदर्ह' इति वतिप्रत्यय । उपयेमे व्यवाहि । उपपूर्वात् यमे कर्मणि लिट् एकाऽपाठलोपौ ॥२६॥

तामेव पञ्चदशभिः श्लोकै वर्णयिष्यन् आदौ एकेन पादौ वर्णयति । महेंद्र इति महांश्चासौ इन्द्र महेंद्र इत्युक्त महेंद्र, महेंद्रकल्प तस्य इन्द्रतुल्यस्येत्यर्थ 'ईषदसमाप्तौ' इत्यनेन कल्पप् । दशरथस्य देव्या कृताभिषेकाया राज्ञ्या 'देवीकृताभिषेकायां' इति कोश । स्फुरतीति स्फुरंत, स्फुरते शतृप्रत्यय देदीप्यमानाः मयूखा त्विष यस्या सा एतादृशी नखानां नखराणां सरणि श्रेणि 'सरणि श्रेणिमार्गयो' इति हैम पद्मयो कमलयो कोशौ कुड्मलौ जितौ अभिभूतौ अर्थाभिमतोभया पद्मकोशौ येन एतादृशे द्वौ अवयवौ यस्य तत् द्वय 'द्वित्रिभ्यां तयस्यायज्वेति तयस्यायजादेश पादयोश्चरणयो द्वय द्वितय तस्य अंते महाय उत्सवाय पूजायै इत्यर्थ 'मह उद्धव उत्सव ' इत्यमर मुक्ता त्यक्ता अर्पितेति यावत् मुच्लृ मोक्षणे कर्मणि क्त । मुक्तानां मौक्तिकानां विततिरिव पङ्क्तिरिव विरेजे शुशुभे । राजदीप्तौ कर्तरि लिट् 'फणां च सप्तानामिति विकल्पेनैत्वाभ्यासलोपौ । उपमालङ्कार ॥ २७ ॥

इदानीं जङ्घे वर्णयति । लीलेति । अत्र एतस्मिन्निति अत्र एतच्छब्दात्सप्तम्यास्त्रल् एतदोऽन्' इत्यनादेश । जंघायुगले गते गमनस्य लीला विलास 'लीलाविलासक्रिययो' इत्यमर । निसर्गसिद्धा निसर्गेण स्वभावेन सिद्धा निष्पन्ना 'स्वभावश्च निसर्गश्च' इत्यमर । अस्तीति शेष 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति महाभाष्यात् । मत्त क्षीब । दन्तौ प्रशस्त दंतौ यस्य स दंती 'अतइनिठनौ' इति प्रशंसायामिनि नौपेति दीर्घ इत्यर्थ 'दन्ती दन्तावलो हस्ती' इत्यमर । न मुषितो न चोरित गतिविषय इत्यर्थाल्लभ्यते । मुषस्तेये कर्मणि क्त । एवं हस मराल न मुषित । तयोरत्युत्तमगतिमत्त्वेन अत्र चौर्याशङ्का । इतीव । इत्थं मत्वेति, स्वस्मात्सिद्धौ न नु चौर्येणलब्धा इति श्लेषान् स्मार्यादिद्भुमिव । तदीयं तस्या इद तदीयं जंघयो प्रसृतयो युगलं युग्मं 'जङ्घा तु प्रसृता' इत्यमर तुलाया गटस्य कोटि कोण तत्संबद्धं शिक्यमित्यर्थं तत्र अधिरोहणानि आरोहणानि बहुवचनं पुन पुनरारोहणप्रदर्शनद्वारा विशुद्धतार्थ-

**दृष्टौ हृतं मन्मथबाणपातैः शक्यं विधातुं न निमील्य चक्षुः ।**
**ऊरू विधात्रा नु कृतौ कथं ताविसास तस्यां सुमतेर्वितर्कः ॥२९॥**
**तथा हृतं तस्य तया पृथुत्वं यथाऽभवन्मध्यमतिक्षयिष्णु ।**
**इतीव बद्धा रशनागुणेन श्रोणी पुनर्वृद्धिनिषेधहेतोः ॥ ३० ॥**

---

सूचनाय 'तुलामाने पलशते' कोटधुरकपाटनी सख्यास्त्रिषु' इत्युभयत्रापि हैम । तुलाकोट्यधिरोहणादिव्य विश्वासदानार्थं करोतीत्यर्थं । तदुक्तं याज्ञवल्क्येन व्यवहाराध्याये दिव्यप्रकरणे 'तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रित । प्रतिमानसमीभूतो रेखां कृत्वावतारित । त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता । तत्सत्यं वद कल्याणि संशयान्मां विमोचय । यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय । शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत्' इति । पक्षे तुलाकोट्यो मञ्जीरयो अधिरोहणानि आरोहणानि प्रवेशानिति यावत् 'पादाङ्गद तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रिया' इत्यमर । चक्रे विदधे । डुकृञ् करणे कर्तरि लिट् । उत्प्रेक्षालङ्कार ॥ २८ ॥

इदानीं तस्या ऊरू वर्णयति । दृष्टौ इति । दृष्टौ दर्शने अर्थात् तदीयोर्वो दृष्टिर्दर्शनेऽक्षिण दर्शने तदूरुदर्शने इति यावत् मन्मथस्य मननं मत् चेतना सम्पदित्वात् मनधातोर्भावे क्विप् 'गमादीनां क्वौ इति न लोप' 'ह्रस्वस्य पिति कृति तुक्' । मथतीति मथ पचादित्वादच् मतो मथ, मन्मथ मदन तस्य बाणा शरा तेषां पाता पतनानि तै हृतं ताडित चक्षु नेत्रं ईक्षणं चक्षुरक्षिणीत्यमर निमील्य ऊरू विधातुं कर्तुं न शक्य अत्र ऊर्वो कर्मत्व विधानक्रियापेक्षं न शकिक्रियापेक्ष अतएव शक्यौ इति न भवति शक्यमिति नपुंसकलिङ्ग तु *विधानक्रियाविशेषणत्वेन सामान्ये नपुंसकमिति अतएव शक्यचानेन दुःखप्रतिहर्तु-*मित्यादि महाभाष्यप्रयोग सङ्गच्छते । अत्र चिकीर्षितो विशेषविचार अस्मत्कृत रत्नावली नाटिकाटीकायां प्रभाख्यायां विस्तरेण निरूपितस्तत्र एव द्रष्टव्य । विधात्रा ब्रह्मणा तौ ऊरू कथ नु कृतौ अत्र नु वितर्के 'नु वितर्कोपमानयो.' इति मेदिनी । इति तस्यां राजमहिष्यां सुमते सुष्ठुमतिः बुद्धिर्यस्य तस्य बुद्धिमत इत्यर्थ । वितर्क तर्क आस बभूवेत्यर्थ अस् गतिदीप्त्यादानेषु इत्यस्माल्लिट् । तस्याः सुमतेरिति पाठे तस्या इत्यस्य ऊरू इत्यनेन अन्वय । २९ ।

इदानीं श्रोणीं वर्णयति । तथेति । तया श्रोण्या तस्य मध्यस्य पृथुत्वं पृथो भाव पृथुत्व विशालत्वमित्यर्थं 'पृथुर्विशाले भूपे' इति हैम । तथा तेन प्रकारेण तथा 'प्रकारवचने थाल्' इति थाल् प्रत्यय । हृतं अपहृतं केन प्रकारेणेत्याकाङ्क्षायामाह । यथेति यथा येन प्रकारेण पूर्ववदेव मध्यम् अभवत् । मध्यं अवलग्नं 'मध्यं चावलग्नं च मध्योऽस्त्री' इत्यमर । अतिक्षयिष्णु ... अतिशयित क्षयिष्णु अतिक्षयिष्णु अतिशयेन क्षीयमाण इत्यर्थ इति यावत् । आर्षेऽत्र ...

अस्योदरस्य प्रतितुल्यशोभं नास्तीति धात्रा भुवनत्रयेऽपि।
सङ्ख्यानरेखा इव सम्प्रयुक्तास्तिस्रो विरेजुर्वलयः सुदत्याः ॥३१॥
वयःप्रकर्षादुपचीयमानस्तनद्वयस्योद्वहनश्रमेण।
अत्यन्तकार्श्यं वनजायताक्ष्यामध्यं जगामेति ममैष तर्कः॥ ३२॥

---

तद्धर्मसाधुकारिषु इत्यधिकारे 'भुवश्चेत्यत्र अनुक्तसमुच्चयार्थेन च कारेण इदं सङ्ग्राह्यमिति वृत्त्याशयः' भाष्यानुक्तत्वाच्चिन्त्योऽयं प्रयोग इति प्रामाणिकाः। अभवत् आसीत् भवतेर्लङ् इतीव श्रोण्या मध्यस्य पृथुत्वापहारात् मध्यं क्षीणं जातमितीवेत्यर्थः पुन. मुहुः वृद्धिनिषेधहेतोः वृद्धेः वर्धनस्य निषेधः निरोधः तस्य हेतोः कारणात् 'षष्ठी हेतुप्रयोगे' इति षष्ठी। श्रोणी कटिः 'कटिः श्रोणी ककुद्मती' इत्यमरः रशनागुणेन रशनायाः मेखलायाः गुणेन सूत्रेण बद्धां सदानिता 'बद्धे सन्दानित उने' इत्यमरः उत्प्रेक्षालंकारः॥ ३०॥

इदानीं तस्यास्तिस्रो वलीर्वर्णयति। अस्येति। भुवनत्रये भुवनानां विष्टपानां त्रय नितय 'विष्टप भुवन जगत्' इत्यमरः त्रिशब्दात् 'द्वित्रिभ्यां तयस्यायज्वेति अयच्। त्रिषु लोकेष्वपीत्यर्थः अस्य सन्निकृष्टस्य 'इदमस्तु सन्निकृष्टे' इत्युक्तत्वात् उदरस्य कुक्षेः 'पिचंडकुक्षीजठरोदरतुंद' इत्यमर प्रतितुल्या सदृशी शोभा कांतिर्यस्य 'वाच्यलिंगाः समस्तुल्यः' 'शोभाकांतिः' इत्युभयत्राप्यमरौ। एतादृशं वस्तु नास्ति इति हेतो. धात्रा ब्रह्मणा 'धातात्मयोनिर्द्रुहिण' इत्यमरः सम्प्रयुक्ताः सम्यक्प्रयुक्ताः प्रादिसमासः सङ्ख्यानरेखा इव सङ्ख्यानस्य गणनस्य रेखाः चिन्हविशेषाः इव सुदत्या. शोभनाः दंता यस्याः सा सुदती राजपत्नी तस्याः 'सङ्ख्यासुपूर्वस्येत्यनुवर्तमाने वयसि दतस्य दतृ इति दत्रादेशः 'उगितश्चेति ङीप्' तिस्रः त्रिसङ्ख्याकाः वलयः विरेजुः शुशुभिरे। राजतेर्लिट् झि उस् फणादित्वादेत्वाभ्यासलोपौ। उत्प्रेक्षालंकारः॥ ३१॥

इदानीं मध्यं वर्णयति। वय इति। वयस· तारुण्यस्य यद्यपि 'खगबाल्यादिनोर्वयः' इत्यनेन वयः शब्दः बाल्यादिवयसां वाचकः तथाप्यत्र योग्यतया तारुण्यमेव गृह्यते। तस्य प्रकर्षः उत्कर्षः तस्माद्धेतो. 'विभाषा गुणेऽस्त्रियां' इति पंचमी। द्वौ अवयवौ यस्य तद्द्वय स्तनयोः कुचयोः द्वय द्वितय उपचीयमान प्रवृद्धं पुष्टमिति यावत् उपपूर्वाच्चिधातो. कर्मकर्तरि लट् तस्य शानजादेशः एतादृश यत्स्तनद्वय तस्य उद्वहनश्रमेण उद्वहनस्य धारणस्य यः श्रमः क्लेशः तेन हेतुना 'हेतौ' इति तृतीया वनजायताक्ष्याः वने उदके जात उत्पन्नं 'जीवनं भुवनं वन' इत्यमर 'सप्तम्यां जनेर्डः' इति डप्रत्यय. वनज कमलं तद्वत् आयते दीर्घे 'सुदूरं दीर्घमायतं' इत्यमरः अक्षिणी नेत्रे यस्याः 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् 'षिद्गौरादिभ्यश्चेति ङीष्' तस्याः राज्ञः मध्य अवलग्न अत्र कश्चित् अतिशयेन अल्पं कृशस्य तनोः भावः कार्श्यं 'स्तोकं दभ्रं कृश तनु' इत्यमरः

अरालकेश्या अलके विधात्रा विधीयमाने चलतूलिकाग्रात्।
च्युतस्य विन्दोरसितस्य मार्गरेखेव रेजे नवरोमराजी ॥ ३३ ॥
नायं शशी तत्प्रतितुल्यमन्यद् यस्मान्न विश्लेषयति द्वयं नौ ।
इति स्म तर्कादिव पश्यतस्तौ तस्या मुखेन्दुं कुचचक्रवाकौ॥३४॥

---

अत्यंत निरवधिकं यत्कार्श्यं तानवं जगाम प्राप इति एषः मम तर्कः कल्पना अस्तीत्यर्थः उत्प्रेक्षालंकारः ॥ ३२ ॥

इदानीं तस्याः रोमराजीं वर्णयति । अरालकेश्येति । विधात्रा ब्रह्मणा अरालाः वक्राः केशाः कचा यस्याः सा 'अरालः कुटिले सर्जरसे च समदंतिनि' इति विश्वः 'कचः केशः शिरोरुहः' इत्यमरः 'स्वांगाच्चोपसर्जनादिति' ङीप् अलके चूर्णकुंतले कुटिलकेशे इत्यर्थः । जात्यभिप्रायेणैकवचनं । विधीयमाने क्रियमाणे विपूर्वाद्धातेः कर्मणि लट् शानच् यकि घुमास्थेति ईत् 'यस्य च भावेनेति' सप्तमी । चलं चंचलं यत्तूलिकाग्रं तूलिकायाः ईषिकायाः वीरणादिशलाकाया इत्यर्थः अग्रं अंचलं तस्मात् च्युतस्य गलितस्य 'स्कन्नं पन्नच्युत गलितं' इत्यमरः न सितः शुभ्रः असितः तस्य कृष्णवर्णस्य विंदोः पृषतस्य मार्गरेखेव मार्गस्य पथः रेखा सरणिः तद्वत् नवरोमराजिः नवानां नूतनानां 'नवीनो नूतनो नवः' इत्यमरः रोम्णां लोम्नां 'तनूरुहं रोमलोम' इत्यमरः । राजी पंक्तिः 'वसिवपि' इत्यादिना इञ् प्रत्ययांतराजिशब्दः तस्मात् कृदिकारादक्तिनः इति ङीपि राजी शब्दः साधुः । रेजे शुशुभे । उपमालंकारः ॥ ३३ ॥

इदानीं स्तनौ वर्णयति । नायमिति । अयं सन्निकृष्टः शशी शशः अस्यास्तीति शशी 'अतइनिठनौ' इति इनिः । चंद्रः न तर्हि किमिदमित्यत आह । तत्प्रतितुल्यं तस्य शशिनः प्रतितुल्यं सदृशं अन्यत् शशिभिन्नमित्यर्थः अन्यशब्दात् सुप्रत्ययस्य 'अद्ड्डतरादिभ्यः पंचभ्यः' इति अद्डादेशः । नन्विदं कथमवगतमित्यत आह । यस्मादिति । इदं हेत्वर्थे पंचमी यस्माद्धेतोः नौ आवयोः 'युष्मदस्मदोः षष्ठीचेत्यनेन नौ आदेशः । द्वयं द्वितयं न विश्लेषयति न वियुनक्ति विपूर्वात् श्लिष् धातोर्णिजन्तात् लट् । इति एवं प्रकारेण तौ प्रसिद्धौ कुचचक्रवाकौ कुचौ स्तनौ ताविव चक्रवाकौ कोकौ 'कोकश्चक्रश्चक्रवाकः' इत्यमरः तर्कात् ऊहात् तस्याः शश्याः मुखेंदुं मुखं यस्य तदेव इंदुः 'इंदुः कुमुदबांधवः' इत्यमरः पश्यतः स्मेव विलोकयामासतुरिवेत्यर्थः । 'लट्स्मे' इति सूत्रेण लिडर्थे दृशधातोर्लटि 'पाघ्राध्मेति पश्यादेशः । रात्रौ चक्रवाकमिथुनस्य परस्परं वियोगो भवति इत्यभिप्रायेणेदं अतएव विश्वगुणदर्शचम्वां 'प्रत्यर्थमनतोऽसर्गगुरवे कोकसंतते । दाशविश्लोककोलाय चौरवर्योनिधये नमः' इत्यादि बहुषु स्थलेषु दृश्यते । किंचात्र कुचपदार्थौ मुखेंदु पश्यत इत्यनेन स्तनयोरुर्ध्वमुखत्वं गम्यते तेन च अर्वाचीनत्वं गम्यते इति दिक् । हेतुरुत्प्रेक्षासमालंकाराः तत्र उत्प्रेक्षा-

निर्जिग्यतुर्यौल्मृणालनालं सच्छिद्रवृत्तं यदि दीर्घसूत्रम् ।
सुश्लिष्टसन्धी शुभविग्रहौ तौ तन्व्या भुजौ किं किल तत्र चित्रम् ॥ ३५
कान्तिप्रकर्षं दशनच्छदेन सन्ध्याघने पल्लपदं हरन्त्याः ।
तस्या गृहोद्यानसरोगतस्य हस्तस्थ पद्माम्बुरुहस्य रागः ॥ ३६ ॥

---

पक्षयोर्लक्षणे तावल्लिखिते हेत्वपह्नुतेर्लक्षणं तु 'शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः' इति शुद्धापह्नुतेर्लक्षणं विलिख्य 'स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः' इति ग्रन्थे उक्तः ॥ ३४ ॥

इदानीं तस्या बाहू वर्णयति । निर्जिग्यतुरिति । तन्व्या कृशाङ्ग्या इत्यर्थः तौ वर्णयितुं मनसा उद्दिष्टौ सुश्लिष्टसन्धी सुतरां अत्यन्त श्लिष्टा सुश्लिष्टाः प्रादिसमासः संधयः कूर्परादिसंधयो ययोस्तौ पक्षे सुश्लिष्टः दृढं इत्यर्थ. संधिरूपो गुणो ययोस्तौ यानुजयार्थं हि सन्धादय. षड्गुणा आश्रियते ते च अमरेण दर्शिताः 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रय.' इति एतेषां लक्षणानि तु ग्रन्थविस्तारभयात् प्रकृते विशेषाऽनुपयोगाच्च न लिख्यते। पुनश्च शुभविग्रहौ शुभः मनोहरः विग्रहः शरीर आकृतिरिति यावत् ययोः पक्षे शुभः उत्तमः परैरजेय इत्यर्थ. विग्रहः षड्गुणेष्वन्यतमः ययोस्तौ। अनेन विशेषणद्वयेन प्राबल्यं सूचितं। एतादृशौ भुजौ बाहू सच्छिद्रवृत्तं छिद्रः रंध्रे. सहितं 'छिद्रं निर्व्यथित रोकं रन्ध्र' इत्यमर. तेनसहेति तुल्ययोगे बहुव्रीहिः सच्छिद्रं च तद्वृत्त च वर्तुलं च सच्छिद्रवृत्त पक्षे छिद्रः दोषैः सहितं सच्छिद्रं एतादृशं वृत्तं चरित्रं यस्य 'छिद्र विवर रन्ध्रवत् । गर्ते दोषे' इति हैमः। वृत्तं 'पद्ये चरित्रे त्रिष्वित्यमरः पुनश्च दीर्घाणि आयतानि सूत्राणि अंतस्तंतवः यस्मिन् पक्षे दीर्घं सूत्रं व्यवस्था यस्य 'सूत्र तंतुव्यवस्थयोः' इति विश्वः 'दीर्घसूत्रश्चिरक्रिय' इत्यमरः । एतादृशं बालानि कोमलानि मृणालानि बिसानि यस्मिन् एतादृशं नालं 'मृणालं बिसमस्त्रमादिनालोनालमथास्त्रियां' निर्जिग्यतु किल पराभावयांबभूवतुः किल तत्र तत्परस्तात् तनालपराभवे चित्रं आश्चर्यं किं न किंचिदित्यर्थः बलिष्ठ्या निर्बलं जितं चेत्तदाश्चर्यकारकमिति तात्पर्यं अनेन तस्याः भुजयोः कार्श्यं दार्घ्यं च योत्यते । अत्र परिकरालङ्कारः तदुक्तं 'अलङ्कारः परिकरः साभिप्राये विशेषणे' इति ॥ ३५ ॥

तत्केशपाशावजितात्मबर्हभारस्य वासः शिखिनो वनेषु ।
चक्रे जनस्य स्पृशतीति शङ्कां चेतस्तिरश्चामपि जातु लज्जाम् ॥४१

अन्यापि कन्या जितसिद्धकन्या तादृग्गुणा तस्य बभूव देवी ।
दोषोऽपि यस्या भुवनत्रयस्य बभूव रक्षोभयनाशहेतुः ॥ ४२ ॥

---

प्रोतस्य प्रकृष्ट ऊर्ध्वं गत्वेत्यर्थः दूरोत्सरण दूरं विप्रकृष्टं यदुत्सरणं गमनं तत् विधित्सु विधातुं कर्तुमिच्छु विधित्सु विपूर्वाद्धात्रः सनंतात् 'सनाशस भिक्षउः' इति उप्रत्ययः समिमीमिति इसादेशः 'अत्र लोपेति अभ्यासलोपः दूरोत्सरणमित्यत्र 'कर्तृकर्मणोः' इति कर्मणि षष्ठी न भवति न लोकेति निषेधात् । मध्ये पक्ष्मभालमध्ये स्वस्थाने इत्यर्थः न तस्थौ न स्थित इति एवं प्रकारेण मे मम वितर्कः ऊहः अस्तीत्यर्थ । उत्प्रेक्षालंकारः ॥ ४० ॥

इदानीं तस्याः केशपाशं वर्णयति । तत्केशेति । तस्याः राज्याः केशाः कचाः 'कचः केशः शिरोरुहः' इत्यमरः तेषा पाशः समूहः 'पाशः कचार्थः संघार्थः' इति त्रिकाण्डशेषः । तेन अवजितानि पराजितानि यानि आत्मबर्हाणि तेषां भारो आत्मबर्हाणि वा भारो यस्य तस्य शिखिनः शिखा चूडा अस्ति यस्य स शिखी तस्य मयूरस्य 'शिखावलः शिखी केकी' इत्यमरः वनेषु अरण्येषु वास. वसतिः तिरश्चामपि तिरः अंचतीति तिर्यंचि तेषां तिरश्चां पशुपक्ष्यादीनामपि 'अचेः ऋत्विगादिसूत्रेण तिर्यक्शब्दे उपपदे क्विन् प्रत्ययः षष्ठीबहुवचने 'अचः' इति अलोपः । चेतः अंतःकरणं कर्तृ जातु कदाचित् 'कदाचिज्जातु सार्धं तु' इत्यमरः लज्जां त्रपां 'मंदाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः स्पृशति प्राप्नोतीत्यर्थः इति एवं प्रकारेण जनस्य लोकस्य शंकां आशंकां चक्रे तेने डुकृञ्करणे लिट् ॥ ४१ ॥

तस्य राज्ञः एवं ज्येष्ठायाः सौंदर्यं वर्णयित्वा न केवल इयं एकैव तस्य राज्ञः पत्नी आसीत् किं तु अन्ये अपि आस्तां इति कथयितुं तयोरपि पाणिग्रहमाह । अन्यापीति । तस्य दशरथस्य जितसिद्धकन्या सिद्धानां देवयोनिविशेषाणां कन्याः सुताः पराजिताः सौंदर्येणेति शेषः सिद्धकन्या यया सा 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः एतादृशी तादृग्गुणा तादृशः ज्येष्ठा यस्याः गुणाः शीलसौंदर्यादयो यस्याः तादृश इत्यत्र त्यदादिषु 'दृशोनालोचने' इति क्विन् 'आसर्वनाम्नः' इत्यात्वं । अन्यापि इतरापि कन्या देवी कृताभिषेका बभूव । यस्याः देव्या इत्यर्थः दोषोऽपि रामराज्याभिषेकविघ्नरूपो दोषोऽपि भुवनानां विष्टपानां त्रयं त्रितयं तस्य अत्रभुवनशब्देन तात्स्थ्यतपर्येन जना लक्ष्यंते अन्यथा भुवनशब्देन विष्टपग्रहणे तस्य रक्षोभयनाशनकर्तृत्वं स्यात् । रक्षोभयात् रावणादियातुधानेभ्यः तद्रूप भीतिः 'यातुरक्षसी' । 'भीतिर्भीः साध्वसं भयं' इत्यमरः । पंचमीमिदेनेति समासः तस्य नाशः ध्वंसः तस्य हेतुः कारणं बभूव । कैकेय्या रामराज्याभिषेकस्य विघ्ने कृतेऽपि यदा त्रिभुवनस्पर्शोद्धारा अन्यायमेव कृतं यदि

सुमन्त्रसूतस्य सुमित्रयाग्नौ पाणिग्रहं लम्भितया द्विजेन।
पुण्यं भवान्या भवहस्तसक्तहस्ताम्बुजाया वपुरालम्बे ॥४३॥
तासु प्रजानामधिपः प्रजार्थी देवीषु चारित्रकुलोन्नतासु।
अदृष्टपुत्राननवन्ध्यदृष्टिश्चिन्ताहृतात्मा र निनाय कालम् ॥ ४४ ॥

---

नैव विघ्नं नाकरिष्यत् तर्हि रावणादिरक्षो नाशोऽपि नाभविष्यत्। एवं च तज्जन्यभीतिरपि नापागमिष्यत् इत्यर्थः। अनुप्रासालङ्कारः ॥ ४२ ॥

सुमित्राविवाहमाह। सुमन्त्रसूतस्येति। द्विजेन द्विः द्विवारं जायते इति द्विजस्तेन जन्मना सावित्र्युपदेशेन चेति द्विवारमित्यर्थः 'जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते' इति वचनात्। वृत्तौ द्विशब्दः सुजर्थविशिष्टः 'दन्तविप्राण्डजा द्विजाः' इत्यमरः अर्थात् कुलगुरुणा वसिष्ठेनेत्यर्थः अग्नौ वह्नौ औपश्लेषिके सप्तमी अभिसामीप्ये सतीत्यर्थः स्पष्टं चैतत् 'तत्र च दीयते' इति सूत्रे 'षण्मासे अतिक्रान्तं दीयते तस्य समासः औपश्लेषिकमधिकरणं' इत्यादिना भाष्ये च। सुमन्त्रः एतन्नामा प्रधानं सूतः सारथिर्यस्य तस्य दशरथस्य कर्तरि षष्ठी पाणि हस्तस्तस्य ग्रहः ग्रहणं 'ग्रहवृदृनिश्चिगमश्चेति' भावे ग्रहधातोरप् विवाहमित्यर्थः 'तथा परिणयोद्वाहोपयामाः पाणिपीडनं' इत्यमरः। लम्भितया प्रापितया लभधातोर्णिजन्तात् प्रयोज्यकर्मण्यन्येषां स्यात्ताना लादयो मताः' इत्युक्तेः 'गतिबुद्धीति' सूत्रेण प्रयोज्यकर्मणि क्तप्रत्ययः। 'लभेश्च' इति नुमागमः सुमित्रया एतन्नामकदशरथपत्न्या कर्त्र्या भवस्य शंकरस्य 'व्योमकेशो भवो भीमः' इत्यमरः। तस्य हस्तः करः तस्मिन् सक्तः लग्नः हस्त एव अंबुजं कमलं यस्याः 'हस्तौ तु पाणिनक्षत्रे' इत्यमरः एतादृश्या भवान्या भवस्य स्त्री भवानी तस्याः 'इन्द्रवरुणेत्यादिना भवशब्दान्ङीपि आनुगागमः। पुण्यं पवित्रमित्यर्थः वपुः शरीरं आलम्ब जगृहे इत्यर्थः लवते कर्मणि लिट्। भवहस्तगृहीतकरपद्मभवानीव शुशुभे इत्यर्थः। अत्र दशरथतात्पर्येण सुमन्त्रसूतो यस्य इति वक्रगत्याश्रयणं चिरार्थकत्वात् प्रकृतानुपयोगाच्च दोषापादकमिति न शक्यं समगतेरेत्यक्षरश्लेषगुणानुगुण्येन वैशेषिकगुणलाभसंभवात् तद्विवाहयात्रायां सुमन्त्रस्यैव सारथित्वसूचनार्थत्वाच्च। अनुप्रासालङ्कारः ॥ ४३ ॥

एवं सतीष्वपि तिसृषु पत्नीषु राज्ञः न पुत्रमुखलाभ इत्याह तास्विति प्रजार्थी प्रजा संततिः एव अर्थः सोऽस्यास्तीति 'अर्थाच्चासंनिहिते' इति इनिः अथवा प्रजा अर्थ्यते इति अर्थयते 'सुप्यजातौ णिनि'। प्रजानां लोकानां संततेश्च अधिपः अधिपातीत्यधिपः अधिपूर्वात् पाते 'आतश्चोपसर्गे' इति कः। अत्र प्रजार्थी अपि प्रजानामधिपः इति विरोधाभासः संतानार्थी प्रकृत्यधिप इति प्रजापदस्यार्थभेदेन विरोधपरिहारः दशरथः चरित्रमेव चारित्रं पातिव्रत्यादिशीलं प्रज्ञादित्वात्स्वार्थे अण् कुलं वंशः सत्कुलमित्यर्थः ताभ्यां उन्नता उच्चाः सच्छीलकुलीनत्वाभ्यां श्रेष्ठा इत्यर्थः एतादृशीषु तासु पूर्वोक्तासु देवीषु कौसल्यादिराज्ञीषु

आसीदयं चन्द्रमसो विशेषस्तद्वक्त्रचन्द्रस्य च भासुरस्य।
बिभर्ति पूर्वः सकलं कुरङ्गं तस्यैव नेत्रद्वितयं द्वितीय ॥ ३७ ॥
कान्तिश्रिया निर्जितपद्मरागं मनोज्ञगन्धं द्वयमेव शस्तम्।
नवप्ररूढं जलजं जलेषु स्थलेषु तस्या वदनारविन्दम् ॥ ३८ ॥

शाद्यनोरिति नुम्। तस्या राज्ञ्या गृहोद्यानसरोगतस्य गृहस्य सद्मन सबाधि उद्यान आक्रीड. 'पुमानाक्रीडउद्यान' इत्यमर तस्य सर. सरोवर तत् गतस्य प्राप्तस्य द्वितीयाश्रितेत्यादिना समास अङ्कुरदस्य रोहति प्रादुर्भवति इति रुह 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यय। अप्सु उदके रुह अङ्कुरह कमलं साधन कृतेति समास तस्य राग रक्तिमा हस्ते करे तिष्ठतीति हस्तस्थ 'सुपिस्थ इति स्थाधातो कप्रत्यय। अभ्रगतो दूरोपि राग यया ओष्ठेन अपहृत तस्या गृहोद्यानसरोगतकमलराग हस्तसुलभ इति किं वर्ण्य ॥ ३६ ॥

आसीदिति। भासते तच्छील भासुरः 'भञ्जभासमिदोघुरच्' इति घुरच् प्रत्यय। इदानीं तस्या मुखचद्र वर्णयति। आसीदिति। तस्य भासुरस्य देदीप्य मानस्य चद्रमस. विधो तस्या राज्ञ्या वक्त्र मुख तद्वक्त्र 'वक्त्रास्ये वदन तुड' इत्यमर. तद्वक्त्रमेव चद्र शशी तस्य च। च समुच्चये 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमर। अय वक्ष्यमाण विशेष भेद आसीत् अस्तेर्लङ् 'अस्ति सिच्' इतीट् भेदमेवाह। बिभर्तीति। पूर्व प्रसिद्धचद्रमा सकल समग्र 'समग्रं सकलं पूर्णं' इत्यमर कुरग मृग 'मृगेकुरगवातायुः' इत्यमर। बिभर्ति धारयति भृञ कर्तरि लट् दलु श्लुः द्वित्वमित्त्वे। द्वितीय द्वयो पूरणो द्वितीय मुखचद्रमा इत्यर्थ द्वेस्तीय इति तीयप्रत्यय। तस्य इव कुरगस्य इव नेत्रद्वितय द्वौ अवयवौ यस्य तद्वितय नेत्रयो नयनयो द्वितय बिभर्ति धारयति। व्यतिरेकालकार 'व्यतिरेको विशेषश्चेदुपमानोपमेययो' इति लक्षणात्॥ ३७

पुनरपि भग्यतरेण मुखमेव वर्णयति। कान्तीति। कान्ते शोभाया श्रीः सपत्ति तया निर्जित नि शेषेण पराजित पद्मराग शोणरत्न येन तत् 'निर्जितपद्मराग' शोणरक्त लोहितक पद्मरागः' इत्यमर मनोज्ञगध मनोज्ञ मजुल गध आमोदो यस्य 'मनोज्ञ मजु मजुल' इत्यमर 'गधो गधक आमोदे लेशे सबधगर्वयो' इति विश्व। एतादृश द्वयमेव द्वौ अवयवौ यस्य तद्द्वय शस्त प्रशस्त शसुस्तुतौ कर्मणि क्त अर्थाल्लोकैरिति कर्ता किं तद्द्वयमित्यत आह जलेषु उदकेषु नवप्ररूढ नवं नूतन च तत् प्ररूढं च विकसित च एतादृश जलज कमल' सप्तम्यां जनेड' इति ड प्रत्यय स्थलेषु स्थलीषु। जानपदी स्थल-स्थली' इत्यमर। तस्या राज्ञ्या वदनारविंद मदत्यनेनेति वदन 'करणाधिकरणयो' इत्यनेन करणे ल्युट् अराकाराणि पत्राणि विंदतीति अरविंद 'गवादिषु विंदे ति शप्रत्यय शेमुचादीनामिति नुम्। वदनमेव अरविंद 'अरविंद महो-

इन्दीवरस्यान्तरमेतदस्या नेत्रोत्पलस्यापि यतो हिमांशोः ।
त्विषोऽपि नैकं सहते मुखाख्यमाक्रम्य तस्थावपरं शशाङ्कम् ॥३९
युग्मं भ्रुवोश्चञ्चलजिह्मपक्ष्मसम्पर्कभीत्यासितलोचनायाः ।
प्रोक्षस्य दूरोत्सरणं विधित्सु मध्ये न तस्याविति मे वितर्कः ॥४०॥

---

त्पल' इत्यमरः तुल्ययोगितालंकारः रूपकं च तदुक्तं 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति प्रकृते वर्ण्यस्य मुखस्य अवर्ण्यस्य कमलस्य च एकस्यां प्रशंसनक्रियायामन्वयान् लक्षणसमन्वयः ॥ ३८ ॥

इदानीं नेत्र वर्णयति । इंदीवरस्य कमलस्य यद्यपि इंदीवरं चंद्रविकासि कमलं तथापि प्रकृते कमलसामान्याभिप्रायेण प्रयुक्तमिति ज्ञेयं अन्यथा कुमुदजातेश्चंद्रबंधुत्वान् हिमांशोस्त्विषोऽपि नैक सहते इत्युत्तरग्रंथासंगतिः स्यात् अस्याः राज्ञ्याः नेत्रोत्पलस्य नेत्रमेव लोचनमेव उत्पलं कमलं तस्यापि तस्य चेत्यर्थः अपिः समुच्चये इंदीवरस्य नेत्रोत्पलस्य चेत्यर्थः 'स्यादुत्पलं कुवलयं' इत्यमरः 'गर्हा समुच्चयप्रश्नशंकासंभावनास्वपि' इत्यमरः । एतत् वक्ष्यमाणमित्यर्थः अंतरं भेदः 'अंतरमवकाशावधिपरिधानांतर्धिभेदतादर्थ्ये' इत्यमरः किं तदंतरमित्यपेक्षायामाह । यत इति । यतः हेतोरित्यर्थः एकं प्रथमं कमलमित्यर्थः 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा' इति कोशांतरं हिमांशोः हिमाः तुषाराः अंशवः किरणा यस्य 'तुषारः शीतलः शीतो हिमः सप्तान्यलिंगकाः' 'किरणोस्रमयूखांशु' इत्युभयत्राप्यमरः तस्य चंद्रस्य त्विषोऽपि द्युतीरपि 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः न सहते न मर्षति । अपरं द्वितीयं नेत्रोत्पलमिति यावत् मुखं वक्त्रमिति आख्या तस्य तन्मुखाख्यं मुखसंज्ञमित्यर्थः शशांकं शशः मृगः अंकः चिन्हं यस्य 'उत्संगचिन्हयोरंकः' इत्यमरः तं शशिनमित्यर्थः आक्रम्य व्याप्य तस्थौ स्थितमित्यर्थः स्था धातोर्लिट् । इह अत्र आक्रम्येति पदेन नेत्रयोर्विशालता व्यज्यते । कमलं हिमांशोस्त्विषोऽपि न सहते नेत्रकमलं तु मुखचंद्रमाक्रम्य तस्थौ इति महदंतरमेनयोरित्यर्थः । व्यतिरेकालंकारः 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति लक्षणात् ॥ ३९ ॥

इदानीं भृकुटी वर्णयति । युग्ममिति । असितलोचनायाः सितविरुद्धे असिते नञो विरोधोऽर्थः कृष्णेनीलासितश्यामेत्यमरः असिते कृष्णे लोचने नयने यस्याः सा अत्र 'स्वांगाच्चोपसर्जनादिति ङीप् न भवति 'न क्रोडादि बह्वचः' इति निषेधात् तस्याः राजपत्न्याः भ्रुवोः नेत्रोपरिस्थरोमराज्योः युग्मं युगुलं 'युग्मं तु युगुलं युगं' इत्यमरः । चंचलानि तरलानि पक्षे चपलानि जिह्मानि वक्राणि पक्षे कुटिलस्वभावानि अलसानि वा 'जिह्मस्तु कुटिलेऽलसे' इत्यमरः एतादृशानि यानि पक्ष्माणि नेत्रलोमानि 'पक्ष्म सूत्रादि सूक्ष्मांशे किंजल्के नेत्रलोमनि' इति विश्वः । तेषां संपर्कः संबंधः तस्मात् या भीतिः भयं तया 'हेतौ' इति तृतीया ।

**आसीदयं चन्द्रमसो विशेषस्तद्वक्त्रचन्द्रस्य च भासुरस्य।**
**बिभर्ति पूर्वः सकलं कुरङ्गं तस्यैव नेत्रद्वितयं द्वितीयः ॥ ३७ ॥**
**कान्तिश्रिया निर्जितपद्मरागं मनोज्ञगन्धं द्वयमेव शस्तम्।**
**नवप्रबुद्धं जलजं जलेषु स्थलेषु तस्या वदनारविन्दम् ॥ ३८ ॥**

---

शाच्छ्यनोरिति नुम्। तस्या राज्याः गृहोद्यानसरोगतस्य ह्रदस्य सद्मनः संबाधि उद्यान आक्रीडः 'पुमानाक्रीड उद्यानं' इत्यमरः तस्य सरः सरोवरं तत् गतस्य प्राप्तस्य द्वितीयाश्रितेत्यादिना समासः अंकुरहस्य रोहति प्रादुर्भवति इति रुह 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। अम्बुनि उदके रुहं अंकुरहं कमलं साधनं कृतेति समासः तस्य रागः रक्तिमा हस्ते करे तिष्ठतीति हस्तस्थः 'सुपिस्थ इति स्थाधातोः कप्रत्ययः। अभ्रगतो दूरोऽपि रागः यया ओष्ठेन अपहृतः तस्या गृहोद्यानसरोगतकमलरागः हस्तसुलभ इति किं वर्ण्यं ॥ ३६ ॥

आसीदिति। भासते तच्छीलः भासुरः 'भंजभासमिदो घुरच्' इति घुरच् प्रत्ययः। इदानीं तस्या मुखचंद्रं वर्णयति। आसीदिति। तस्य भासुरस्य देदीप्यमानस्य चंद्रमसः विधोः तस्याः राज्ञ्याः वक्त्रं मुखं तद्वक्त्रं 'वक्त्रास्ये वदनं तुंडं' इत्यमरः तद्वक्त्रमेव चंद्रः शशी तस्य च। चः समुच्चये 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः। अयं वक्ष्यमाणः विशेषः भेदः आसीत् आस्तेर्लङ् 'अस्ति सिचः इतीट्' भेदमेवाह। बिभर्तीति। पूर्वः प्रथिमश्चन्द्रमाः सकलं समग्रं 'समग्रं सकलं पूर्णं' इत्यमरः कुरंगं मृगं 'मृगे कुरंगवातायुः' इत्यमरः। बिभर्ति धारयति भृञः कर्तरि लट् 'रुः श्लुः द्वित्वमित्वं'। द्वितीयः द्वयोः पूरणो द्वितीयः मुखचंद्रमा इत्यर्थः द्वेस्तीय इति तीयप्रत्ययः। तस्य इव कुरंगस्य इव नेत्रद्वितयं द्वौ अवयवौ यस्य तद्द्वितयं नेत्रयोः नयनयोः द्वितयं बिभर्ति धारयति। व्यतिरेकालंकारः 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति लक्षणात् ॥ ३७

इन्दीवरस्यान्तरमेतदस्यानेत्रोत्पलस्यापि यतो हिमांशोः।
त्विषोऽपि नैकं सहते मुखाख्यमाक्रम्य तस्थावपरं शशाङ्कम् ॥३९
युग्मं भ्रुवोश्चञ्चलजिह्मपक्ष्मसम्पर्कभीत्यासितलोचनायाः।
प्रोन्नम्य दूरोत्सरणं विधित्सुमध्ये न तस्याविति मे वितर्कः॥४०॥

---

स्पल' इत्यमरः तुल्ययोगितालंकारः रूपकं च. तदुक्तं 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति प्रकृते वर्ण्यस्य मुखस्य अवर्ण्यस्य कमलस्य च एकस्यां प्रशसनक्रियायामन्वयात् लक्षणसमन्वयः ॥ ३८ ॥

इदानीं नेत्रं वर्णयति। इंदीवरस्य कमलस्य यद्यपि इंदीवरं चंद्रविकासि कमलं तथापि प्रकृते कमलसामान्याभिप्रायेण प्रयुक्तमिति ज्ञेयं अन्यथा कुमुदजातेश्चन्द्रबंधुत्वात् हिमांशोस्त्विषोऽपि नैकं सहते इत्युत्तरग्रंथासंगतिः स्यात् अस्याः बाला नेत्रोत्पलस्य नेत्रमेव लोचनमेव उत्पलं कमलं तस्यापि तस्य चेत्यर्थः अपिः समुच्चये इंदीवरस्य नेत्रोत्पलस्य चेत्यर्थः ' स्यादुत्पलं कुवलयं ' इत्यमरः ' गृही समुच्चयप्रश्नशङ्कासम्भावनास्वपि ' इत्यमरः । एतत् वक्ष्यमाणमित्यर्थः अंतरं भेदः 'अंतरमवकाशावधिपरिधानांतर्धिभेदतादर्थ्ये' इत्यमरः किं तदंतरमित्यपेक्षायामाह । यत इति । यतः हेतोरित्यर्थः एकं प्रथमं कमलमित्यर्थः ' एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ' इति कोशांतरं हिमांशोः हिमा. तुषाराः अंशवः किरणा यस्य 'तुषारः शीतलः शीतो हिमः सप्तान्यलिंगकाः' 'किरणोस्रमयूखांशुः' इत्युभयत्राप्यमरः तस्य चंद्रस्य त्विषोऽपि द्युतीरपि ' त्विधुः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ' इत्यमरः न सहते न मर्षति । अपरं द्वितीयं नेत्रोत्पलमिति यावत् मुखं पद्ममिति आख्या तस्य तन्मुखाख्यं मुखसदृशमित्यर्थः शशांकं शशः मृगः अंकः चिन्हं यस्य 'उत्संगचिन्हयोरंकः' इत्यमरः तं शशिनमित्यर्थः आक्रम्य व्याप्य तस्थौ स्थितमित्यर्थः स्था धातोर्लिट् । हह अत्र आक्रम्येति पदेन नेत्रयोरिंशालना व्यज्यते । कमलं हिमांशोस्त्विषोऽपि न सहते नेत्रकमलं तु मुखचंद्रमाक्रम्य तस्थौ इति महदंतरमेतयोरित्यर्थः ।व्यतिरेकालंकारः ' व्यतिरेको विशेषश्चेदुपमानोपमेययोः ' इति लक्षणात् ॥ ३९ ॥

इदानीं भृकुटी वर्णयति । युग्ममिति । असितलोचनायाः सितविरुद्धे असिते नञो विरोधोऽर्थः कृष्णेनीलासितश्यामेत्यमरः असिते कृष्णे लोचने नयने यस्याः सा अत्र ' स्वांगाच्चोपसर्जनादिति टीप् न भवति ' न क्रोडादि बह्वचः' इति निषेधात् तस्याः राजपत्न्याः भ्रुवोः नेत्रोपरिस्थरोमराज्योः युग्मं युगुलं ' युग्मं तु युगुलं युगं ' इत्यमरः। चंचलानि तरलानि पक्षे चपलानि जिह्मानि वक्राणि पक्षे कुटिलस्वभावानि अलसानि वा 'जिह्मस्तु कुटिलेऽलसे' इत्यमरः एतादृशानि यानि पक्ष्माणि नेत्रलोमानि ' पक्ष्म सूत्रादि सूक्ष्मांशे किंजल्के नेत्रलोमनि ' इति विश्वः । तेषां संपर्कः संबंधः तस्मात् या भीतिः भयं तया ' हेतौ इति तृतीया ।

तत्केशपाशावजितात्मबर्हभारस्य वासः शिखिनो वनेषु ।
चक्रे जनस्य स्पृशतीति शङ्कां चेतस्तिरश्चामपि जातु लज्जाम् ॥४१॥
अन्यापि कन्या जितसिद्धकन्या तादृग्गुणा तस्य बभूव देवी ।
दोषोऽपि यस्या भुवनत्रयस्य बभूव रक्षोभयनाशहेतुः ॥ ४२ ॥

---

त्रोत्सम्य प्रकृष्टं ऊर्ध्वं गत्वेत्यर्थः दूरोत्सरणं दूरं विप्रकृष्टं यदुत्सरणं गमनं तत् विधित्सु विधातुं कर्तुमिच्छु विधित्सु विपूर्वाद्धाञः सन्नंतात् 'सनाशंस भिक्षउः' इति उप्रत्ययः समिमीमिति इसादेशः 'अत्र लोपेति अभ्यासलोपः दूरोत्सरणमित्यत्र 'कर्तृकर्मणोः' इति कर्मणि षष्ठी न भवति न लोकेति निषेधात् । मध्ये पक्ष्मजालमध्ये स्वस्थाने इत्यर्थः न तस्थौ न स्थित इति एवं प्रकारेण मे मम वितर्कः ऊहः अस्तीत्यर्थ । उत्प्रेक्षालङ्कारः ॥ ४० ॥

इदानीं तस्याः केशपाशं वर्णयति । तत्केशेति । तस्याः राज्याः केशाः कचाः 'कचः केशः शिरोरुहः' इत्यमरः तेषां पाशः समूहः 'पाशः कचार्थः संघार्थः' इति त्रिकाण्डशेषः । तेन अवजितानि पराजितानि यानि आत्मबर्हाणि तेषां भारो आत्मबर्हाणि वा भारो यस्य तस्य शिखिनः शिखा चूडा अस्ति यस्य स शिखी तस्य मयूरस्य 'शिखावलः शिखी केकी' इत्यमरः वनेषु अरण्येषु वासः वसतिः तिरश्चामपि तिरः अंचतीति तिर्यंचि तेषां तिरश्चां पशुपक्ष्यादीनामपि 'ऋत्विग्दधृगादिसूत्रेण तिर्यक्शब्दे उपपदे क्विन् प्रत्ययः षष्ठीबहुवचने 'अचः' इति अलोपः । चेतः अतःकरणं कर्तृ जातु कदाचित् 'कदाचिज्जातु सार्धं तु' इत्यमरः लज्जां त्रपां 'मंदाक्षं ह्रीस्त्रपाव्रीडा' इत्यमरः स्पृशति प्राप्नोतीत्यर्थः इति एवं प्रकारेण जनस्य लोकस्य शङ्कां आशङ्कां चक्रे तेने डुकृञ्करणे लिट् ॥ ४१ ॥

तस्य राज्ञः एवं ज्येष्ठायाः सौंदर्यं वर्णयित्वा न केवलं इयं एकैव तस्य राज्ञः पत्नी आसीत् किं तु अन्ये अपि आस्ता इति कथयितुं तयोरपि परिणयमाह । अन्यापीति । तस्य दशरथस्य जितसिद्धकन्या सिद्धानां देवयोनिविशेषाणां कन्याः सुता. पराजिताः सौंदर्येणेति शेषः सिद्धकन्या यया सा 'पिशाचो गुह्यकः सिद्धो भूतोमी देवयोनय.' इत्यमरः एतादृशी तादृग्गुणा तादृशः ज्येष्ठा सदृशाः गुणाः शीलसौंदर्यादयो यस्याः तादृश इत्यत्र त्यदादिषु 'दृशोनालोचने' इति क्विन् 'आसर्वनाम्नः' इत्यात्वं । अन्यापि इतरापि कन्या देवी कृताभिषेका बभूव । यस्याः देव्या इत्यर्थः दोषोऽपि रामराज्याभिषेकविघ्नरूपो दोषोऽपि भुवनानां विष्टपानां त्रयं नितयं तस्य अत्रभुवनशब्देन तात्स्थसंबंधेन जना लक्ष्यंते अन्यथा भुवनपदेन विष्टपग्रहणे तस्य रक्षोभयाद्यसंगतिः स्पष्टैव । रक्षोभयात् रावणादियातुधानेभ्यः तद्भय भीतिः 'यातुरक्षसी' । 'भीतिर्भीः साध्वसं भयं' इत्यमरः । पंच... ते समासः तस्य नाशः ध्वंसः तस्य हेतुः कारणं बभूव । कैकेय्या राम... विघ्ने कृतेऽपि तया त्रिभुवनस्थलोकानां कल्याणमेव कृत यदि

सुमन्त्रसूतस्य सुमित्रयाग्नौ पाणिग्रहं लम्भितया द्विजेन।
पुण्यं भवान्या भवहस्तसक्तहस्ताम्बुजाया वपुरालल्ये ॥४३॥
तासु प्रजानामधिपः प्रजार्थी देवीषु चारित्रकुलोन्नतासु।
अदृष्टपुत्राननचन्द्रदृष्टिश्चिन्ताहृतात्मा न निनाय कालम् ॥ ४४ ॥

---

नेयं सिद्धिं नाकरिष्यत् तर्हि रावणादिरक्षो नाशोपि नामविष्यत्। एवं च तदन्य-भीतिरपि नापागमिष्यत् इत्यर्थः। अनुप्रासालङ्कारः ॥ ४२ ॥

सुमित्राविवाहमाह। सुमन्त्रसूतस्येति। द्विजेन द्विः द्विवारं जायते इति द्विजः तेन जन्मना सावित्र्युपदेशेन चेति द्विवारमित्यर्थः 'जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते' इति वचनात् वृत्तौ द्विशब्दः सुजर्थविशिष्टः. 'दन्तविप्राण्डजा द्विजाः' इत्यमरः अर्थात् कुलगुरुणा वसिष्ठेनेत्यर्थः अग्नौ वन्हौ औपश्लेषिके सप्तमी अग्नि-सामीप्ये सतीत्यर्थः स्पष्टं चैतत् 'तत्र च दीयते' इति सूत्रे 'षण्मासे अतिक्रान्ते दीयते तस्य समासे औपश्लेषिकमधिकरण' इत्यादिना भाष्ये च। सुमन्त्रः एत-न्नामा प्रधानः सूतः सारथिर्यस्य तस्य दशरथस्य कर्तरि षष्ठीय पाणेः हस्तस्य ग्रहः ग्रहणं 'ग्रहवृदृनिश्चिगमश्चेति' भावे ग्रहधातोरप् विवाहमित्यर्थः 'तथा परिणयोद्वा-होपयामाः पाणिपीडन' इत्यमरः। लम्भितया प्रापितया लभधातोर्णिजन्तात् प्रयोज्य-कर्मण्यन्येषां ण्यन्तानां लादयो मता.' इत्युक्ते 'गतिबुद्धीति' सूत्रेण प्रयोज्यकर्मणि क्तप्रत्ययः 'लभेश्च' इति नुमागमः सुमित्रया एतन्नामकदशरथपत्न्या कर्त्र्या भवस्य शङ्करस्य 'व्योमकेशो भवो भीम' इत्यमरः। तस्य हस्तः करः तस्मिन् सक्तं सलग्नं हस्त एव अम्बुजं कमलं यस्याः 'हस्तौ तु पाणिनक्षत्रे' इत्यमरः एतादृश्या भवान्याः भवस्य स्त्री भवानी तस्याः 'इन्द्रवरुणेत्यादिना भवशब्दान्ङीपि आनुगा-गमः। पुण्यं पवित्रमित्यर्थः वपुः शरीरं आलल्ये जगृहे इत्यर्थः लवते कर्मणि लिट्। भवहस्तधृतकरपद्मभवानीव शुशुभे इत्यर्थः। अत्र दशरथ[illegible] सुमन्त्रः सूतो यस्य इति बहुव्रीह्याश्रयणं चिरार्थत्वात् प्रकृतानुपयोगात् दोषापादकमिति न शक्यं समगतरेखसरूपगुणानुगुण्येन वैशेषिकगुण[illegible]समवात् तद्विवाहया-ग्रार्थां सुमन्त्रस्यैव सारथित्वसूचनार्थत्वाच। अनुप्रासा[illegible]कारः ॥ ४३ ॥

एवं सतीष्वपि तिसृषु पत्नीषु राज्ञः न पुत्रसु[illegible]इत्याहतास्विति प्रजार्थी प्रजा संततिः एवं अर्थः सोऽस्यास्तीति 'अर्थ[illegible] निर्दिष्टे' इति इनि अथवा प्रजाः अर्थयते इति अर्थयतेः 'सुप्यजातौ[illegible] णिनि.'। प्रजानां लोकानां संततेश्च अधिपः अधिपतीत्यधिपः अधिपूर्वात्[illegible]ति. 'आतश्चोपसर्गे' इति क। अत्र प्रजार्थी अपि प्रजानामधिपः इति विरोधाभास- संतानार्थी प्रकृत्यधिप इति प्रजापदस्या-र्थभेदेन विरोधपरिहारः दशरथः चरित्रमेव चारित्रं पातिव्रत्यादिशील प्रज्ञादि स्वार्थेऽण् कुलं वंशः सत्कुलमित्यर्थः ताभ्यां उन्नताः उच्चाः सच्छीलकु-लीनत्वाभ्यां श्रेष्ठा इत्यर्थः एतादृशीषु तासु पूर्वोक्तासु देवीषु कौसल्यादिराज्ञीषु

य· कृष्यमाणेपु मृगेपु नागैर्हरीमुखादर्द्धविनिर्गताङ्गै ।
प्रसारितास्य स्वयमेव सत्त्वान् ग्रासीकरोतीव वितत्य जिह्वाम्

नागाङ्गनारत्नमरीचिजालध्वस्तान्धकारप्रकरस्य यस्य ।
निकुञ्जपद्माकरपद्मपण्डैर्विदन्ति रात्रिन्दिवसाविभागम् ॥ ५०

धातुप्रभालोहितपक्षयुग्म श्रीमट्टहालकृतचारुपृष्ठ ।
दिव्यस्य यश्चन्द्रकिणो बिभर्ति रूपश्रिय भासुरचन्द्रकान्त·

य हिमालय दरीमुखात् दरी गुहा सैव मुखे दरीमुख तस्मात् पचमी अर्धे विनिर्गत अर्धविनिर्गत सुप्सुपेतिसमास अर्धविनिर्गत येषा तै नागै सर्पै 'नागे मतगजे सर्प पुन्नागे नागकेसरे' इति हैम । मृगेए णेषु अ कृष्यमाणेषु आकृष्यते इति आकृष्यमाणा आङ्पूर्वात्कृपे कर्मणि शानजादेश यस्य च भावेनेति सप्तमी स्वयमेव आत्मनैव प्रसारितास्य वितत आस्य मुख येन 'वक्त्रास्ये वदन तुड' इत्यमर एतादृश सन् रसना रसज्ञा रसना जिह्वेत्यमर । वितत्य विस्तार्य सत्त्वान् प्राणिन '॰ सायेषु सत्त्वम्' इत्यमर ग्रासीकरोतीव भक्षयतीवेत्यर्थ ग्रासशब्दाच्चि च्वौ इति इत्त्व । उत्प्रेक्षालकार ॥ ४९ ॥

नागेति । नागाना सर्पाणा अगना स्त्रिय तासा रत्नानि मणय तेषा मरीचीना किरणाना जालानि 'भानु करोमरीचि स्त्री' इत्यमर । तै नाशित अधकारस्य ध्वातस्य प्रकर समूहो यस्य 'अधकारोऽ ' इत्यमर 'सपाते प्रकरौघवारनिकरव्यूहा समूहश्चय ' इत्यभिधान । यस्य हिमाद्र्यस्य रात्रिंदिवसविभाग रात्रिश्च दिवा च रात्रिदिव ' दिना' निपातित रात्रिदिवशब्द अच् प्रत्ययात यद्यपि कौमुद्या 'रात्रौ च रात्रिदिव' इति विग्रह कृत तथापि दोषाभूतमह इत्यादिवत् अधिकरणशक्तिप्रधानस्यापि वृत्तौ शक्तिमत्परत्न भवति अत एव 'विभज्य दिवमस्ततद्दिणा विनीयते तेन नवेन यौवनं' इति भारविप्रयोग सगच्छते सम्यग्विभाग अयं दिवस इय रात्रि इत्याकारको भेद त निकु निकुञ्जा पद्मानां कमलानां आकरा खनय खनि स्त्रियामाकर स्यात्' तडागा इत्यर्थ 'पद्माकरस्तडागोऽस्त्र इत्यमर तत्रत्यानि यानि पद्मानि तेषां षण्ड समूहा 'षण्डं पद्मादिसंघाते न स्त्री स्यात्' इति मेदिनी । निकुञ्जाक करपद्मषण्डास्तै विदन्ति जानाति विरुद्धार्थ यदा दृष्यावधेरु । भि सर्वत्र अधकारनाशे जाते रात्रिदिनविभागज्ञान कुत्र यदा अधकार मुकुलितानि तदा रात्रि अन्यथा दिवा इति

'तदुक्तं भेदवैशिष्ट्ययो एकतानुमीलितिके पर्यौ इति ॥

। धातो कोदिपालो या प्रभा धातु प्रभा

स्य क्वणन्निर्झररेणुविद्धैर्वातैर्विधूतागरुपादपान्ते ।
धिज्यधन्वा धनदप्रभावश्चचार मैनाकगुरोर्निकुञ्जे ॥ ५२ ॥

---

वङ्भा' इत्यमरः तया लोहिन रक्तं 'रोहितो लोहितो रक्त' इत्यमरः पक्षयोः र्वयोः युग्म युगल यस्य पक्षे धातुप्रभेव लोहिनं पक्षयो. गरुतोः युग्मं यस्य 'पक्षस्तु मासार्धे गृहसाध्ययोः । चुल्लीरध्रे बले पार्श्वे वर्गे केशात्परश्चये । पिच्छे रोधे देहांगे सहाये राजकुंजरे' इति हेमः।श्रीः शोभा अस्ति यासु ताः श्रीमत्यः ादृश्यः या गुहाः दर्यः 'दरी तु कदरो वाम्री देवखातबिलेगुहा' इत्यमरः ताभिः लकृत चारु मनोहरं पृष्ठं यस्य मयूरपक्षे श्रीः तेजोविशेष. अस्ति यस्य स श्रीन् स चासौ गुहश्च कार्तिकेयश्च तेन अलकृत शोभित चारु सुंदरं पृष्ठ यस्य 'सेनीरग्निभूर्गुहः' इत्यमरः 'सुदरं रुचिरं चारु' इत्यमरः । भासुरः भास्वरः यश्चद्रः तद्तिः मनोरम. अथवा भासुराः देदीप्यमानाः चद्रकांताः मणिविशेषा यस्मिन् यूरपक्षे चद्रकाणां पिच्छगतनेत्राकारचिन्हविशेषाणां अतः मध्यः 'समौ चद्रकमेर्कौ' इत्यमरः भासुरः देदीप्यमानः चद्रकांतो यस्य एतादृशे यो हिमालयः दिवस्य दिविभवः दिव्यः तत्र भवति अधिकारे दिगादित्वाद्यत् अलौकिकस्येत्यः चंद्रकिरणः चंद्रकाः पूर्वोक्ताः मेचकाः यस्य सति स चद्रकी गुहमयूरः तस्य पश्रियं रूपस्य आकृतं. श्रिय शोभां रूपमाकारसौंदर्यमानरेप्वपिदृश्यते' इति त्रिाण्डशेपः । बिभर्ति धारयति आकृति तदाकृतिसाम्यापादकानि विशेषणानि प्रदतान्येव । श्लेषालङ्कारः ॥ ५१ ॥

एवं हिमालयं वर्णयित्वा तत्र दशरथकृत्यमाह । तस्येति । धनदप्रभावः धन दातीति धनदः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः धनदः कुबेरः स इव भावः सामर्थ्यं यस्य 'मनुष्यधर्मा धनदो' इत्यमरः 'स प्रतापः प्रभावश्च' इत्यरः । ज्या मौर्वी आधिगत प्राप्त अधिज्य 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इत्यन समासः 'मौर्वी ज्या सिंजिनी गुणः' इत्यमरः अधिज्य सज्जमिति यावत् नुः चापो यस्य 'धनुश्चापो धन्वशरा' इत्यमरः 'धनुपश्चेत्यनेन समासांतोऽङादेशः दशरथ इत्यर्थः । तस्य पूर्वोक्तस्य मैनाकगुरोः मैनाकस्य गुरुः पिता गुरुर्गीष्पति पित्राद्यौ' इत्यमरः तस्य हिमालयस्येत्यर्थ क्वणति शब्द कुर्वंति ति क्वणंतः शब्दार्थात्क्वणतेर्लट् तस्य शत्रादेश. क्वणतः शब्द कुर्वंतः ये निर्झराः वाहाः 'प्रवाहो निर्झरो झरः' इत्यमरः तेषां रेणव. पांसव' कणा इति यावन् रेणुर्द्वयोः स्त्रियां धूलि. पांसुर्ना न द्वयोरजः' इत्यमर. विद्धैः ताडित. सपृक्तारिते यावन् व्यधताडने कर्मणि क्तः 'ग्रहिज्येति सप्रसारण एतादृशैः वातैः वायुभिः र्तृभिः विधूताः कपिताः एतादृशाः अगरुपादपाः अगरुसज्ञकाः पादैः मूलैः रक्षतीति पादपा वृक्षा. ते अंते यस्य एतादृशे निकुंजे लतादिपिहितस्थले न्धरि-

तूणीरतस्तूर्णमिषुं विकृष्य सन्धाय चापे चपलेतरात्मा ।
रङ्गत्तुरङ्गः क्वचिदाशु धन्वी मार्गं मृगाणां पुरतः स्म रुन्धे ॥ ५३ ॥
उत्कर्णमुत्पुच्छयमानमासे विदर्शिताभ्याहतकन्दुकोत्थम् ।
पारिप्लवाक्षं मृगशाववृन्दमीषन्निपातेन शरेण राजा ॥ ५४ ॥

---

चचार बभ्राम । कणदित्यादिविशेषणद्वयेन वायूनां शीतगुणाधित्व सूचितं तेन च अतीवरमणीयता तस्य पर्वतस्य ध्वनिता । अनुप्रासालंकारः ॥ ५२ ॥

तस्य मृगयारम्भमाह । तूणीरत इति । रंगति गच्छतीति रगन् रगिगतौ इत्यस्माच्छतृप्रत्ययः तुरेण त्वरया गच्छतीति तुरंगः 'गमश्चेति खच् प्रत्ययः 'खचाडिद्वा वाच्यः इति डित्वे 'अरुर्द्विपदजंतस्य मुम्' इति मुमागमः । रगन् शीघ्रगामी तुरगः अश्वो यस्य । चपलेतरात्मा चपलश्चचलात् इतरः अन्यः चपलेतरः स्थिर इति यावत् आत्मा अंतःकरण यस्य धन्व धनुः सः अ-स्यास्तीति धन्वी धनुष्मान् 'व्रीह्यादित्वादिनिः । दशरथः क्वचित् कुत्रचिद्देशे 'किमोदिति' अति प्रत्यये क्वातीति क्वादेशः तूणीरतः तूणीरात् इति तूणीरत 'आद्यादित्वात्तसिः 'तूणोपासगतूणीरनिषगा' इत्यमरः । तूर्णं क्षिप्र 'सत्वर चपलं तूर्णं इत्यमरः । क्रियाविशेषणमिद इषु बाण विकृष्य आकृष्य चापे धनुषि सधाय संयोज्य आशु अविलंबित मृगाणां हरिणानां 'मृगे कुरंग वातायुहरिणाजिनयो-नयः' इत्यमरः । मार्गं पुरतः अध्वान पुरत. पूर्वस्मिन् इति पुरत. 'पूर्वाधराव-राणामसिपुरधवश्चैषा' इत्यनेन अस्तात्यपवादोऽतसुप् पूर्वशब्दस्य पुरादेशश्च पूर्वस्मिन् देशे इत्यर्थः रुधेस्म रुरोधेत्यर्थः लट् । स्मेति स्मयोगे लिडर्थे लट् । अनु-प्रासालंकारः ॥ ५३ ॥

उत्कर्णमिति । राजते इति राजा राज्धातोः कनिन्प्रत्यय' दशरथः पूर्वं विद-र्शितः पश्चादभ्याहतः ताडित. स विदर्शिताभ्याहतः पूर्वकालैकेति समासः एता-दृशो यः कदुक. गेंदुकः 'गेंदुक. कदुक.' इत्यमरः तेन उत्थ उत्प्लुतमित्यर्थः उत्पू-र्वात्तिष्ठतेः सुपीतियोगविभागात् कर्तरिकः आकारलोपः उदस्थाति पूर्वसवर्णः कदु-कप्रहारेण पलायितमिति यावत् अतएव उत्कर्णं उद्गतौ कर्णौ श्रोत्रे यस्य उत्पु-च्छयमान उत्पुच्छयते पुच्छमुदस्यति इति उत्पुच्छयमान 'पुच्छभाण्डचीवराण्णिङ्' इति उत्पूर्वात् पुच्छशब्दात् कर्तरि शानच् पारिप्लवे चचले अक्षिणी नेत्रे यस्य 'चञ्च-ल तरल चैव पारिप्लवपरिप्लवे' इत्यमर । 'बहुव्रीहौ सक्थ्यक्ष्णो. स्वांगात् षच्' इति षच् समासांतः एतादृश मृगाणां कुरंगाणां शावाः पोता 'पृथुकः शावकः शिशु.' इत्यमरः तेषां वृद समूहः ईषत् निपातः पतन यस्य 'किंचिदीषन्मनागल्पे' इत्यमरः शरेण बाणेन आसे उच्चिक्षेप दूरीचकारेति यावत् आङ् पूर्वादसुक्षेपणे' इत्यस्माल्लिट् 'उ-दस्यत्यूह्योरिति वाच्य' इत्यात्मनेपद । स्वभावोक्तिरलंकारः 'स्वभावोक्तिः -- जात्यादिस्थस्य वर्णन' इति लक्षणात् ॥ ५४ ॥

मध्यं त्वमुतुङ्गबलः करेण मा पीडयस्व प्रसभं ममेति ।
विवक्षुणेवाभिमुखं विकृष्टचापेन नेमे मनुवंशकेतोः ॥ ५५ ॥
स्वमुत्पपातैणवरो नृपेण विद्धोऽपि पूर्वाहितवेगवृत्त्या ।
स्वर्लोकमन्तःकरणस्य यातुः प्रीत्यानुयात्रामिव कर्तुकामः ॥५६॥
अन्योन्यवक्त्रार्पितपल्लवाग्रग्रासं नृवीरस्य कुरङ्गयुग्मम् ।
प्रियानुनीतौ भृशमिष्टचाटुचेष्टस्य घाताभिरतिं निरासे ॥ ५७ ॥

मध्यमिति । उत्तुंग अत्युच्च 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुंगे' । बलं सामर्थ्यं यस्य अतिबल इत्यर्थः एतादृशः त्वं मम मध्यं मध्यभागं मध्यदेशं च करेण हस्तेन बलिना च प्रसभं बलात्कारेण क्रियाविशेषणमिदं बलात्कारेणेत्यर्थः 'प्रसभं तु बलात्कारे' इत्यभिधानं । मा पीडयस्व मा व्यथयस्व यद्यपि माङि लुङीति सूत्रेण सर्वलकारापवादेन लुङत्र भाव्यं तथापि नायं माङ् किंतु निषेधार्थको माशब्दोऽयं इति न दोषः इति एवं प्रकारेण विवक्षुणा वक्तुमिच्छुः विवक्षुः तेन ब्रूधातोः सन्नतात् 'सनाशंस भिक्ष उः' इति उप्रत्ययः विकृष्टं चापेन विकृष्टः आकृष्टः एतादृशो यश्चापः धनुः तेन कर्त्रा मनोः स्वायंभुवस्य वंशः अन्ववायः 'वंशोऽन्ववायः संतानो' इत्यमरः । तस्य केतुरिव केतुना यथा कीर्तिर्भवति तद्वन्मनुवंशस्य कीर्तिकर इत्यर्थः तस्य दशरथस्य अभिमुखं मुखस्य संमुखं अभिमुखं 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः नेमे नतमित्यर्थः नमूधातोः भावे लिट् द्विल एत्वाभ्यासलोपौ । श्लेषः उत्प्रेक्षालंकारश्च ॥ ५५ ॥

स्वमिति । नृपेण नॄन्पातीति नृपः 'आतोऽनुपसर्गे कः' इति क प्रत्ययः तेन दशरथेन विद्धोऽपि ताडितोऽपि व्यधताडने कर्मणि क्तः सम्प्रसारणं च एणानां हरिणानां वरः श्रेष्ठः 'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगः' इत्यमरः 'वरो जामातरि श्रेष्ठे' इत्यभिधानं स्वर्लोकं स्वः स्वर्गः स चासौ लोकः भुवनं लोकस्तु 'भुवने जने' इत्यमरः याति तच्छीलः यातृ तस्य यातुः 'आक्वेस्तच्छीलेति अधिकारे 'तृन्' इति तृन् प्रत्ययः अतएव न लोकेति निषेधात् स्वर्लोकमित्यत्र कर्मणि षष्ठी न यातुरित्यस्य अन्तःकरणविशेषणत्वेऽपि 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावात् नुमादिकार्यं न एतादृशान्तःकरणस्य चित्तस्य तदुपलक्षितलिंगदेहस्येत्यर्थः प्रीत्या साहचर्यजन्यप्रेम्णा अनुयात्रां अनुगमनं कर्तुकामः इव कर्तुं कामो इच्छा यस्य स कर्तुकामः 'तुंकाममनसोरपीति' मलोपः पूर्वं बाणवेधात्पूर्वं आहिता स्थापिता या वेगवृत्तिः जववर्तनं तया स्वं आकाशं उत्पपात उद्गगाम उड्डिक्ये इति यावत् । उत्प्रेक्षालंकारः ॥ ५६ ॥

अन्योन्य इति । अन्योन्ययोः परस्परयोः वक्त्रे मुखे बहुलग्रहणात् अन्यपदयोर्न समासवत् 'असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः' इति सुरादेशः । अन्योन्यवक्त्रयोः अर्पितौ दत्तौ पल्लवानां किसलयानां अग्राणि 'पल्लवोऽस्त्री किस

ऋज्वागता तस्य मुहुर्मृगाणां पङ्क्तिः शरेण ग्रथितेव रेजे।
मुक्तेन पूर्वस्य मुखे परेषां दृष्टेन सद्यः सममन्तरेषु ॥ ५८ ॥
आधावतस्तेन धनुर्धरेण मध्येललाटं महिषस्य मुक्तः।
अस्कन्नवेगो दृढदेहभेदे लाङ्गूलसारत्वमियाय बाणः ॥ ५९ ॥

---

इत्यमरः। तेषां ग्रासो कवलो 'ग्रासस्तु कवलः पुमान्' इत्यमरः अन्योन्य वक्त्रार्पितौ पल्लवग्रासौ येन एतादृश कुरंगयुग्मे कुरंगयोः हरिणयोः युग्मं युगल कर्तृ प्रियाणां इष्टानां स्त्रीणामित्यर्थः अनुतीतिः अनुकूलनं अनुनय इत्यर्थः भृश अत्यंत 'अतिवेलभृशात्यर्था' इत्यमरः इष्टाः अभीप्सिताः चाटूनां प्रियवाक्यानां चेष्टाः व्यापारा यस्य नृषु वीरः नृवीरः तस्य दशरथस्य हनन घातः हंतेर्भावे घञ् उपधावृद्धिः तत्वं घत्वं च घाते नाशे या अभिरतिः रुचिः तां निरासे दूरीचकारेत्यर्थः निर्पूर्वात् असुक्षेपणे इत्यस्मात् कर्तरि लिट् 'उपसर्गादसत्यूह्योरिति वाच्यं' इत्यात्मनेपद । कुरंगयुगमस्य तादृशं परस्परमुखपल्लवाग्रग्रासमर्पण विलोक्य स्वयमपि एवमेव प्रियानुनय करोमीति स्मृत्वा तादृश तयोः प्रेमरसविघातो माभूत् इति बाण न मुमुचे इति तात्पर्यं। ऊर्जस्विदलकारः 'रसभावतदाभासभावशांतिनिबंधनाः। चत्वारो रसवत्प्रेयऊर्जस्वित्यसमाहितमिति' लक्षणात्। प्रकृते च अनौचित्येन प्रवृत्तः भावाभासः शृंगाररसांगं इतिलक्षणसमन्वयः ॥ ५७ ॥

ऋज्वागतेति। मुहुः वारवार 'मुहुः पुनः पुनः शश्वत्' इत्यमर. ऋज्वागता ऋज्वीचासौ आगता च ऋजु यथास्यात्तथा आगतेति वा अस्मिन् पक्षे सुप्सुपेतिसमासः मृगाणां हरिणानां पंक्तिः परपरा कर्त्री पूर्वस्य प्रथममागतस्येति यावत् मुखे वक्त्रे मुक्तेन उत्सृष्टेन मुच्धातोः कर्मणिक्तः सद्यः सपदि 'सद्यः सपदि तत्क्षणे' इत्यमरः सद्यः परत्परार्थेभिनिपात. परेषां इतराणां मृगाणा- [illegible] अंतरेषु अवकाशेषु 'अंतरमवकाशावधि' इत्यमरः सम तुल्यदर्शनः [illegible]। दृष्टेन अवलोकितेन तस्य दशरथस्य शरेण बाणेन ग्रथि- [illegible] रेजे शुशुभे राजदीप्तौ इत्यस्माल्लिट् 'फणां च सप्तानामिति [illegible]। ऋज्वागता मृगपंक्ति. तस्य बाणेन प्रथममृगमुखे वेधेपि [illegible] येन दुर्लक्ष्यसूक्ष्मवेधकाला अल्पतचक्रवत् बाणग्रथितेव इति तात्पर्यं। उत्प्रेक्षालंकारः ॥ ५८ ॥

आधावत इति। धनुर्धरेण धरतीति धरः पचादित्वादच् धनुष. चापस्य धरः [illegible] धन्विना इति यावत् तेन दशरथेन आसमतात् धावतीति तस्य आधा- [illegible] धावुगतिशुद्धोः अस्य रूपं महिषस्य लुलायस्य मध्येललाट ललाटस्य [illegible]स्य मध्ये इति मध्येललाट 'ललाटमलिक गोधि' इत्यमरः। पारे मध्ये [illegible] वा' इत्यव्ययीभाव अस्कन्नवेग न स्कन्नः गतः 'स्कंदि-

स द्वीपिनोऽथ द्विपराजगामी हन्तु तुरङ्ग रचितक्रमस्य ।
जघान देह प्रतिबिन्दु बाणैरेकेन दुर्लक्ष्यभुज क्षणेन ॥ ६० ॥
तस्मिन्नृपे पाटयति प्रसह्य शस्त्रेण गण्ड भिषजीव भीमम् ।
तदीयनादप्रतिनिस्वनेन श्वासादिवाद्रिर्भृशमुन्ननाद ॥ ६१ ॥

---

गतिशोषणे' क्तप्रत्ययत्वनत्त्व च अस्कन्न अकुण्ठित इति यावत् एतादृश वेग रयो यस्य 'वेगस्तरस्वीतु रय सदा बाण शर दृढ यो देह तस्य भेदे विदारणे सति लांगूलस्य पुच्छस्य सार स्थिरांश तस्य भाव लांगूलसारत्व इयाय प्राप इण् गतौ लिट् द्वित्ववृद्धि । ललाटे विद्धो बाण वेगेन शरीर भित्त्वा पुच्छमध्य गत स्थित अनेन तस्य अतीव बलाढ्यत्व सूचित ॥ ५९ ॥

स इति । अथ महिषवेधानतर । मङ्गलानंतरारम्भ' इत्यमर द्वाभ्यां कुलकमाह भ्यां विभति उदकादिक ते द्विपाः हस्तिन 'सुपीतियोगविभागात् क तेषां राजा प्रभु 'राजा प्रभुर्नृपे चन्द्रे' इति कोशांतर 'राजाह सखिभ्यष्टच्' तद्वद्गच्छतीति द्विपराजगामी 'कर्तर्युपमाने इति णिनि एतादृश स दशरथ दु खेन लक्ष्यते ज्ञायते इति दुर्लक्ष्य भुज बाहुर्यस्य लक्ष्यतेर्कहलोरिति ण्यत् निरंतरबाणवर्षासारकर्तृत्वात् अलक्ष्ये भुज इत्यर्थ कवचपिहितत्वाद्वा अलक्ष्यभुज एतादृश स दशरथ तुरग घोटक हन्तु नाशितु रचित कृत क्रम पादविक्षेपो येन स्वाधिष्ठिताश्वनाशप्रवृत्तस्येत्यर्थ द्वीपिन व्याघ्रस्य शार्दूलद्वीपिनौ व्याघ्र इत्यमर ।देह शरीरं बाणै इषुभि एकेन क्षणेन त्रिंशद्भि कलाभिरित्यर्थ । 'अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तुता कला । तास्तुत्रिंशत्क्षण ' इत्यमर । बिन्दून् बिंदून् इति प्रतिबिंदु 'अव्यय विभक्ती'त्यादिना वीप्सायामव्ययीभाव शरीरस्थ सकलबिंदूनित्यर्थ जघान प्रजहारेत्यर्थ हन् हिंसागत्यो कर्तरि लिट् द्वित्व अभ्यासाचेति कुत्व । अनुप्रासालङ्कार ॥ ६० ॥

तस्मिन्निति । भिषजि वैद्ये ' भिषग्वैद्यौचिकित्सके ' इत्यमर शस्त्रेण क्षुरिकादिना भीम भयङ्कर गण्ड इव पिटकमिव तस्मिन् पूर्वोक्ते नृपे दशरथे प्रसह्य हठात् 'प्रसह्य तु हठार्थकम्' इत्यमर भीम उग्र गण्ड खड्गिनं 'गण्डस्तु वीरे पिण्ड चिन्हयो । कपोले गण्के योगे वाजिभूषणबुद्बुदे ।' इति हैम । शस्त्रेण असत्यादिना पाटयति विदारयतीति पाटयन् पाटयति विदारयति सतीत्यर्थ । पट्धातोर्णिजंतात्शतृप्रत्यय यस्य च भावेनेति सप्तमी । अद्रि हिमाचल श्वासादिव

**ऋज्वागता तस्य मुहुर्मृगाणां पङ्क्तिः शरेण ग्रथितेव रेजे।**
**मुक्तेन पूर्वस्य मुखे परेषां दृष्टेन सद्यः सममन्तरेषु ॥ ५८ ॥**
**आधावतस्तेन धनुर्धरेण मध्येललाटं महिषस्य मुक्तः।**
**अस्कन्नवेगो दृढदेहभेदे लाङ्गूलसारत्वमियाय बाणः ॥ ५९ ॥**

---

इत्यमरः। तेषां भावौ वक्सौ 'भावस्तु चपलः पुमान्' इत्यमरः अन्योन्य बक्त्रा॰र्पितौ पङ्कजग्रासौ येन एतादृशं कुरङ्गयुग्मे कुरंगयोः हरिणयोः युग्मं युगलं कर्तृ प्रियाणां इष्टानां स्त्रीणामित्यर्थः अनुनीतिः अनुकूलनं अनुनय इत्यर्थः भृशं अत्यतं 'अतिवेलभृशात्यर्थां' इत्यमरः इष्टाः अभीप्सिताः चाटूनां प्रियवाक्यानां चेष्टाः व्यापारा यस्य नृषु वीरः नृवीरः तस्य दशरथस्य हननं घातः हंतेर्भावे घञ् उपधावृद्धिः तस्य घत्वं च घाते नाशे या अभिरतिः रुचिः तां निरासे दूरीचकारेत्यर्थः निर्पूर्वात् असुक्षेपणे इत्यस्मात् कर्तरि लिट् 'उपसर्गादस्यत्यूह्योरिति वाच्यं' इत्यात्मनेपदं । कुरङ्गयुग्मस्य तादृशं परस्परमुखपङ्कजग्रासमर्पणं विलोक्य स्वयमपि एवमेव प्रियानुनयं करोमीति स्मृत्वा तादृशं तयोः प्रेमरसविघातो माभूत् इति बाणं न मुमुचे इति तात्पर्यं। ऊर्जस्विदलंकारः 'रसभावतदाभासभावशांतिनिबंधनाः । चत्वारो रसवत्प्रेयऊर्जस्वित्समाहितमिति' लक्षणात् । प्रकृते च अनौचित्येन प्रवृत्तः भावाभासः शृंगारस्यांग इतिलक्षणसमन्वयः ॥ ५७ ॥

ऋज्वागतेति । मुहुः वारंवारं 'मुहुः पुनः पुनः शश्वत्' इत्यमरः ऋज्वागता ऋज्वीचासौ आगता च ऋजु यथास्यात्तथा आगतेति वा अस्मिन् पक्षे सुप्सुपेतिसमासः मृगाणां हरिणानां पंक्तिः परंपरा कर्त्री पूर्वस्य प्रथममागतस्येति यावत् मुखे वक्त्रे मुक्तेन उत्सृष्टेन मुच्धातोः कर्मणिक्त. सद्यः सपदि 'सद्यः सपदि तत्क्षणे' इत्यमरः सद्य. पदत्परार्येभिनिपातः परेषां इतराणां मृगाणामित्यर्थः अन्तरेषु अवकाशेषु 'अन्तरमवकाशावधि' इत्यमर. समं तुल्यदर्शनक्रियाविशेषणमिदं । दृष्टेन अवलोकितेन तस्य दशरथस्य शरेण बाणेन ग्रथिगुंफितेव रेजे शुशुभे राजृदीप्तौ इत्यस्माल्लिट् 'फणां च सप्तानामिति । ऋज्वागता मृगपंक्तिः तस्य बाणेन प्रथममृगमुखे वेधेपि शतपत्रभेदनन्यायेन दुर्लक्ष्यसूक्ष्मवेधकाला अलातचक्रवत् बाणग्रथितेव इति तात्पर्यं। उत्प्रेक्षालंकारः ॥ ५८ ॥

आधावत इति । धनुर्धरेण धरतीति धरः पचादित्वादच् धनुषः चापस्य धरः धारकः धन्विना इति यावत् तेन दशरथेन आसमतात् धावतीति तस्य आधावतः धावुगतिशुद्ध्योः अस्य रूप महिषस्य लुलायस्य मध्येललाटं ललाटस्य बाणस्य मध्ये इति मध्येललाटं 'ललाटमलिकं गोधिः' इत्यमरः । पारे मध्ये षष्ठ्या वा' इत्यव्ययीभाव अस्कन्नवेग न स्कन्नः गतः शुष्को वा अस्कन्नः 'स्कंदि-
जात्यादिरू-

स द्वीपिनोऽथ द्विपराजगामी हन्तुं तुरङ्गं रचितक्रमस्य ।
जघान देहं प्रतिबिन्दु बाणैरेकेन दुर्लक्ष्यभुजः क्षणेन ॥ ६० ॥
तस्मिन्नृपे पाटयति प्रसह्य शस्त्रेण गण्डं भिषजीव भीमम् ।
तदीयनादप्रतिनिस्वनेन त्रासादिवाद्रिर्भृशमुन्ननाद ॥ ६१ ॥

---

गतिशोषणे' क्तप्रत्ययत्यनत्त्व च अस्कन्न अकुण्ठित इति यावत् एतादृश वेग रयो यस्य 'वेगस्तरस्वीतु रय सदा बाण शर दृढ यो देह तस्य भेदे विदारणे सति लाङ्गूलस्य पुच्छस्य सार स्थिरांश तस्य भाव लाङ्गूलसारत्व इयाय प्राप इण् गतौ लिट् द्वित्ववृद्धि । ललाटे विद्धो बाण वेगेन शरीर भित्वा पुच्छमध्य गत स्थित अनेन तस्य अतीव बलाढ्यत्व सूचित ॥ ५९ ॥

स इति । अथ महिषवेधानतर । मगलानतरारभ' इत्यमर द्वाभ्यां शुण्डाक्षुण्डाभ्यां पिबति उदकादिक ते द्विपाः हस्तिन 'सुपीतियोगविभागात् क' तेषां राजा प्रभु 'राजा प्रभुर्नृपे चन्द्रे' इति कोशांतर 'राजाह सखिभ्यष्टच्' तद्वद्गच्छतीति द्विपराजगामी 'कर्तर्युपमाने' इति णिनि एतादृश स दशरथ, दु'खेन लक्ष्यते ज्ञायते इति दुर्लक्ष्यः भुज बाहुर्यस्य लक्ष्यतेर्ऋहलोरिति ण्यत् निरतरबाणवर्षासारकर्तृत्वात् अलक्ष्ये भुजइत्यर्थ कवचपिहितत्वाद्वा अलक्ष्यभुज एतादृश स दशरथ तुरग घोटक हन्तु नाशितु रचित कृत क्रम' पादविक्षेपो येन स्वाधिष्ठिताश्वनाशप्रवृत्तस्येत्यर्थ द्वीपिन व्याघ्रस्य 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमर ।देह शरीरं बाणै इषुभि एकेन क्षणेन निशाद्भि कलाभिरित्यर्थ । 'अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ता कला । तास्तुत्रिंशत्क्षण ' इत्यमर । बिन्दून् बिंदून् इति प्रतिबिंदु 'अव्यय विभक्तीत्यादिना वीप्सायामव्ययीभाव शरीरस्य सकलबिंदूनित्यर्थ जघान प्रजहारेत्यर्थ हन् हिंसागत्यो कर्तरि लिट् द्वित्व अभ्यासाच्चेति कुत्व । अनुप्रासालङ्कार ॥ ६० ॥

तस्मिन्निति । भिषजि वैद्ये 'भिषग्वैद्योचिकित्सके' इत्यमर शस्त्रेण च्छुरिकादिना भीम भयकर गड इव पिटकमिव तस्मिन् पूर्वोक्ते नृपे दशरथे प्रसह्य हठात् 'प्रसह्य तु हठार्थकम्' इत्यमर भीम उग्र गड खड्गिन 'गडस्तु वीरे पिटक चिह्नयो । कोले गडरे योगे वाजिभूषणबुद्बुदे ।' इति हैम । शस्त्रेण असिआदिना पाटयति विदारयतीति पश्यन् पाटयति विदारयति सतीत्यर्थ । पट्धातोर्णि

युद्धाय यूथादभितो निवृत्तं क्रोडं मुहुः क्रोधविमुक्तनादम्।
शरस्य लक्ष्यं शरजन्मतुल्यश्चकार चक्रीकृतचापदण्डः ॥ ६२ ॥

एवं मृगव्यश्रमसेवितस्सन् विश्रामहेतोः स विहाय वाहम्।
समीरणानर्तितवेतसाग्रं वीरस्सरस्तीरमलञ्चकार ॥ ६३ ॥

---

युद्धायेति। शरेषु तृणविशेषेषु जन्म उत्पत्तिः यस्य 'गुहस्ते जनकः शरः' इत्यमरः कार्तिकेयः तेन तुल्यः समः तत्तुल्यपराक्रमीति यावत्। चापस्य धनुषः दण्डः यष्टिः चक्रीकृतः चक्रवद्वर्तुलीकृतः बाणसंधाने हि धनुश्चक्रवद्भवति चक्रशब्दाच्वि. च्वेर्लोपः अस्य च्वावितीत्व कुगतीति समासः चक्रीकृतः चापदण्डो येन निरतरं युद्धप्रवृत्त इत्यर्थः एतादृशो राजा यूथात् कुलात् ' सजातीयैः कुलं यूथं ' इत्यमरः अभितः उभयतः ' पर्यभिभ्यां च' इति तसि प्रत्ययः। युद्धाय युद्धं कर्तुं निवृत्तं निर्गतमित्यर्थः युद्धायेत्यत्र ' क्रियार्थोपपदस्येति चतुर्थी मुहुः वारंवारं क्रोधेन कोपेन विमुक्तः उत्सृष्टः नादो ध्वनिः येन एतादृशं क्रोडं वराहं ' क्रोडो भूदार इत्यपि ' इत्यमरः। शरस्य बाणस्य लक्ष्यं शरव्यं ' लक्ष्यं लक्षं शरव्यं च ' इत्यमरः। चकार विदधौ। करोतेर्लिट्। अनुप्रासालंकारः ॥ ६२ ॥

एवमिति। एवं पूर्वोक्तप्रकारेण मृगव्यस्य मृगयायाः ' आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियां ' इत्यमरः। तस्य यः श्रमः खेदः तेन सेवितः सन् युक्तः इति यावत् सन् अभ्यर्हितः इति वा ' सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ' इत्यमरः। वीरः शूरः सः दशरथः अथवा वीरः सः एव मृगव्यश्रमसेवितः सन् इति अन्वयः। विश्रामं विश्रांतिः स एव हेतुः कारणं तस्य विश्रामहेतोः विश्रान्त्यर्थमित्यर्थः। यद्यपि विपूर्वाच्छ्रम धातोर्भावेघञि 'नोदात्तोपदेशस्य मा तस्यानाचमेः' इति वृद्धिनिषेधः प्राप्नोति। तथा च विश्रमं इति अपाणिनीयं तथापि नञ् घटितमनित्यमिति वा श्रम एव श्रामः प्रज्ञादित्वात्स्वार्थिकेणा विशिष्टः श्रामः विश्रामः इति वा श्रमु धातोर्णिचि वा चित्तविरागे इत्यतो वेत्यनुवृत्त्या व्यवस्थितविभाषाश्रयणात् मित्वाभावे घञ् एरच् ' इति सिद्धस्य गनिर्धितनीयेति न्यायेन प्रयोगगतिर्द्रष्टव्या। अत एव ' रोगी ... परान्नजीवी परावसथशायी। यज्जीवति तन्मरणं यन्मरणं सोऽस्य ...' इत्यभियुक्तप्रयोगं सगच्छते। वाहं हयं ' वाजिवाहार्वगन्धर्वहयसैंधव... ' इत्यमरः। विहाय त्यक्त्वा समीरणेन वायुना ' जगत्प्राणसमीरणाः ' इत्यमरः। आनर्तितानि ईषत् कंपितानि वेतसानां वंजुलानां अग्राणि अग्रभागानि यस्मिन् ' अथ वेतसे। रथाभ्रपुष्पविदुलशीतवानीरवंजुलाः ' इत्यमरः। एतादृशं सरस्तीरं सरसः सरोवरस्य तीरं तटं अलंचकार भूषयामास उपविवेशेति यावत् करोतेर्लिट्। अनुप्रासालंकारः ॥ ६३ ॥

सुगन्धिसौगन्धिकगन्धहृद्यः सरोऽनिलः सारसनादकर्षी ।
आधूतराजीवरजोवितानैरङ्गं पिशङ्गं नृपतेश्चकार ॥ ६४ ॥
अथास्तकूटाहतमुग्ररागं समुल्लसद्दीधितिविस्फुलिङ्गम् ।
स्पृष्टं घनेन क्वचिदास लोहखण्डं बृहत्तममिवार्कबिम्बम् ॥ ६५ ॥
बिम्बं पतङ्गस्य ददर्श हृष्टि दृष्टं प्रतीच्यामवनीश्वरेण ।
भित्तौ विनीलत्विषि लम्बमानमेकं यथा काञ्चनतालवृन्तम् ॥६६॥

सुगन्धीति । सुष्ठु गन्धो येषां तानि सुगन्धीनि 'गन्धस्येदुत्पूतिसुसुरभि' इति बहुव्रीही समासान्तः इः एतादृशानि सौगन्धिकानि कल्हाराणि 'सौगन्धिकं तु कल्हारं' इत्यमरः । तेषां यो गन्धः आमोदः तेन हृद्यः हृदयस्य प्रियः 'हृदयस्य प्रिय.' इति यत्ति हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः सारसानां पुष्कराह्वानां नाद शब्द. तं कर्षति इति सारसनादकर्षी 'सुप्यजातौ' णिनि णिनिः सारसपक्षि ध्वनिविशिष्ट इत्यर्थः । एतादृशः सरस सम्बन्धी अनिलः वायु. ईषत् धूतानि कम्पितानि आधूतानि 'कुगति प्रादयः' इति समासः 'धूतचरिताकम्पिताधुते' इत्यमरः । एतादृशानि राजीवानि अम्भोरुहाणि 'राजीव पुष्कराम्भोरुहाणि' इत्यमरः। रजसां पांसूनां 'पांसुर्नान्द्वयोरजः' इत्यमरः । परागाणामिति यावत् वितानानि विस्तारा· 'वितान कदके यज्ञे विस्तारे क्लुकर्मणि' इति हैमः । आधूतराजीवानां रजोवितानानि तैः नृपतेः दशरथस्य अङ्ग शरीरं पिशङ्गं पिङ्गलं । 'पिशङ्गौ कद्रुपिङ्गलौ' इत्यमर एतेन वायोः मन्दसुगन्धशीतलत्व सूचित । अनुप्रासालङ्कारः । काव्यलिङ्गमलङ्कारः तदुक्तं 'समर्थनीयस्यार्थस्य काव्यलिङ्ग समर्थनं' इति ॥ ६४ ॥

अथेति । अथ सरस्तीरे दशरथोपवेशनानन्तर अस्तस्य अस्ताचलस्य कूटं शिखरं 'कूटोऽस्त्री शिखरं शृङ्ग' इत्यमरः । तत् प्रति आहत प्राप्त आङ्पूर्वाद्धन्तेः गत्यर्थाकर्मकेति क्तः हन् हिंसागत्योः इति हन्तेर्गत्यर्थत्वात् साधनकृतेति समासः अस्ताचलशिखरं प्राप्तमिति यावत् पक्षे अस्त क्षिप्त असुक्षेपणे क्तः यत्कूट अयोघन. 'अयोघने शैलशृङ्गे कूटम्' तेन आहत ताडित । उग्र. उत्कट. रागः रक्तिमा यस्य सूर्यबिंबं हि अस्ताचलस्थ आरक्त भवति इति सुप्रसिद्धमेतत् लोहखण्डमपि अग्निना आरक्तमेव ताड्यते समुल्लसतीति समुल्लसन्त्यः एतादृशः दीधितयः किरणाः विस्फुलिंगा इव यस्य पक्षे समुल्लसद्दीधितय इव विस्फुलिंगाः अग्निकणाः यस्य एतादृश बृहत् महत् तस्य भावस्तत्तम क्वचित् कुत्रचित्स्थाने इत्यर्थः घनेन अयोघनेन स्पृष्ट लोहस्य अयसः खण्ड इव शकलमिव बृहत् महत् तत्तम अर्कमिव अर्कस्य सूर्यस्य बिंबं क्वचित् कुत्रचित् घनेन मेघेन स्पृष्टं सम्बद्धं मेघाच्छन्नमिति यावत् । आस अभूदित्यर्थः असु गतिदीप्त्यादानेषु इति भ्वादित्वात् लिट् । अर्थसगतिसम्भवात्नामनेकार्थत्वाद्बोध्या । श्लेषालङ्कारः ॥६५॥

बिम्बमिति । अवनीश्वरेण इष्टे तच्छील ईश्वरः 'स्थेशभासेत्यादिना'

**राजा रजन्यामधिशय्य तस्मिन् शिलातलं शीतलमिन्दुपादैः।**
**खेदं विनिन्ये मृदुभिः समीरैरासारसारैर्गिरिनिर्झराणाम् ॥ ६७ ॥**
**पत्यौ पृथिव्या मृगयाभिलाषाज्जागर्यया नीतवति त्रियामाम्।**
**क्वापि प्रपेदे मृगलाञ्छनेन त्रासादिवादाय निजं कुरङ्गम् ॥ ६८ ॥**

---

रच् प्रत्ययः अवन्याः पृथ्व्याः ईश्वरः पतिः तेन 'क्ष्मावनिर्मेदिनीमही' 'ईश्वरः पतिरीशिता' इत्यमरः। दशरथेन यथा येन प्रकारेण 'प्रकारवचने थाल्' इति थाल् प्रत्ययः विशेषेण नीला कृष्णा विनीला प्रादिसमासः विनीला त्विट् कांतिर्यस्याः 'त्विड्भाभाच्छविः' इत्यमरः एतादृशां 'भित्तौ कुड्ये भित्तिश्री-कुड्यमेडू' इत्यमरः लम्बमानं लम्बते अवस्रंसते इति लंबमानं लंबतेः शानच् एक एकसंख्याक कांचनस्य सुवर्णस्य तालवृंतं व्यजनं 'व्यजनं तालवृंतकं' इत्यमरः एव प्रतीच्यां पश्चिमायां दृष्ट अवलोकिन पतगस्य सूर्यस्य 'पतगौ पक्षिसूर्यौ च' इत्यमरः विंबं कर्तृदृष्टि अक्षि अर्थाद्दशरथस्य ववध रुरोध। सूर्यबिंबावलोकनात् दृष्टिं परावर्तितुं राजा न शशाकेति यावत्। बभातेर्लिट् उपमालंकारः। उपमा यत्रसादृश्यलक्ष्मीरुल्लसती द्वयोः। इति लक्षणात्॥६६॥

राज इति। राजा राजतेऽसौ राजा दशरथः रजन्यां रात्रौ 'रजनी यामिनी तमी' इत्यमरः। तस्मिन् हिमालये इंदुपादैः इंदोः चंद्रस्य पादाः किरणाः 'पादारश्म्यंघ्रितुर्यांशाः' इत्यमरः। शीतल शीतं शिलातल शिलायाः अश्मनः तलं अधिशय्य शयित्वा अधिशीङ् स्थासां कर्मेति शिलातलस्य कर्मत्वं गिरेः पर्वतस्य निर्झराः झराः 'प्रवाहो निर्झरो झरः' इत्यमरः। आसारः धारापातः 'धारासंपात आसारः' इत्यमरः। सः सारः स्थिरांशः येषु 'सारो बले स्थिरांशे च' इत्यमरः। मृदुभिः मंदैः समीरैः मारुतैः 'समीरमारुतमरुज्जगप्राणसमीरणाः' इत्यमरः। खेदं मृगयाश्रम विनिन्ये अपाचकार विपूर्वान्नयतेः कर्तरिलट्। अनुप्रासालंकारः॥ ६७॥

पत्याविति। पृथिव्याःभूमेः पत्यौ स्वामिनि दशरथे इत्यर्थः। मृगयायाः आखेटस्य अभिलाषः कामः 'कामोऽभिलाषस्तर्ष०' 'आखेटो मृगया स्त्रियां' इत्यमरः। तस्माद्धेतोः जागर्यया 'जागर्तेरकारो वा' इति भावे शप्रत्ययः पक्षे यक् च 'जाग्रो विचिण्णलिति गुणः' जागरणेन 'जागर्या जागराद्वयोः' इत्यमरः। त्रियामां त्रयो यामाः यस्याः सा त्रियामा रात्रिः। आद्यतयोरर्धयामयोश्चेष्टाकालत्वेन दिनप्रायत्वात्। अथवा त्रीन् धर्मादीन् यापयति निरवकाशीकरोति' कामप्रधानत्वात् इति त्रियामा। अतर्भावितण्यर्थाद्यातेः 'अतिस्तु सु' इत्यौणादि सूत्रेण मन् प्रत्ययः। ता नीतवति यापयति सतीत्यर्थः। नीञ् प्रापणे क्तवतु प्रत्ययः। मृगः लांच्छनं चिन्हं यस्य 'कलंकांकौ लांच्छनं च चिन्हं' इत्यमरः। चंद्रेण इत्यर्थः त्रासादिव भयादिव रात्रावपि अयं मृगयार्थं जागर्ति

आरुह्य शृङ्गं मृगयाविहारे रागी विवस्वानुदयाचलस्य ।
पत्ये पृथिव्या रचयाम्बभूव मृगानिव प्रस्फुरता करेण ॥ ६९ ॥
प्रभुः प्रजानामथ स प्रभाते हरिप्रभावो हरिमारुरोह ।
सन्नीकृतं सज्जनगीतकीर्तिर्यद्धायुधो वन्धुरवर्मजालम् ॥ ७० ॥

---

अतो मदंकगतमपि कदाचित् मृग हनिष्यतीति भीतेरिवेत्यर्थः। निजं आत्मीयं स्वविषसक्तमित्यर्थ। 'स्वके नित्ये निज त्रिषु' इत्यमरः। कुरंग मृग आदाय गृहीत्वा क्वापि कुत्रापि देशे प्रपेदे प्राप चंद्रः अस्तंगत इत्यर्थः। प्रपूर्वोन्पद्यतेः अविवक्षित कर्मतया भावे लिट् एत्वाभ्यासलोपौ। उत्प्रेक्षालंकारः ॥ ६८ ॥

आरुह्येति। मृगया एव विहारः क्रीडा मयूरव्यंसकादित्वात्समासः। मृगयायाः विहार इति षष्ठीतत्पुरुषो वा। रागः अनुरागः अस्यास्तीति रागी 'अत इनि ठनाविति' मत्वर्थे इनि प्रत्ययः 'रागोऽनुरागे मात्सर्ये' इत्यभिधान। पक्षे रागः रक्तिमा अस्यास्तीति विवस्वान् सूर्यः 'भास्वद्विवस्वत्सप्ताश्व' इत्यमरः उदयस्य सूर्यादि ज्योतिषामाविर्भावस्य अचलः पर्वतः तस्मिन्नेव सर्वेषां ज्योतिषामाविर्भावदर्शनात् 'उदयः पूर्वपर्वतः' इत्यमरात् उदयमङ्कअचलस्येति वा शृंग शिखर आरुह्य आरोहण कृत्वा प्रस्फुरति दीप्यते इति प्रस्फुरन् स्फुरतेः शतृ प्रत्ययः तेन एतादृशेन करेण किरणेन पक्षे हस्तेन पृथिव्या धरित्र्या पत्ये स्वामिने दशरथायेत्यर्थः। मृगान् हरिणान् रचयांबभूवेव प्रापयां बभूवेवेत्यर्थः। सूर्योदये हि मृगाः सम्यग्दृश्यंते यथा कश्चन मृगयाभिलाषुकः उच्चस्थलमारुह्य ततो दृश्यान् मृगानवलोक्य करेण तानादाय स्वामिने अर्पयति तद्वदिति तात्पर्यं। समासोक्तिरलंकारः 'समासोक्तिः परिस्फूर्तिः प्रस्तुते प्रस्तुतस्य चेत्' इति लक्षणात् ॥ ६९ ॥

प्रभुरिति। अथ अनतरं सूर्योदयानन्तरमिति यावत् प्रभाते गोसर्गे 'पुंसि गोसर्ग इष्यते। प्रभातं च' इत्यमरः। हरिः इन्द्रः स इव प्रभावः प्रतापो यस्य 'यमानिलेन्द्रचंद्रार्क विष्णुसिंहांशु वाजिषु। शुकाहि कपिभेकेषु हरिर्ना•' इत्यमरः। 'स प्रतापः प्रभावश्च' इत्यमरः। सतः साधवः ते च ते जनाश्च लोकाश्च तैः गीता वर्णिता कीर्तिः यशो यस्य 'कीर्तिः प्रसाद यशसोर्विस्तारे कर्दमेपि च' इत्यभिधान। यद्धानि संदानितानि आयुधानि येन आयुध तु प्रहरणमित्यमरः। प्रजानां जनानां प्रजास्यात्संततौ जने' इत्यमरः। प्रभुः प्रभवतीति प्रभुः 'वि-प्रसम्भ्यो डुसंज्ञायां' इति डुप्रत्ययः। स दशरथः सन्नं कृत समधिष्ठित बंधुर उन्नतानत वर्मणां कवचानां जाल समूहो यस्मिन् 'बंधुर तून्नतानतं' इत्यमरः 'तनुत्रं वर्मदंशनं' 'जाल समूह आनाय्य' इत्यमरौ अश्वनुरक्षणार्थं तत्र तन्त्राऽश्ववरे यद्धं वर्मजालमित्यर्थः। एतादृश हरिं आरोह उपविवेशेत्यर्थः। अनुप्रासालंकारः ॥ ७० ॥

कञ्चिन्मृगं मार्गणगोचरेऽसौ दृष्ट्वा विकृष्टायतचापदण्डः ।
शरं मुमुक्षुः शरभोरुवेगं तमन्वयादन्वयकेतुभूतः ॥ ७१ ॥
विलङ्घ्य मार्गं नृपमार्गणानां रेखायमाणो गगने रयेण ।
मृगोत्तमोऽसौ तमसातटस्थं घनं तपस्यद्भवनं प्रपेदे ॥ ७२ ॥
धनुःसहायोऽश्मवति प्रदेशे विहाय वाहं सहसा नृवीरः ।
चचार पद्भ्यां गहने तरूणामसौ घने तत्पददत्तदृष्टिः ॥ ७३ ॥

---

कंचिदिति। अन्वयस्य वंशस्य 'कुलान्यभिजनान्वयौ । वंशः' इत्यमरः।केतुभूतः केतुरिव ध्वज इव केतुभूतः भूतशब्दो उपमार्थे यथा पितृभूत इति पस्पशाह्निके 'यत्तर्हितद्भिन्नेष्वभिन्न छिन्नेष्वछिन्नंसामान्यभूतं' इतिभाष्यव्याख्यावसरे कैयटे- नोक्त । ध्वजेन यथा कीर्तिर्भवति एवं वंशस्य कीर्तिकर इत्यर्थ. । असौ दशरथः मार्गणगोचरे मार्गणस्य बाणस्य गोचरे विषये बाणपातयोग्यस्थले इत्यर्थः । 'कलब मार्गणशराः' इत्यमर' शरभ इव पशुविशेष इव करभ इव वा ऊरुः अतिशयितः वेगः जवो यस्य 'शरभस्तु पशोर्भिदि । करभे वानरभिदि' इति मेदिनी । 'वेगस्तरसी तु रयः' इत्यमर कंचित् अनिश्चितमित्यर्थः मृगं कुरंगं दृष्ट्वा विलोक्य शरं बाणं मुमुक्षुः मोक्तुमिच्छुः मुमुक्षुः मुच्लृमोक्षणे सन्नतात् 'सनाशंसभिक्षउ.' इत्युप्रत्यय न लोकेति निषेधात् शरमित्यत्र षष्ठी न । अतएव विकृष्टः आयतः विस्तीर्णः चापदण्डः येन एतादृशः सन् तं पूर्वोक्त मृग अन्वयात् अनुययौ अनुपूर्वोया प्रापणे इत्यस्माल्लङ् । अनुप्रासा- लंकारः ॥ ७१ ॥

विलङ्घ्येति । नृपस्य दशरथस्य मार्गणाः बाणाः 'कलबमार्गणशराः' इत्य- मरः । तेषां मार्गं पन्थानं येन पथा बाणा आयांति तं पंथानमित्यर्थः । वि- लङ्घ्य उल्लङ्घ्य रयेण वेगेन गगने आकाशे रेखेव आचरतीति रेखायमाणा रेखाशब्दात्कर्तुः क्यङ् सलोपश्चेति ' क्यङि शानच् अतिवेगवशात् रेखेव अन- वच्छिन्नगतिरित्यर्थः । असौ दशरथेन अनुयातः मृगोत्तमः मृगेषु उत्तमः 'सुप्सुपेति समास. पुरुषोत्तम इति वत्. तमसाया एतन्नाम्न्या नद्या. तट तीरं तत्र तिष्ठतीति तमसातटस्थ एतादृशं तपस्यद्भवन तपश्चरंतीति तपस्यंतः 'कर्म- णो रोम तपोभ्यां वर्तिचरोः' इति क्यप् । तेषां ऋषीणां भवनं स्थानमित्यर्थः। तपस्याभवनमिति पाठे तपश्चर्यास्थानमित्यर्थः । एतादृशं वनं अरण्यं प्रपेदे जगाम । अनुप्रासालंकारः॥ ७२ ॥

धनुरिति । धनुः धनुश्च सहाय' सहकारी यस्य अनेन सेनासहाय्यानपेक्षत्वं सूचित तेन च अतीव शौर्यं ध्वनितं एतादृश. तस्य मृगस्य पदानि चरणानि भूमिष्ठमृगपदचिन्हानीत्यर्थः तेषु दत्ता निक्षिप्ता दृष्टिः नेत्र येन नृषु मनुष्येषु वीर' शूरः 'सुप्सुपेति' समासः असौ दशरथ. बहुलाः अश्मानः यस्मिन् इति अश्मवान् 'तदस्यास्त्यस्मिन्निति मतुप् पाषाणप्रचुर इति यावत् प्रदेशे भूमिभागे

तटेऽपि तस्या घटपूरणस्य श्रुत्वा रवं बृंहितनादशङ्की।
शरं शरण्योऽपि मुमोच बाले मुनेस्तनूजे मनुवंशकेतुः॥ ७४॥
पुत्रो मुनेः पत्रिविभिन्नमर्मा शरानुसारेण नृपं प्रयातम्।
नेत्राम्बुदिग्धेन विलापनाम्ना बाणेन भूयो हृदि तं जघान॥ ७५॥

---

सहसा अकस्मात् 'अतर्किते तु सहसा' इत्यमरः। वाह अश्वं 'वाजिवाहार्व गधर्व' इत्यमरः विहाय त्यक्त्वा तरूणां वृक्षाणां घने निबिडे 'घन निरतरं सान्द्र' इत्यमरः। बहुलवृक्षे इति यावत् गहने अरण्ये 'गहन कानन वन' इत्यमरः। पद्भ्यां चरणाभ्यां 'पदनिति सूत्रेण ण्यामि पादस्य' पदादेश चचार जगाम। अभ्रमभ्रचर गत्यर्थाः लिट्। पाषाणबाहुल्याद्दुर्गमे मार्गे अश्वं विहाय पादाभ्यामेव जगामेति यावत्। अनुप्रासालकार॥ ७३॥

तटेपीति। तस्याः तमसाया तटेऽपि तीरेऽपि घटस्य कलशस्य पूरण भरण तस्य रव स्वन 'ध्वनिध्वानरवस्वनाः' इत्यमर। श्रुत्वा आकर्ण्य बृंहितस्य करिगर्जितस्य नादः ध्वनिः त अवश्य शकते इति बृंहितनादशङ्की 'बृंहित करिगर्जित' इत्यमरः। नद अव्यक्ते शब्दे भावे घञ् शकि शङ्कायां इत्यस्मादा-वश्यकेऽर्थेणिनिः' मनुवशकेतुः मनो स्वायम्भुवस्य वशः अन्ववायः तस्य केतु-रिव ध्वज इव केतुवत् वशप्रख्याकर इत्यर्थः एतादृशः दशरथ. शरण्योपि शरणे रक्षणे साधुः शरण्य. 'तत्र साधुः' इति साध्वर्थे यत् रक्षणाऽर्होपीति यावत्। बाले शिशौ 'बालोऽश्वेभपुच्छयोः। शिशौ क्लीबे कचयोः' इति हैम.। मुने. तपस्विनः 'तपस्वी तापसी पारिकाङ्क्षी वाचयमो मुनि.' इत्यमरः। तन्वाः देहात् जातः तनूजः 'क्रिया मूर्तिस्तनुस्तनूः' इत्यमरः। 'पञ्चम्यामजातौ' इति जन धातोर्ड प्रत्ययः पुत्र इति यावन् शृणातीति हिनस्तीति शरः शृधातोः पचाद्यत् त बाण मुमोच उत्ससर्ज मुच्लृ मोक्षणे लिट्। अनुप्रासालंकारः॥ ७४॥

पुत्र इति। पत्राणि पतत्राणि बहूनि सति यस्मिन् 'अत इनि ठनाविति पत्रशब्दादिनिः शीघ्रगमनार्थं हि बाणस्य पश्चाद्भागे पिच्छानि निबध्नति। तेन विभिन्न विदीर्णं म्रियते अनेनेति मर्म मृङ् प्राणत्यागे अन्येभ्योपि दृश्यते' इत्यनेन बाहुलकात्करणे मनिन्प्रत्यय. यस्मिन्नुपहते प्राणवियोगो भवति तन्मर्म पत्रिविभिन्न मर्म यस्य एतादृशः मुनेः ऋषेः पुत्रः सुतः शरस्य बाणस्य योऽनु-सारः अनुसरण अनुगमनमिति यावत् अनुपूर्वात्सर्तेर्भावे घञ्। प्रयात आगत या प्रापणे 'गत्यर्थेति सूत्रेण कर्तरि क्त.। तं पूर्वोक्त नृपदशरथ नेत्रयोः नयनयोः अंबु उदक अश्रु इत्यर्थः तेन दिग्धेन लिप्तेन 'दिग्धे दिग्धलिप्तकौ' इत्यमरः। दिह उपचये कर्मणि क्तः। विलापः परिदेवन इति नाम अभिधा यस्य तेन। 'विलापः परिदेवन' इत्यमर.। एतादृशेन बाणेन शरेण भूयः भूरि 'स्फार भूयश्च भूरि च' इत्यमरः हृदि अत.करणे जघान ताडि। हंतेर्लिट्

त्वया त्वनाथस्य विचक्षुषः किं भग्नोऽयमालम्बनदण्ड एकः।
वने जरावेशजडीकृतस्य गुरुद्वयस्य व्रतजीर्णमूर्तेः ॥ ७६॥
एक त्वया साधयताऽपि लक्ष्यं नीत विनाशं त्रितयं निरागः।
ममचक्षुषा कल्पितदृष्टिकृत्यौ वृद्धौ वने मे पितरावहञ्च ॥ ७७॥

---

द्रित्व अभ्यासाचेति कुत्वं । तस्य बालस्य विलाप श्रुत्वा नेत्राश्रु च दृष्ट्वा राजा दु खितोऽभूदित्यर्थ ॥ ७५ ॥

तमेव विलाप अष्टभि श्लोकैर्दर्शयति । त्वयेति । हे राजन्निति सबोधनाध्याहार । त्वया तु त्वयैवेत्यर्थ 'तु स्याद्भेदेऽवधारणे' इत्यमर । अथवा तुशब्दो विशेषबोधनार्थ दैवेन विचक्षुस्त्व प्राप्त त्वया तु आलबनदडो भग्न इति विशेष । विगते चक्षुषी यस्य स विचक्षु तस्य प्रादिभ्यो धातुजस्य वाच्यो वाच्योत्तरपदलोप ' इति बहुव्रीहि अतएव अनाथस्य नास्ति नाथ पालको यस्य तस्य वने अरण्ये व्रतेन नियमेन ' नियमो व्रतम् ' इत्यमर । जीर्णा हीना शिथिलेति यावत् मूर्ति देहो यस्य 'मूर्ति काठिन्यकाययो जराया विस्रसाया 'विस्रसा जरा' इत्यमर । य आवेश प्रवेश इत्यर्थ प्राप्तिरिति यावत् तेन जडीकृत मदीकृत जड शब्दात् च्वि तस्य लोपे अस्य च्वौ' इतीत्व ऊर्यादि च्विडाचश्चेति गति सज्ञायां कुगतीति समास एतादृशस्य गुरुद्वयस्य गुर्वो मातापित्रो यद्वय द्वितय 'गुरुगीष्पतिपित्रादौ' इत्यमर । तस्य अय सन्निकृष्ट इदमस्तु सन्निकृष्टमित्युक्तत्वात् मत्स्वरूप इति यावत् । अत्र अहमिति वक्तव्ये अयमिति प्रयोग' अहकारपरित्याग पुर सर वस्तु सामान्यबोधकत्वेन कृत । एक एकसख्याक आलबनदड आलबनश्चासौ दडश्चेति कर्मधारय' किं भग्न कुतो भग्न इत्यर्थ अत्र किं शब्दो वितर्के 'किं कुत्सायां वितर्के च' इति मेदिनी । अत्र श्लोकोक्तविशेषणै मद्धनन अत्यंत मनुचित तव इति उक्त भवति ॥ ७६ ॥

एकमिति । एक लक्ष शरव्य 'लक्ष लक्ष्य शरव्य च ' इत्यमर । साधयतीति साधयन् तेन साधु धातोर्णिजतान्छतृप्रत्यय । त्वया निराग निर्गत आग अपराधो यस्य ' आगोपराधो मतुश्च ' इत्यमर । एतादृश त्रितय त्रय अवयवा यस्य तत् त्रितय ' सख्याया अवयवे ' इति तयप्रत्यय । वक्ष्यमाणत्रयमित्यर्थ विनाश अत नीत प्रापितं नीञ् प्रापणे कर्मणि क्त 'गौणे कर्मणि दुह्यादे प्रधाने नीहृकृष्वहां' इत्युक्ते प्रधाने कर्मणि क्त प्रत्यय । किं तत्त्रितय विनाशित इत्यत आह । ममचक्षुषेति । मम चक्षु मचक्षु ममनेत्र तेन दृष्टयो नेत्रयो कृत्य कार्य कल्पित सपादित दृष्टिकृत्य याभ्यां एतादृशौ मद्दृष्ट्यैव व्यवहर्तारावित्यर्थ वने अरण्ये वृद्धौ स्थविरौ ' प्रवया स्थावरो वृद्धो इत्यमर । मे मम पितरौ माता च पिता च पितरौ ' पिता मात्रा ' इत्येकशेष च अह इति त्रितय नाश नीत इति पूर्वेणान्वय ॥ ७७ ॥

वनेषु वासो मृगयूथमध्ये क्रिया च वृद्धान्धजनस्य पोषः।
वृत्तिश्च वन्यं फलमेषु दोषः सम्भावितः को मयि घातहेतुः ॥७८
व्रती विनाथो विगतापराधः स्मर्तव्यदृष्टेः पितुरन्धयष्टिः।
इत्येषु किं निष्करुणेन कश्चिदवध्यभावे गणितो न हेतुः ॥ ७९ ॥
तरुत्वचोऽयं कठिना वसानो वनेषु शीतोष्णनिपीतसारः।
अस्वादुवन्याशनजीर्णशक्तिः पात्रं कृपायास्तव वध्यभूतः ॥ ८० ॥

वनेष्विति। वनेषु अरण्येषु मृगाणां हरिणानां यूथानि कुलानि 'सजातीयैः कुलं यूथं' इत्यमरः। तेषां मध्ये मध्यभागे वासः वसतिः 'अस्तिर्भवतीपरोऽप्रयुज्यमानोऽप्यस्तीति भाष्यात् अस्तीति लभ्यते' एवमुत्तरत्रापि ज्ञेयं। 'क्रिया च कर्म तु इत्यर्थः. कर्मक्रिया' इत्यमरः अंधः नष्टदृष्टिः एतादृशो जनः वृद्धः स्थविरः एतादृशो यो अंधजनः अंधान्मातापितररूपः तस्य पोषः पोषणं वृत्तिश्च जीवनं तु इत्यर्थः 'वृत्तिर्वर्तनजीवने' इत्यमरः।वन्यं वने भवं वन्यं दिगादित्वायत् एतादृशं फलं अस्तीत्यर्थः वासक्रियाजीवनेषु मयि ब्राह्मणपुत्रे घातहेतुः हननं घातः हतेर्भावे घञ् उपधावृद्धिघत्वतत्वानि नाशः इत्यर्थः तस्य हेतुः कारणं 'हेतुर्नाकारणं बीजं' इत्यमरः। दोषः दूषणं कः संभावितः क आशंकित इत्यर्थः सपूर्वाद्भवतेर्णिजन्तात्कर्मणि क्तः वासक्रियावृत्तीनां सर्वथा निर्दुष्टत्वात् कं दोषं मनसिकृत्य अहं विद्ध इत्यर्थः ॥ ७८ ॥

व्रतीति। व्रतं नियमः ब्रह्मचर्यमिति यावत् सोऽस्यास्तीति व्रती 'व्रत इनि ठनाविति इनिः'। विनाथः विगतः नाथः स्वामी यस्य स विनाथः निरालंब इत्यर्थः यद्यपि पितृभ्यामेतस्य सनाथत्वं तथापि तयोरंधत्वात् एतत्पालनपोषणासमर्थत्वात् एतस्य अनाथत्वमेव। विगतः अविद्यमान इत्यर्थः. अपराधो मन्तुर्यस्य 'आगोऽपराधो मन्तुश्च' इत्यमरः। निरपराध इत्यर्थः। स्मर्तव्या दृष्टिः नेत्रं यस्य प्रत्यक्षदृष्टेरभावात् स्मर्तव्यदृष्टिरेव अथवा आविवक्षितकर्मकात् स्मृधातो भावे तव्यप्रत्ययः तथा च स्मर्तव्यं स्मरणं दृष्टिः ज्ञानं यस्य अंधानां स्मरणशक्तिरधिकेति सुप्रसिद्धमेतत् एतादृशस्य पितुः अंधयष्टिः अंधस्य दृष्टिहीनस्य यष्टिरिव अंधयष्टिः अंधस्य यथा यष्टिरेव आलंबनं तथा अंधस्य मम पितुः अहमेवालंबनमित्यर्थः। इति एवं प्रकारेण एषु व्रतित्वविनाथत्वनिरपराधत्वांधपित्रालंबनत्वेषु मध्ये निष्करुणेन निर्गता करुणा दया यस्मात् तेन निर्दयेनेत्यर्थः त्वयेति शेषः हंतुं योग्यो वध्यः हनो वा यद्वधश्च वक्तव्यः इति यत् वधादेशश्च अवध्यः तस्य भावः धर्मः अवध्यत्वमित्यर्थः. तस्मिन् कश्चिद्धेतुः न गणितः न विचारित इत्यर्थः सर्वथा मद्धननमयुक्तमिति तात्पर्यं ॥ ७९ ॥

तरुत्वच इति। कठिनाः कठोराः तरूणां वृक्षाणां त्वचः वल्कलानि 'त्वक्समानाविलवश्री वल्कं वल्कलमस्त्रियां' इत्यमरः। वसानः वस्ते परिधत्ते इति

जीर्णो जतुन्यासनिरुद्धरन्ध्रः कुम्भश्च मौञ्जी तरुवल्कलञ्च ।
वनेषु यन्मां विनिहत्य गम्यं तद्गृह्यतामस्तु भवान् कृतार्थः ॥८१॥

साधुः कृपामन्थरमक्षि शत्रौ प्रीत्यर्थसम्मीलितमादधाति ।
नीचस्तु निष्कारणवैरशीलस्तत्पूर्वसम्पादितदर्शनेऽपि ॥ ८२ ॥

---

वसानः वस् आच्छादने लट् शानच् नलोकाव्ययेति निषेधात् तरुत्वच इति कर्मणि षष्ठी न भवति वनेषु अरण्येषु शीतश्च उष्णश्च शीतोष्णौ शीतः शीतकालः उष्णः निदाघः 'उष्ण ऊष्मागमस्तपः' इत्यमरः यद्यपि शीतशब्दः शीतकालवाचकः कोशे नास्ति तथापि 'शीत गुणे तद्वदर्था' इत्युक्तेः अत्र उष्णसाहचर्यात् शीतवान् काल एव गृह्यते अथवा शीत हिम उष्णः ऊष्मकालः तौ शीतोष्णौ ताभ्यां निपीतः प्राशितः नाशित इति यावत् सारः बल रक्तादिस्थिरांशो वा यस्य 'सारो बले स्थिरांशे च' इत्यमरः शीतोष्णादिना नष्टशक्तिः नष्टरक्तो वा इत्यर्थः । न स्वादु मधुरं अस्वादु । वने भवं वन्यदिगादित्वाद्यत् तस्य वन्यस्य अन्नं भक्षण अस्वादु एतादृश यद्वन्याशन तेन जीर्णा नष्टप्राय। शक्तिः सामर्थ्यं यस्य अयं मद्रूपः पथ्यभूतः पथ्य इव पथ्यभूतः तव पथ्यत्वेन सम्मत इत्यर्थः कृपायाः दयायाः पात्र भाजन अस्तीत्यर्थः ॥ ८० ॥

स्वं हेतवे हेतिबलोपनीतस्मयः किमप्युन्नतवृत्ति कस्मै ।
नीचस्य निष्ठामधिकर्म गच्छन् कुलं कलङ्कैः कलुषीकरोषि ॥८३॥
मैवं भवानेनमदुष्टभावं जुगुप्सतां स्माक्षसाधुवृत्तम् ।
इतीव वाचो निगृहीतकण्ठैः प्राणैररुध्यन्त महर्षिसूनोः ॥ ८४ ॥

---

सद्वृत्ते' इत्यमरौ । एतादृशः नीचस्तु: पृथग्जनस्तु 'मूर्ख नीचौ पृथक् जनौ' इत्यमरः । तु शब्दः सज्जनापेक्षया विशेषबोधकः पूर्वं संपादितं पूर्वसंपादित सुप्सुपेति समासः । तदेव पूर्वसंपादितं तत्पूर्वसंपादित एतादृश दर्शनं यस्य एतादृशेऽपि पुरुषे कृपामंथर कृपाया विषये मंथर मंदं निष्कृपमित्यर्थः। प्रीतेः निवृत्तिः प्रीत्यर्थः मशकार्थो धूम इतिवत् अर्थशब्दो निवृत्तिवाची प्रीत्यर्थाय प्रीतिनिवृत्तये संमीलित निमीलित एतादृश अक्षि आदधाति । सज्जनः शत्रावपि प्रीतिलाभाय ईषन्मीलितं कृपापूर्णं नेत्रं स्थापयति निर्हेतुकवैरशीलो नीचस्तु प्रथमजातदर्शनेऽपि पुरुषे कृपारहित प्रीत्यभावाय मीलितं च चक्षुरादधाति। एवं च महदुभयोरंतरमित्यर्थः। एव च त्व द्वितीयकोटिपतित इति तात्पर्यं । दीपकालंकारः 'वदति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः' इति ॥ ८२ ॥

स्वमिति । हेतीनां अस्त्राणां बले सामर्थ्ये 'हेतिर्ज्वालास्त्रसूर्यांशुषु' इति हैमः । तेन उपनीतः प्राप्तः स्मयः गर्वः यस्य 'चित्तोद्रेकः स्मयो मद' इत्यमरः । त्व इति विशेष्यमध्याहर्तव्यं नीचस्य पृथग्जनस्य कर्मणीत्यधिकर्म 'अव्ययं विभक्ति स्यादिना' विभक्त्यर्थेऽव्ययीभावः 'नपुंसकादन्यतरस्या' इति वैकल्पिकत्वादजभावः । तत्र निष्ठां नितरां स्थिति. निष्ठा 'आतश्चोपसर्गे' इति निपूर्वात्तिष्ठतेर्भावे अङ् 'उपसर्गादिति' षत्व। ता गच्छनीति गच्छन् सन् गम् धातोः शतृप्रत्यय:। किमपि अनिर्वर्णनीय उन्नतावृत्तिः वर्तनं यस्य अनिमान्य मित्यर्थः । स्वं आत्मीयं 'स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्वो त्रिया धने' इत्यमरः । कुल वंश कलंकैः लाञ्छनैः दूषणैरित्यर्थः कस्मै हेतवे कारणाय तादर्थ्ये चतुर्थ्येषा कलुषी करोषि आनिर्लीकरोषि मलिनयसीति यावत् । अनुप्रासालंकारः ॥ ८३ ॥

मैवमिति । भवान् ऋषिकुमारः अदुष्टभावं न दुष्ट· निषः अदुष्टः नञो विरोधार्थत्वात् साधुरिति यावत् एतादृशः भाव. अभिप्रायो यस्य 'भावः सत्ता-स्वभावाभिप्रायचेष्टा' इत्यमरः । न क्षत नष्ट अक्षतं एतादृश साधु सत् वृत्त चरित्र यस्य 'वृत्त पद्ये चरित्रे' इत्यमरः। एतादृश एन दशरथं पूर्वं आक्षेपबोधनार्थं गृहीतस्य दशरथस्य अत्र निंदानिषेधबोधनार्थं उपादानादन्वादेशः अतः 'द्वितीयाटौ स्वेन.' इत्येनादेशः एवं पूर्वोक्तप्रकारेण मा जुगुप्सतां स्म मा निंदत्वित्यर्थः। 'प्रैषातिसर्गप्राप्तकालेषु' इति प्राप्तकाले लोट् । 'गुपिच् किद्भ्यः' इति गुपेर्निंदायां इति गुपधातोः सन् स्म इति पादपूर्तौ अव्यय इतीव पूर्वोक्तप्रकारेण निषेधार्थमेवेत्यर्थः । महर्षिसुनोः महाप्रासी ऋषिश्च 'आन्महत इत्यात्वं'

भोज्यासुतश्चारुभुजद्वयेन घटं गृहीत्वा घटितारिनाशः।
बाष्पायमाणो बहुमानपात्रं यमप्रभावो यमिनां ददर्श ॥ ८५ ॥
पापं विधायापि विधातृतुल्ये सत्यापयामास सतां पुरोगः।
ततो यतिं घातयतो न सद्यः क्रोधानलेनास्य ददाह देहम् ॥ ८६ ॥

---

'ऋषयः सत्यवचसः' इत्यमरः। तस्य सूनुः पुत्रः 'आत्मजस्तनयः सूनुः' इत्यमरः। तस्य निगृहीतः निरुद्धः कंठः गलो यैः 'कंठो गलोऽथ ग्रीवायां' इत्यमरः। प्राणैः असुभिः कर्तृभिः 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः। वाचः गिरः अरुध्यंत निरुद्धा इत्यर्थः रुधधातोः कर्मणि लङ्। प्राणोत्क्रमणात् वाग्विसरः प्रतिबद्धो भूदित्यर्थः। उत्प्रेक्षालंकारः ॥ ८४ ॥

भोज्यासुत इति। घटितः चेष्टितः कृत इत्यर्थः। अरीणां शत्रूणां नाशः अंतो येन 'अंतो नाशो द्वयोर्मृत्युः' इत्यमरः। यमः अंतकः स इव प्रभावः प्रतापो यस्य भोज्यासुतः भोजस्य राजविशेषस्य सुता भोज्या इंदुमती क्रोड्यादित्वात् 'भोजक्षत्रिये' इतिगणसूत्रेण भोजशब्दात् ष्यङ्प्रत्ययः तस्याः सुतः पुत्रः दशरथः भुजयोः बाह्वोः द्वय द्वितय चारु सुंदर यद्भुजद्वयं तेन 'सुंदरं रुचिरं चारु' इत्यमरः। घट कलश गृहीत्वा आदाय बाष्प उद्वमतीति बाष्पायमाणः 'बाष्पोष्मभ्यामुद्वमने' इत्यनेन क्यङंतात् शानच्। यमाः अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः इति योगसूत्रोक्ताः पंच यमाः संति येषां ते यमिनः तेषां बहुमानपात्रं बहुः भूयिष्ठः यो मानः तस्य पात्र भाजनं 'पात्रामत्रं च भाजनं' इत्यमरः। योगिसत्कृत ऋषिमित्यर्थः। ददर्श अवलोकयामास दृशिर्प्रेक्षणे लिट्। अनुप्रासालङ्कारः ॥ ८५ ॥

पापमिति सतां सज्जनानां 'सन्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः। पुरोगः पुरः अग्रभागे गच्छतीति पुरोगः 'अन्यत्रापि दृश्यते इति वक्तव्य' इत्यनेन डप्रत्ययः। ऋषिः विधाता ब्रह्मा तेन तुल्यः सदृशः तस्मिन् ऋषिपुत्रे पाप बाणप्रहाररूपं कलुषं विधायापि सत्यापयामास सत्यमाचचक्षौ सत्यापशब्दात् 'सत्यापपाशेत्यादिना णिच्' एतस्याः क्रियायाः कर्ता राजेति अध्याहर्तव्यः ततः सत्यभाषणादेनोः यतिं यमिनं कुमारमित्यर्थः। घातयतः नाशयतः हन्तेर्णिजन्ताच्छतृप्रत्ययः घातयतो अस्य दशरथस्य देहे शरीरे सद्यः तत्क्षणमेव 'सद्यःपदन्येति' निपातः कोप कोपः स एव अनलोऽग्निः तेन न ददाह न भस्मीचकार। दह भस्मीकरणे लिट्। अथवा सतां पुरोगः राजा विधातृतुल्ये पाप विधायापि सत्यापयामास। ततः यतिं घातयतः अस्य दशरथस्य देहं क्रोधानलेन न ददाह अत्र दाहस्य कर्ता कुमारमुनिरिति इति अध्याहर्तव्यः। रूपकं अनुप्रासश्चालंकारः ॥ ८६ ॥

दयानुयातस्तनयस्य नाशं श्रुत्वा महर्षिर्मुहरात्तशोकः।
दिदेश देशास्तुतसद्गुणाय विशन् वशी विश्वभुजं स शापम् ॥८७॥
वनजकुसुमधारिणीमलङ्घ्यां हरिनखपातविदारितोरुगण्डाम्।
श्रियमिव नृपतिर्मृगव्यभूमिं चिरमनुभूय गृहोन्मुखो बभूव ॥८८॥

---

दयानुयात इति। वशी वश अधीनत्व अस्यास्तीति वशी 'वशमायत्ततायां स्यात्' इति विश्वः। जितेंद्रिय इति यावत् तनयस्य पुत्रस्य नाशं अंत श्रुत्वा आकर्ण्य दयया कारुण्येन अनुयातः अनुगतः पुत्रविषयककारुण्ययुक्त इत्यर्थः अतएव मुहुः पुनःपुनः आत्तशोकः आत्तः गृहीतः शोकः शुक् येन 'मन्यु-शोकौ तु शुक् स्त्रियां' इत्यमरः। आत्त इत्यत्र आङ्पूर्वाद्दातेः क्तः 'अचउपसर्गात्तः' इति तादेशः एतादृशः सः महर्षिः विश्वभुज विश्व सर्वं भुनक्ति इति विश्वभुक् अग्निः 'नाचिकेतभुजिमारतविश्वप्साशुचिः' इति निर्वाडशेषः प्सामक्षणे इति धातोः विश्वस्याविश्वभुजोः समानार्थकत्व त अग्निं विशन् सन् दुःखेन देह-त्याग कुर्वन् सन्नित्यर्थः देशेषु जनपदेषु स्तुताः नुताः संतः गुणाः दयादाक्षिण्या-दयो यस्य तस्मै अर्थाद्दशरथाय शाप आक्रोश पुत्रशोकेन मरणरूपं दिदेश ददौ। दिश अति सर्जने लिट्। अनुप्रासालंकारः ॥ ८७ ॥

वनजेति। नृणां मनुष्याणा पतिः दशरथः वन उदकं तस्मिन् जात वनजं 'जीवन भुवन वन' इत्यमरः सप्तम्यां जनेर्डः इति डप्रत्ययः वनज च तत्कुसुम च वनजकुसुम अभीक्ष्ण धरतीति वनजकुसुमधारिणी 'बहुलमाभीक्ष्ण्ये' इति णिनिः 'ऋन्नेभ्यो ङीप्' इति ङीप्। पक्षे वने अरण्ये जातानि कुसुमानि धारयतीति। अलघ्यां लघितु योग्या लघ्या न लंघ्या अलघ्या विष्णुपत्नीत्वात् तदुल्लघनमनुचितमित्यर्थः। पक्षे लघितु शक्या लघ्या न लघ्या अलघ्या अति-विशालत्वात् मृगव्यभूमेः लघितुमशक्यमित्यर्थः 'अर्हेकृत्यतृचश्च शकि लिङ्च' इत्युभयोरर्थयोः 'ऋहलोर्ण्यत्' इति ण्यत् प्रत्ययः। ऊरुः' सक्थिगण्ड. कपोलः 'सक्थि क्लीबे पुमानूरुः' अधस्ताच्चिबुक गण्डकपोलौ' इत्यमरौ। हरिः विष्णुः तस्य यानि नखानि नखराणि 'यमानिलेंद्रचंद्रार्क विष्णुर्सिंहांशुवाजिषु। शुकाहि कपिभेकेषु हरिः' इत्यमरः। 'नखोऽस्त्री-नखरोऽस्त्रियाम्' इत्यमरः। तेषां पातः पतन पतधातोर्भावे घञ् तेन विदा-रितौ ऊरुगण्डौ यस्या. सा। पक्षे हरिः सिंहः तस्य नखानां यः पातः तेन विदारिताः उरवः बहव· गडाः खड्गिनो यस्या सा 'गण्डके खड्गखड्गिनौ' इत्यमरः। एतादृशीं श्रियमिव लक्ष्मीमिव मृगव्यभूमिं मृगव्यस्य मृगयायाः 'आच्छोदनं मृगव्य स्यादाखेटो मृगया स्त्रिया' इत्यमरः। भूमिं पृथ्वीं चिरं चिरकाल अनुभूय निषेव्येति यावत् गृहे निजसदने विषये उन्मुख उत्कंठितः एतादृशः बभूव। उपमालंकारः। पुष्पिताग्रावृत्तम्। 'अयुजि नयुगरेफतो यकारो युजि च नजौ

अथ स विषमपादगोपितार्थं जगदुपयोगवियुक्तभूरिधातुम् ।
बहुतुहिननिपातदोषदुष्टं गिरिमसृजत्कुकवेरिव प्रबन्धम् ॥ ८९ ॥
सपदि दिशि निबद्धभूरिघोषं परमविनीतमनोज्ञनागवृन्दम् ।
जलधिमिव नृपः पुरं स्वकीयं मणिगणमण्डितकान्तमाससाद ॥ ९० ॥

इति कुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
दशरथोत्पत्तिर्नाम प्रथमः सर्गः ।

---

जरगाश्च पुष्पिताग्रा' इति लक्षणात् । 'एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः' इति महाकाव्यलक्षणे उक्तत्वात्सर्गान्ते भिन्नानि वृत्तानि' एवमग्रिमसर्गेष्वपि ज्ञेयं । 'सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्' इत्युक्तत्वात् । अत्र हरिनखपातविदारितोरुगण्डां श्रियमिव इत्यनेन देवानां लक्ष्मीनारायणप्राप्तिरूपउत्तरसर्गस्थ कथाभागः सूचित ॥ ८८ ॥

अथेति । अथ गृहोन्मुखीभवनानन्तरं सः दशरथः विषमः न्यूनाधिकाक्षरकृतः पादः श्लोकचतुर्थांशः 'पादारश्म्यङ्घ्रि तुर्यांशाः' इत्यमरः । तत्र गोपितः स्वसंकेतसमासाधिक्याप्रतीतादिपदप्रयोगवशादस्फुटः अर्थः श्लोकतात्पर्यार्थो यस्मिन् । पक्षे विषमाः दुर्गमाः ये पादा. प्रत्यन्तपर्वताः 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । तैः गोपिताः रक्षिताः गुप् रक्षणे णिजंतात्क्त-प्रत्ययः सर्वसाधारणैः अप्राप्याः कृताः अर्थाः रत्नादिद्रव्याणि येन 'अर्थाभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इत्यमरः । कुकाव्यपक्षे जगति य उपयोगः तेनवियुक्ताः महाकविभिः काव्यांतरे अप्रयुक्ताः भूरयः प्रभूताः धातवः भूवादयः शब्दशास्त्रप्रसिद्धा यस्मिन् पर्वतपक्षे जगति य उपयोगः तेन वियुक्ताः रहिताः भूरिधातवः गैरिकमनःशिलादयः यस्मिन् यद्वः प्रभूताः ये तु हि न इत्यादयो निपाताः निपातशब्दाः तेषां दोषेण दुष्टं छन्दोभंगरीति भंगाप्रयुक्तशब्दप्रयोगानर्थकाऽप्रयोजकादिशब्दप्रयोगादयः तात्पर्यप्रत्ययप्रत्यूहभूताः दोषाः साहित्यसमये प्रसिद्धा एव । पक्षे बहु प्रभूत यत्तुहिन तुषारः तस्य यो निपातदोषः पतनरूपो दोषः तेन दुष्ट हिमालये अतिशीतदोषः सुप्रसिद्धमेव 'कुकवेः कुत्सितश्चासौ कविश्च कुकविः 'कुगतिप्रादय' इतिसमासः तस्य प्रबंध निबंधमिव गिरिं हिमालय असृजत् अत्यजत् सृजविसर्गे लङ् । उपमाश्लेषालङ्कारौ । पुष्पिताग्रावृत्त लक्षण तूक्त ॥ ८९ ॥

सपदीति । नृपः दशरथः सपदि सद्यः 'सद्यः सपदि तत्क्षणे' इत्यमरः दिशि काष्ठायां 'दिशस्तुककुभः काष्ठाः' इत्यमरः। निबद्धः रचितः भूरिः प्रभूतः घोषः गर्जन येन 'घोषः कांस्ये स्वने गोपघोषकाभीरपल्लिषु' इति हैमः समुद्रगर्जनं हि दूरतः श्रूयते इति प्रत्यक्षसिद्ध । पुरपक्षे निबद्धाः भूरिघोषाः प्रभूताभीरपल्यो यस्मिन् अत्यधिकतो परमा उत्कृष्टा ये वयः पक्षिणः 'विविष्किरपतत्रयः' इत्यमरः । तैः

गरुडादिभिः नीत अपहृत मनोज्ञ सुंदर 'मनोज्ञ मंजु मञ्जुल' इत्यमरः। नागानां सर्पाणां वृंद समूहो यस्मिन् यस्माद्वा। पुरपक्षे परमाः श्रेष्ठा विनीताः परम अधिक विनीता इति वा परा मा लक्ष्मीः येषां ते परमाः। ते च ते विनीताश्च अतएव मनोज्ञाः ये नागाः हस्तिनः 'मतङ्गजो गजो नागः' इत्यमरः। तेषां वृंदानि समूहा यस्मिन् कांतं कस्य उदकस्य अंतः अवधिः यस्मिन् यदपेक्षया उदकमन्यत्र नास्तीत्यर्थः। मणीनां रत्नानां यो गणः समुदायः तेन मंडितः भूषितः कांतः उदकप्रांतभागो यस्य समुद्रस्य रत्नाकरत्वादित्यर्थः। पुरपक्षे मणिगणमंडित अतएव कांत सुंदरमित्यर्थः। जलनिधिमिव जलानां निधिं शेवधिं तमिव स्वस्य इदं स्वकीय कुरुजनपदस्येति कुकि अनुवर्तमाने स्वस्य चेति गहादिवर्गणसूत्रेण छ कुगागमश्च एतादृश पुरं अयोध्यामिति यावत् आससाद प्राप। आङ्पूर्वात्सीदतेः कर्तरि लिट्। अत्र मंगलाचरणरूपतया सर्गान्त्यश्लोके परमिति लक्ष्मीवाचकशब्दप्रयोगः सर्गमध्ये पंचचत्वारिंशत्तमे श्लोके ईश्वरवाचकप्रभुतो शब्द प्रयोगः यथाह भगवान् भाष्यकारः मंगलादीनि मंगलमध्यानि मंगलांतानि च शास्त्राणि प्रथंते वीरपुरुषाण्यायुष्मत्पुरुषाणि भवंति अध्येतारश्च प्रवक्तारो भवंति। श्लेषोपमे अलंकारौ। पुष्पिताग्रावृत्त। लक्षणं तूक्तं। अथ कविः काव्यवर्णनीयस्थानपूर्वकं सर्गसमाप्तिं निरूपयति इतीत्यादि। इति शब्दः समाप्तौ 'इति हेतुप्रकरणप्रकाशादि समाप्तिषु' इति कोशात्, तस्य च प्रथमः सर्गः इति इत्येवमन्वयः प्रथमः सर्गः समाप्त इति यावत्। कुमारदासस्य कृतौ इति कविनामकथनं महाकाव्येति महच्छब्देन लक्षणसंपत्तिः सूचिता तानि च लक्षणानि कानिचित् तत्र तत्र दर्शितानि कानिचिद्दर्शयिष्यते। जानकीहरण इति काव्यवर्णनीययोः कथनं एवमुत्तरत्रापि द्रष्टव्यं। दशरथोत्पत्तिरितिसर्गनामकथनं इति दिक्॥९०॥

इतिश्रीश्रुतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायरदव्यकृतपंडित-
प्रकाण्डश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्यान्तेवासिना निगुडकरो-
पाभिधेन नारायणशर्मणा विरचितायां महोत्साहाख्यजानकी-
हरणकाव्यटीकायां दशरथोत्पत्तिर्नाम प्रथमः सर्गः
समाप्तः ॥ १ ॥

---

# द्वितीयः सर्गः ।

रावणेन रणे भग्ना देवा दावाग्नितेजसा ।
द्रष्टुं जगत्पतिं जग्मुः पुरस्कृतपुरन्दराः ॥ १ ॥
निजदेहभराक्रान्तनागनिश्वासरहसा ।
गतागतपयोराशि पातालतलमास्थितम् ॥ २ ॥
आसीनं भोगिनि स्रस्तमौलिमाल्यविभूषणम् ।
तत्क्षणत्यक्तनिद्रार्तिबद्धरागायतेक्षणम् ॥ ३ ॥

---

श्रीगणेशायनमः । पूर्वस्मिन्सर्गे उपोद्घातरूपां दशरथोत्पत्तिं वर्णयित्वा इदानीं मुख्यनायकश्रीमद्रामभद्राऽवतारवर्णनेच्छया तत्कारणीभूतसकलदेवकर्तृक श्रीमहाविष्णुस्तुतिं प्रस्तौति । रावणेनेति । दावाग्नितेजसा दुनोतीति दावः टुदु उपतापे इत्यस्मात् 'दुन्योरनुपसर्गे' इति णः। स चासौ अग्निश्च दावाग्निः अरण्याग्निः 'दवौ दावो वनवन्हिः' इति हैमः। तद्वत्तेजः प्रतापो यस्य 'तेजः प्रभावे दीप्तौ च' इत्यमरः। तेन रावणेन रावयति शब्दयति लोकान् भीत्या इति रावणः अथवा विश्रवसोऽपत्यं रावणः 'शिवादिभ्योऽण्' इत्यण् प्रत्ययः विश्रवद्शब्दस्थाने रवण देशश्च। तेन रणे युद्धे भग्नाः पराजिता इत्यर्थः 'रणाः कलहविग्रहौ' इत्यमरः। एतादृशाः पुरस्कृतपुरंदराः पुराणि शत्रुनगराणि दारयति विदारयति इति पुरंदरः 'पूः सर्वयोर्दारिसहोः' इति खच् 'वाच यमपुर दरौ च' इति मुम् पुरः कृतः पुरस्कृत 'पुरोऽव्ययं' इति गतिसंज्ञाया 'नमस्पुरसोर्गत्यो' इति सत्व। पुरस्कृतः अग्रतः कृतः पुरंदरः इन्द्रो यैस्ते 'पुरस्कृत पूजिते रात्यभियुक्तेऽग्रतः कृते' 'पुरुहूतः पुरंदरः' इत्यमरौ । दीव्यति द्योतते इति देवाः दिव् धातोः पचाद्यच् जगत्पतिं गच्छतीति जगत् 'द्युतिगमिजुहोतीनां द्वेवाच्ये' इति गम् धातो द्वित्व क्विप् प्रत्ययश्च तस्य पतिः स्वामी तं विष्णु द्रष्टुमवलोकितु जग्मुः ययुः गम्लृ गतौ लिट्। अनुप्रासोपमे अलंकारौ अत्र सर्गे अंतिम पद्यद्वय वर्जयित्वा सर्वत्राऽनुष्टुब्वृत्तं ज्ञेय ॥ १ ॥

तं विष्णुमेवाष्टाभिः श्लोकैर्वर्णयति । निजदेहेति । निजः आत्मीयः यो देहः शरीरः 'स्वके नित्ये निज त्रिषु' इत्यमरः। 'कायोदेहः क्लीबपुंसो' इत्यमरः। तस्य यो भरः भारः तेन आक्रांतः पीडितः एतादृशो यो नागः शेषः तस्य निःश्वासः निःश्वसनं श्वस् प्राणने इत्यस्मात् घञ् तस्य यद्रहः वेगः तेन आदौ गतः पश्चादागतः गतागतः एतादृशः पयसः राशिः समूहः तस्य यत्पातालतलं विवरतलं 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी । तत् आस्थितं विद्यमानं अनंत कोटिब्रह्माण्डरोमरध्राक्रमभारपीडितनागनिःश्वासवेगजन्यमहोर्मिनिम्नभागस्थित । अनुप्रासालंकारः ॥ २ ॥

आसीनमिति । प्रशस्तः भोगः शरीरं यस्य स भोगी 'अत इनि ठनौ' इति

भुजङ्गपृथुकारूढमातङ्गमकराश्रयम् ।
युद्धमम्भोनिधिच्छेदे पश्यन्तं नृपलीलया ॥ ४ ॥
भोगिभोगासनक्षोभो माभूदिति सुदूरतः ।
भक्त्यानतशरीरेण सेव्यमानं गरुत्मता ॥ ५ ॥

---

इति । तस्मिन् शेषे आसीन आस्तेऽसौ आसीन स आस् उपवेशने लट् शानच् 'ईदास.' इति ईत्व । मौलि किरीट 'चूडा किरीट केशाश्च संयता मौलयस्त्रय ' इत्यमर । माल्यानि माला विभूषणानि आभरणानि स्रस्तानि अध पतितानि मौलिमाल्यविभूषणानि यस्य निद्रावशेन एतेषां विपर्यस्तत्व स चासौ क्षण तस्य देवागमनस्य क्षणो वा तत्र त्यक्ता उज्झिता या निद्रा स्वापः तस्या या आर्ति पीडा आर्ति पीडा धनुष्कोटचा ' इत्यमर । तया बद्ध सदानित आसक्त इत्यर्थ राग रक्तिमा ययो तादृशे आयते विस्तृते ईक्षणे यस्य 'सुदूर दीर्घमायत' ' ईक्षण चक्षुरक्षिणी' इत्यमरौ । अनुप्रासालङ्कार ॥ ३ ॥

भुजङ्गेति । अम्भसां उदकानां निधि शेवधि तस्य च्छेद भाग प्रदेश इति यावत् । नृणाणां क्षत्रियाणां लीला क्रीडा तया । भुजेन गच्छतीति भुजगा ' गमे सुपिवाच्य ' इति खच ' खच्चडिद्वाच्य ' इति डित्वाट्टिलोप तेषां पृथुका शावका ' पृथुक शावक शिशु ' इत्यमर । तैरारूढा कृतारोहणा आङ् पूर्वकात् रुह धातो कर्मणि क्त एतादृशा ये मातङ्गा मतङ्गस्येमे मातङ्गा दीर्घिकेणु हस्तिन मकरा ग्राहाश्च ' गजेऽपि नागमातङ्गौ ' इत्यमर । ते आश्रय सभ्रयो यस्य एतादृश युद्ध आयोधन । पश्यतीति पश्यन् त पश्यन्तमवलोकयन्तमित्यर्थ । राजानो यथा स्वस्ववाहान् हस्त्यादीनारुह्य युध्यन्ते एव मातङ्गमकरादिषु आरुह्य युध्यमानान् सर्पशावकान् पश्यन्तमिति तात्पर्य । अनुप्रासालङ्कार ॥ ४ ॥

भोगीति । भोग अहिशरार 'अहे शरीर भोग स्यात्' इत्यमर सोऽस्यास्तीति भोगी सर्प 'अतइनिठनौ ' इतीनि 'उरग. पन्नगो भोगी' इत्यमर तस्य भोग । आसते उपविशत्यस्मिन्निति आसन आस् उपवेशने अस्मात् करणाधिकरणयोश्च ' इत्यधिकरणे ल्युट् भोगिभोग एव आसन पीठ मयूरव्यंसकादित्वात्समास• ' पीठमासन ' इत्यमर । तस्य क्षोभ चाञ्चल्य क्षुभ् सञ्चलने भावे घञ् मा भूत् मयतलुङ् ' नमाङ्योगे ' इत्यडभाव ' गातिस्थेति सिच लुक् ' । इति हेतोः ' इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ' इत्यमरः । सुदूरत अतिविप्रकृष्टत इत्यर्थः सुदूरशब्दात् सप्तम्यन्तात् आद्यादित्वात्तसिप्रत्यय अतिदूरभागे इति यावत् भक्त्या अनुरागेण भक्तिलक्षण शाण्डिल्यसूत्रे 'सापरानुरक्तिरीश्वरे' इत्युक्त• लक्षणया आनत नम्र शरीर देहो यस्य ' शरीर वर्ष्मविग्रहे ' इत्यमर गरुत्मता प्रशस्ता गरुता पक्षा यस्य स गरुत्मान् तेन गरुडेन यवादित्वात् क्षय इति वत्व न सेव्यतेऽसौ सेव्यमान सेव् धातो कर्मणि लट् त । वृत्त्यनुप्रासालङ्कार ॥ ५ ॥

अर्करश्मिभयेनेव पातालतलमास्थितम् ।
लक्ष्मीमुखतुषारांशौ प्रीतया व्यापारितेक्षणम् ॥ ६ ॥
स्वमुखे सञ्चरद्दृष्टेरङ्कविन्यस्तपार्ष्णिना ।
स्पृशन्त पादपद्मेन पद्मायाः नाभिमण्डलम् ॥ ७ ॥
सव्यापसव्यभागस्थपाञ्चजन्यसुदर्शनम् ।
तद्द्वयस्थचन्द्रार्कविन्ध्यशैलमिवोच्छ्रितम् ॥ ८ ॥
पुरुष पुरुहूताद्या नत्वा गीर्वाणसंहतिः ।
सनातन स्कन्नशक्तिरूचे नुतियुतां गिरम् ॥ ९ ॥

---

अर्केति । अर्कस्य सूर्यस्य रश्मय किरणा 'वितर्कनार्कमार्तड' 'किरणप्रग्रहो रश्मी' इत्यमरौ । तेभ्यो भय भीति पचम्रीभयेनेति समास तेनेव सूर्यकिरणत्रासभीत्यैवेत्यर्थ । पातालस्य अधोभु[illegible]र तल 'अधोभुवनपाताल' इत्यमर । तत् आस्थित आधिष्ठित प्रीत्या प्रेम्णा '[illegible] प्रीतिः प्रमदो हर्षा' इत्यमर तुषारा हिमा अशव किरणा यस्य लक्ष्म्या इंदिराया मुख वक्त्र स एव तुषारांशु चद्र 'लक्ष्मी पद्मालया' इत्यमर । 'हिमांशुश्चद्रमाश्चद्र' इत्यमर । तस्मिन् व्यापार क्रिया सजाता ययोस्ते व्यापारिते तारकादि[illegible] तादृशे ईक्षणे नयने येन लक्ष्मीमुखचंद्र विलोकमानमित्यर्थ । उत्प्रेक्षानुप्रासालकारौ ॥ ६ ॥

स्वमुखे इति । स्वस्य आत्मन विष्णोरित्यर्थ मुख वक्त्रमिम् । सचरतीति सचरती दृष्टि यस्या सा सचरदृष्टि तस्या 'स्त्रिया पुवदित्यादिना पुवद्भाव । एतादृश्या पद्मायाः लक्ष्म्या अके उत्सगे विन्यस्त स्थापित पार्ष्णि अवयवविशेषो यस्य 'पुमान्पार्ष्णिस्तयोरध' इत्यमर । एतादृशेन पादपद्मेन पद्ममिव पाद पादपद्म तेन 'उपमित व्याघ्रादिभि' इति समास नाभे मडल चक्रवाल स्पृशतीति स्पृशन् त स्पृशत लक्ष्म्या अके पाद प्रसार्य तेन तन्नाभिमडल स्पृशतमित्यर्थ. अनुप्रासालकार ॥ ७ ॥

सव्येति । सव्य वाम अपसव्य दक्षिण 'वाम शरीर सव्य स्यादपसव्य तु दक्षिण' इत्यमर । एतादृशौ यौ भागौ तयोस्तिष्ठत इति सव्यापसव्यभागस्थे सुपिस्थ इति क पचजने दैत्यविशेषे भाव पांचजन्य 'गभीराञ्ञ्य इति सूत्रे पंचजनादुपसख्यान' इति वार्तिकेन ञ्यप्रत्यय पांचजन्य एतन्नामक शख. । सुदर्शन एतन्नामक चक्र सव्यापसव्यभागस्थे पाचजन्यसुदर्शने यस्य स 'शखो-लक्ष्मीपते· पांचजन्यश्चक्र सुदर्शन' इत्यमर । तटयो प्रांतयो द्वय द्वितय तत्र तिष्ठत इति तद्द्वयस्थौ तटद्वयस्थौ चंद्रार्कौ विधुसूर्यौ यस्य एतादृशो यो विन्ध्यश-शक: शैल पर्वत तद्वदुच्छ्रित । उपमालकार ॥ ८ ॥

पुरुषमिति । एव सप्तभि श्लोकै विष्णु निर्वर्ण्य इद्रादिदेवकृतां स्तुति वर्णयति । पुरुषमिति । पुरुभि बहुभि हूयते आहूयते यज्ञे इति शेष 'पुरुहू पुरु-

समुद्रमथने यस्य भ्रमन्मन्दरखण्डिताः।
तारा इव दिशो बभुः प्रदीप्ताङ्गदकोटयः ॥ १० ॥
येन दुर्वारवीर्येण सागराम्बरचन्द्रमाः।
शङ्खं पातालपालानां यशःपिण्डमिवोद्धृतम् ॥ ११ ॥

---

भूयिष्ठ' इत्यमरः। पुरुहूतः इन्द्रः आद्यो यस्याः सा पुरुहूताद्या एतादृशा गीर्वाणा इव यान इव निग्रहानुग्रहसमर्था येषां ते गीर्वाणाः देवाः तेषां सहतिः समुदायः स्कन्ना गलिता शक्तिः सामर्थ्यं यस्याः बलहीनेति यावत् एतादृशी सती अत्र स्कन्नशक्तीत्यस्य अश्लीलत्वात् सन्नशक्तिरिति पाठः साधुतरः तदा सन्ना अवसन्ना शक्तिः सामर्थ्यं यस्या सा सन्नशक्तिः एतादृशी सती सना भवः सनातनः 'साय चिर' इत्यादिना ट्युल् प्रत्यय तुडागमश्च 'सनातनचिरतनाः' इत्यमरः। पूर्पुरीषे अन्तर्यामितया तिष्ठतीति पुरुषः तं नत्वा नमस्कृत्य नुत्या स्तुत्या युता सहिता 'स्तवस्तवने स्तुतिर्नुतिः' इत्यमरः। गिरं वाणीं ऊचे बभाषे ब्रुवतेर्वचादेश। अनुप्रासालङ्कारः ॥ ९ ॥

इदानीं इन्द्रादिदेवसहतिः भगवन्तं नवभिः श्लोकैः स्तौति। समुद्रमथनेति। तत्र इत आरभ्य पट्श्लोकस्थयच्छब्दानां तस्मै स्मरणमात्रेणेति सप्तमश्लोकस्थ तच्छब्देन अन्वयः अग्रे च द्वाभ्यां पृथगेव स्तुतिः। समुद्रस्य सागरस्य मथनं विलोडनं मथे विलोडने भावे ल्युट् तस्मिन् भ्रमति परिवर्तते इति भ्रमन् स चासौ मन्दरः मथाद्रिः तेन खण्डिताः भिन्नाः यस्य विष्णोः प्रदीप्ते देदीप्यमाने एतादृशे ये अङ्गदे केयूरे 'केयूरमङ्गदं तुल्ये' इत्यमर। तयोः कोटयः आश्रयः 'स्त्रियः पाल्यश्रिकोटयः' इत्यमरः। तारा इव नक्षत्राणीव 'नक्षत्रमृक्षं भं तारा' इत्यमर। दिशः काष्ठाः बभुः व्यापुः वृन् वरणे लिट्। समुद्रमथने कूर्मरूपेण भगवता मन्दरस्य धृतत्वात् तत्सङ्घर्षणाद्विदीर्णाङ्गदकोटिप्रसरणेन इतस्ततस्ताराप्रसरणेनेव दिशो व्याप्ता बभूवुः। उपमालङ्कार ॥ १० ॥

येनेति। दुः खेन वार्यते इति दुर्वारं दु पूर्वकाद्वारयतेरीषद्दुःसु' इत्यादिना खल्। दुर्वारं वीर्यं प्रभावो यस्य 'वीर्यं बले प्रभावे च' इत्यमर एतादृशेन येन विष्णुना सागरैः सगरकुलोत्पन्नैः पूरितः सागरः शेष इति लक्षणेन अण् प्रत्ययः न च वृद्धाच्छ स्यादिति वाच्यं सूत्रोपात्तेष्वेवार्थेषु वृद्धेभ्यश्छो भवति न तु शेष इति लक्षणेन विहितेष्वर्थेषु अत एव काञ्चनेन निर्मिता काञ्चनीति प्रयोगः सङ्गच्छते स्पष्टं चेदं काञ्चनेन निर्मिता काञ्चनीत्यादौ दोषि कोण् बोध्यः इति शब्देन्दुशेखरे। पूर्वं प्रियव्रतरथचरणखाता एव इमे आसन् सगरकुलोत्पन्नैर्भगीरथैर्यदा गङ्गानीता तदा इमे पूर्णा. इति श्रीमद्भागवते स्पष्टं। स समुद्रः स एव अम्बरं व्योम तत्र चन्द्रमा इव इदं शङ्खस्य विशेषणं न नपुंसकत्वं शङ्खस्य भिन्नलिङ्गानामपि विशेषणत्वदर्शनात् अतएव यदि वे प्रमाणं स्युः इत्यादि प्रयोगाः सङ्गच्छन्ते। तदुक्तं 'लिङ्गसङ्ख्याविभेदेपि

यमंशद्वयसंसक्तचन्द्रादित्याङ्गदश्रियम् ।
नेमुस्त्रिविक्रमे देवास्ताराहाराङ्कवक्षसम् ॥ १२ ॥
मंथवातभ्रमन्मेघनक्षत्रादित्यमण्डलम् ।
पुरा निर्मथितं येन व्योमापि सह सिन्धुना ॥ १२ ॥

षणविशेष्यता । विभक्तिः पुनरेकैव विशेषणविशेष्ययोः ' इत्यभियुक्तोक्तिः सगच्छते: । एतादृश पाताल अधोभुवन पालयतीति पातालपालाः तेषां पातालवासिनामित्यर्थः यशसः पिंडं समूह यशः पिंडं इव शखं कबुः उद्धृत बहिर्निष्कासित ' शखः कबौ न योषिता भालास्थिनिधिभिन्नरे ' इति मेदिनी । उत्प्रेक्षालकार ॥ ११ ॥

यमिति । देवाः दीव्यन्ति द्योतते इति देवाः दिव्धातोः पचाद्यच् । इन्द्रादयः त्रिविक्रमे त्रिषु भुवनेषु विक्रमः पादविक्षेपः तस्मिन् वामनावतारे इत्यर्थः यं विष्णु अंशयोः भागयोः द्वय द्वितय तस्मिन् ससक्ता सक्ता चदति आल्हादयति इति चद्रः ' स्फायितञ्चि ' इत्यादिना चदते रन् प्रत्ययः । अदितेरपत्य पुमान् आदित्यः ' दित्यदित्यादित्यादिना अदितेर्ण्यप्रत्ययः चद्रः शशी आदित्यः सूर्यः तावेव अगदे केयूरे तयोः श्रीः शोभा अशद्वयससक्ता चद्रादित्यागदश्रीर्यस्य एतादृश ताराः नक्षत्राण्येव हारः मुक्तावली ' नक्षत्रमृक्ष भ तारा ' ' हारो मुक्तावली ' इत्युभयत्राप्यमरः । तारा हारः अकः चिन्ह यस्य तत्ताराहाराङ्क एतादृश वक्षः उरो यस्य 'उरो वत्सश्च वक्षश्च' इत्यमरः । एतादृश यं परमात्मान नेमुः प्रह्वीबभूवु । नमप्रह्वत्वे शब्दे च लिट् अत एकहल्मध्येति एत्वाभ्यासलोपौ । ' अणोरणीयान् महतो महीयान्' इति श्रुत्या त्रिविक्रमे विराड्रूपस्य यस्य परमात्मनः चद्रसूर्यनिकटे बाहौ, प्राप्त्या चद्रसूर्यौ अगदशोभाकारिणौ नक्षत्रमंडलनिकटे वक्षस्थलप्राप्त्या नक्षत्रमडल हारशोभाकारि यस्य जातं त देवा प्रणेमुरित्यर्थः। अत्र बाहू चद्र सूर्यमडलपर्यंत गतौ इति वक्तव्ये तथा नक्षस्थल नक्षत्रमडलपर्यंतं गतं इति वक्तव्ये भग्यतरेण तस्यैवार्थस्योक्तत्वात् पर्यायोक्तालकारोऽनुप्रासश्च ' पर्यायोक्त तु गम्यस्य वचो भग्यतराश्रय ' इति लक्षणात् ॥ १२ ॥

मथेति । येन विष्णुना पुरा समुद्रमथनसमये ' पुरातीते ' इत्यमरः । मथस्य वैशाखस्य ' वैशाखमथमथानौ ' इत्यमरः । तत्सबधी यो वातः वायुः मदराचलरूपमथस्य भ्रमणेन उत्पन्नो वायुरित्यर्थः तेन भ्रमत् चलत् भ्रमु चलने इत्यस्माच्छतृप्रत्ययः । एतादृश मेघानां अभ्राणां नक्षत्राणां उडूनां आदित्यस्य

नाभिपद्मस्पृशौ भीमौ येन मायाशयालुना।
पाणिभिः पाटितौ कामं कीटवन्मधुकैटभौ ॥ १४ ॥
सर्वं लोकत्रयं यश्च संहृत्य शयनं गतः।
दृश्यते सलिलस्कन्धः सान्द्रीभूत इवोदधौ ॥ १५ ॥
तस्मै स्मरणमात्रेण तुभ्यं सद्यस्तमोनुदे।
नमः सत्त्वमधिश्रित्य त्रैलोक्यं परिरक्षते ॥ १६ ॥

---

नाभीति। मायाशयालुना शेते तच्छीलः शयालुः 'शीङोवाच्यः' इत्यनेन आलुच् प्रत्ययः मायया योगनिद्राख्यया शयालुः एतादृशेन येन विष्णुना नाभिपद्मस्पृशौ नाभिरेव पद्म अथवा नाभौ पद्म कमल सुप्सुपेति समासः नाभेः सवधि पद्ममितिपष्ठीतत्पुरुषो वा तत्स्पृशतस्तौ नाभिपद्मस्पृशौ नाभिपद्मोपपदे 'स्पृशोऽनुदके क्विन्' इति स्पृशेः क्विन्। सद्यः उत्पन्न नाभिपद्मस्य ब्रह्मणा सह स्पर्धमानौ इत्यर्थः। भीमौ बिभ्यत्याभ्यामिति भीमौ 'भीमादयोऽपादाने' इति बिभेतेरपादाने मक्प्रत्ययः। मधुश्च कैटभश्च मधुकैटभौ एतन्नामानौ दैत्यौ काम यथेच्छ 'काम प्रकामं पर्याप्त' इत्यमरः। कीटेन तुल्यं कीटवत् क्रिमिवत् 'तेन तुल्य क्रियाचेद्वतिः' इति तृतीयांताद्वतिः पाणिभिः चतुःसंख्याकैः भुजैः पाटितौ विदारितौ' यद्यपि कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य परमात्मनः नेद दुष्करं तथापि नृसिंहाद्यवतारवत् चतुर्भिः पाणिभिः युद्धपूर्वकं तयोर्विदारणं अन्यतमा लीलेव इति सूचनार्थं पाणिभिरिति बहुवचनमुक्तं' स्वाधीनैः पदार्थैः तादृशसमर्थानां क्रीडन सुकमेव। उक्त च पुष्पदन्तेन 'रथः क्षोणी यंता शतधृतिरगेन्द्रोधनुरथो रथांगे चंद्रार्कौ रथचरणपाणिः शर इति। दिधक्षोस्ते कोयं त्रिपुरतृणमाडम्बरविधिः विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधिय इति ॥ १४ ॥

सर्वमिति। सर्वं अशेष त्रयः अवयवा यस्य तत्त्रय लोकानां भुवनानां त्रय त्रितय 'लोको विष्टप भुवनं जगत्' इत्यमर संहृत्य उपसंहार कृत्वा उदरे निवेश्येति यावत् शयन निद्रां शीङोभावे ल्युट् गतः प्राप्तः यः विष्णुः उदकानि धीयन्ते यस्मिन् स उदधिः 'पेष वासवाहनधिषु च' इति उदकस्योदादेशः दधातेः 'कर्मण्यधिकरणे च' इति किप्रत्ययः तस्मिन् सांद्रीभूतः सान्द्रः निबिडः तद्वद्भवतीति सान्द्रीभूतः निबिडीभूतः 'अभूततद्भावे' इति च्विः 'अस्य च्वौ' इतीत्व। सलिलस्य उदकस्य स्कंधः समूहः 'स्कंधःस्यान्नृपतावंशे संपरायसमूहयोः। इति मेदिनी। स इव दृश्यते अवलोक्यते। दृश्धातोः कर्मणि लट्। उत्प्रेक्षालंकारः१५

तस्मा इति। स्मरणमेव स्मरणमात्र तेन 'मात्र कार्त्स्न्येऽवधारणे' इति कोशात् एवार्थमात्रशब्देन मयूर व्यंसकादित्वात्समासः। 'हेतौ' इति हेत्वर्थे तृतीया। सद्यः सपदि 'सद्यः सपदि तत्क्षणे' इत्यमरः। तमः अज्ञान नुदति प्रेरयति नाशयति इति तमोनुद् 'क्विप् च' इति क्विप् तस्मै सत्त्वं सत्त्वगुण अधि

स्थितिनिर्वाणसंहारभेदयोगेन भेदितः ।
त्रिधा ते समभूद्योगः स्पृष्टसत्त्वरजस्तमाः ॥ १७ ॥
कुक्षौ तव परिभ्रम्य पश्यन्विश्वं विशां पतिः ।
विवेद त्वां विदामग्र्यस्त्रैलोक्यभरसासहिम् ॥ १८ ॥
एवं भक्त्या जगन्नेता नुतो नाकस्य भोक्तृभिः ।
हरिर्हारि हितं वाक्यं जगाद गदनाशनः ॥ १९ ॥

---

आश्रित्य त्रैलोक्य त्रयो लोकास्त्रिलोकय 'दिक्सङ्ख्ये संज्ञाया' इति समास. । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् परिरक्षति परिपालयति इति परिरक्षन् तस्मै परिरक्षते तस्मै पूर्वोक्तगुणविशिष्टाय तुभ्य परमात्मने नमः । अस्तु ॥ १६ ॥

स्थितीति । स्थितिः पालन निर्वाण उत्पत्तिः यद्यपि निर्वाणशब्दः उत्पत्तौ कोशादिषु न पठितः तथापि प्रकृते योग्यतया निःपूर्वाद्वातेर्भावे ल्युट्प्रत्ययात्ः निर्वाणशब्दो निःसरणवाची यथाकथचिदुत्पत्तिवाची गृह्यते । सहारो लयः एतद्रूपो यो भेदः तस्य योगः सबधः तेन भेदितः भेदः संजातोऽस्य भेदितः 'तदस्य सजात तारकादिभ्य इतच्' इतीतच् प्रत्ययः भिन्नीकृत इत्यर्थः सत्त्वं सत्त्वगुणः रजः रजोगुणः तमस्तमोगुणः स्पृष्टानि स्पर्शविषयीकृतानि सत्त्वरजस्तमांसि यस्मिन् स स्पृष्टसत्त्वरजस्तमाः एतादृशस्ते तव योगः उपाय 'योगः सहननोपायध्यानसगतियुक्तिषु' इत्यमरः । त्रिधा त्रयः प्रकारा यस्य स त्रिधा 'सङ्ख्याया विधार्थे धा' इति धा प्रत्ययः त्रिप्रकारकः समभूत् । सपूर्वाद्भवतेर्लुङ् गातिस्थेति सिचो लुक् । स्थित्युत्पत्तिप्रलयभेदहेतुना भिन्नः सत्त्वरजस्तमोगुणैश्च हेतुभिः भिन्नः तव लीलारूप उपायस्त्रिधा भिन्न इति यावत् ॥ १७ ॥

विदन्ति जानन्तीति विद. तेषां विदुषां विदज्ञाने क्विप् अग्र्यः श्रेष्ठ. कुक्षाविति । विशां मनुजाना प्रजानामिति यावत् 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । पतिः स्वामी ब्रह्मा परिभ्रम्य इतस्ततः शोधनेन भ्रान्तिं प्राप्य तव परमेश्वरस्य कुक्षौ विश्व जगत् सकल पदार्थजात वा पश्यति इति पश्यन् अवलोकयन् दृशधातोर्लटः शत्रादेशः यद्यपि तत्र अप्रथमासमानाधिकरणे इति निषेधात् शत्रादेशो दुर्लभः तथापि लडित्यनुवर्तमाने पुनर्लड्ग्रहणसामर्थ्यात्प्रथमा सामानाधिकरण्येऽपि क्वचिद्भवति एतादृशः सन् त्वा विष्णु त्रयो लोकास्त्रिलोकय पूर्ववत्समासः स्वार्थेष्यञ् च तस्य यो भरः भारः तस्य । सासहिः सहते तच्छीलः सासहिः त सासहिं सहनशील । 'आकेस्तच्छीलेत्यधिकारे सासहि वावहि चाचलि पापतीनामुपसङ्ख्यानात्साधु' । एतादृश विवेद जानातिस्म वेत्तेर्लिट् अनुप्रासालङ्कारः । तवोदरे यदि विश्वं स्थित तर्हि त्रैलोक्य तिष्ठेदेवेति तवोदरे विश्वदर्शनेन ब्रह्मा निर्णीतवान् इत्यर्थः ॥ १८ ॥

एवमिति । एव पूर्वोक्तप्रकारेण नाकस्य नास्ति अक दुःख यस्मिन् स नाकः

प्रबलारिबलप्राणविक्रियाहेतुहेतयः ।
किन्तु स्कन्नौजसो जाता देवा दैवक्षता इव ॥ २० ॥
हरेर्ध्यानारुणा शोकक्षामा नेत्रपरम्परा ।
बिभर्ति किं परिम्लानरक्तोत्पलवनश्रियम् ॥ २१ ॥
पाशपाणिरसाविप्रविग्रहो वनगोचरः ।
वीरोऽपि वरुणः केन क्षुद्रः पाशीव पीडितः ॥ २२ ॥

---

स्वर्गः 'नभ्राण्नपान्नवेत्यादिना नञो नलोपाभावः' 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' इत्यमरः । भुजति पालयति इति भोक्तारः भुजपालनाभ्यवहारयोः इत्यस्मात्तृच्प्रत्ययः तैः देवैः भक्त्या प्रेम्णा नुतः स्तुतः णुस्तुतौ क्तप्रत्ययः जगतः विश्वस्य नेता पालकः, गदो रोगः खेद इति यावत् तस्य नाशनः एतादृशो हरिः विष्णुः हारि अवश्यं मनोहरतीति हारि 'आवश्यकाधमर्ण्ययोः' इति णिनिः एतादृशं इति इतीवर्ह वाक्यं जगाद उवाच गद व्यक्तायां वाचि लिट् । अनुप्रासालंकारः ॥ १९ ॥

हरिः इति वाक्यं जगादेत्युक्तं तदेव देववाना सामान्यविशेषरूपेण दुर्दशावर्णनपूर्वकं दर्शयति । प्रबलेति । प्रकृष्टं अतिशयितं बलं येषां ते प्रबलाः 'प्रादिभ्यो धातुजस्य वाच्यो वा' इत्यनेन समासः ते च ते अरयः शत्रवश्च तेषां बलं सैन्यं 'वरूथिनी बलं सैन्यं' इत्यमरः । तस्य ये प्राणा असवः तेषां या विक्रिया नाशः तस्य हेतवः कारणीभूताः 'हेतुर्ना कारणं बीजं' इत्यमरः । हेतयः शस्त्राणि येषां ते 'हेतिर्ज्वालास्त्रसूर्यांशुषु' इति हैमः एतादृशाः । हे देवः हे अमराः क्षतं नष्टं दैवं येषां ते दैवक्षताः आहिताग्न्यादित्वात् क्षतशब्दस्य पूर्वनिपातः नष्टभागधेया इत्यर्थः स्कन्नं नष्टं ओजो बलं येषां ते स्कन्नौजसः किन्तु जाताः कथं जाता इत्यर्थः । पूर्वं प्रबलशत्रुप्राणनाशनहेतुशस्त्रा अपि हतदैवा इव कथं निर्वीर्या जाता इत्यर्थः । अनुप्रासः उपमा चालङ्कारौ ॥ २० ॥

प्रबलारीति विशेषेण सामान्यतो देवानां दुर्दशां वर्णयित्वा इदानीं प्रत्येकं देवानां तां दर्शयितुं प्रथमं तावदिन्द्रस्य तां दुर्दशां दर्शयति । हरेरिति । हरेः इन्द्रस्य 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना०' इत्यमरः । ध्यानेन चिन्तया अरुणा आरक्ता ध्यै चिन्तायां 'ल्युट् च' इति भावे ल्युट् । चिन्तातिशयस्य निद्राऽभावात् नेत्रारक्तत्वं लोकप्रसिद्धं । शोकेन शुचा क्षामा कृशा 'क्षायो मः' इति निष्ठातस्य मादेशः एतादृशी नेत्राणां नयनानां परम्परा पंक्तिः पराया सहस्रनयनत्वं प्रसिद्धं । परिम्लानानि यानि रक्तोत्पलानि तेषां वनं षण्डं समूह इति यावत् तस्य श्रियं शोभां किं बिभर्ति कुतोऽधारयतीत्यर्थः । अनुप्रासोऽलंकारः उपमा च ॥ २१ ॥

इदानीं वरुणदुर्दशां वर्णयति । पाशपाणिरिति । पाशः रज्जुपाशः पाणौ हस्ते

किमयं शोकसन्तापैर्मातरिश्वा कृशोऽपि सन् ।
भूरिभिर्निजनिःश्वासैः पुनरेवोपचीयते ॥ २३ ॥

सम्पद्ध्रुवपरावृत्तिरेवं विधिनिबन्धना ।
शोकविश्वभुजा सोऽयं दह्यते दहनोऽपि सन् ॥ २४ ॥

सम्प्राप्तजड़िमा भानुस्तीव्रतापश्च चन्द्रमाः ।
किमेतौ वहतो देवौ धामव्यत्ययविप्लवम् ॥ २५ ॥

---

यस्य स पाशपाणिः, इष्टविग्रहः इष्टाः अभीष्टाः ये वयः पक्षिणः तेषां ग्रहो ग्रहणं यस्य अभीष्टपक्षिग्राहीति यावत् 'ग्रहवृदृनिश्चिगमश्चेति ग्रहधातोरप् प्रत्ययः वनं अरण्यं गोचरो विषयो यस्य स वनगोचरः एतादृशः क्षुद्रः तुच्छः पाशी पाशः अस्यास्तीति पाशी पाशीव पाशधारी पुरुष इव। पाशपाणिः पाशः नागपाशः पाणौ हस्ते यस्य 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकात् व्यधिकरणपदो बहुव्रीहिः इष्टः अभीष्टः विग्रहः देहो यस्य सर्वाभिलषणीयदेहधारीत्यर्थः वनं उदकं गोचरो विषयो यस्य 'जीवनं भुवनं वनं' इत्यमरः। जलदेशस्थायीत्यर्थः असौ विप्रकृष्ट-देशवर्ती वीरोऽपि वरुणः केन पुरुषेण पीडितः उत्क्लेशितः। उपमाश्लेषा-लंकारौ अनुप्रासश्च ॥ २२ ॥

इदानीं वायोर्दुर्दशां दर्शयति। किमयमिति। अयं सन्निकृष्टः 'इदमस्तु सन्निकृष्टमित्यभियुक्तोक्तेः' मातरिश्वा मातरि अंतरिक्षे श्वयति वर्धत इति मातरिश्वा वायुः 'मातर्यंतरिक्षे श्वयति मातर्याश्वसितीतिवेति' यास्कः 'श्वनुक्षन्निति निपातनात्साधुः' 'मातरिश्वा सदागतिः' इत्यमरः शोकस्य शुचः संतापाः तपनानि तैः कृशोऽपि सन् तनुरपि सन् 'श्लक्ष्णं दभ्रं कृशं तनु' इत्यमरः भूरिभिः बहुभिः 'स्फारं भूयश्च भूरि च' इत्यमरः निजाः स्वकीयाः ये निःश्वासाः दुःखजनितश्वासाः पुनरेव पुनरपीत्यर्थः उपचीयते पुष्यति शोकसंतापैः कृशोऽपि निःश्वासानां वायुरूपत्वात् दुःखजन्यनिःश्वासैः पुनः पुष्टो भवतीत्यर्थः। पूर्वरूपालंकारः। 'पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि' इति लक्षणात् ॥ २३ ॥

इदानीमग्नेर्दुर्दशां दर्शयति। सम्पदिति। एवं अनुभूतप्रकारेण सम्पद्ध्रुवपरावृत्तिः ध्रुवं निश्चितं परावृत्तिः परावर्तनं सुप्सुपेति समासः। सम्पदः संपत्तेः ध्रुवपरावृत्तिः सम्पद्ध्रुवपरावृत्तिः निबध्यते प्राप्यते अनेनेति निबंधनं कारणं, विधिः दैवं निबंधनं कारणं यस्याः सा विधिनिबंधना, सः प्रसिद्धः अयं पुरोवर्ती दहनः दहति भस्मीकरोतीति तथा 'कृत्यल्युटो बहुलं' इति बाहुलकात् कर्तरि ल्युट्। दहनोऽपि सन् शोकः शुक् स एव विश्वभुक् अग्निः तेन दह्यते भस्मीक्रियते काव्यलिंगमलंकारः तदुक्तं 'समर्थनीयस्यार्थस्य काव्यलिंगं समर्थनमिति' ॥ २४ ॥

१ इदानीं सूर्यचन्द्रमसोर्दुर्दशां दर्शयति। सम्प्राप्येति। जडस्य शीतलस्य भावो जडिमा 'पृथ्वादिभ्य इमनिज्वा' इति भावे इमनिच् प्रत्ययः सम्प्राप्तः सलब्धः

शुचैव सगदः सोऽहं भूयः किं धृतयाऽनया ।
इति त्यक्ता गदा नूनं मित्रेण गिरिधन्वनः ॥ २६ ॥
लाघवं केन कीनाशे कृतं सायुधवाहने ।
रक्षके महिषस्यैवं दण्डहस्ते शिशाविव ॥ २७ ॥
कल्पानिल इवावार्यः स्कन्दो दैन्यं किमास्थितः ।
प्रेरकः शिखिनो भीमः शक्त्या पातिततारकः ॥ २८ ॥

---

'लब्धं प्राप्तं विन्नं' इत्यमरः जडिमा शीतत्वं येन एतादृशः भानुः सूर्यः चंद्रमाः विधुः तीनतापश्च । चः समुच्चये । तीव्रः तीक्ष्णः तापः संतापो यस्य एतादृशः एतौ पूर्वोक्तौ देवौ सूर्याचन्द्रमसौ धाम्नोः तेजसोः व्यत्ययः विपर्यासः व्यतिपूर्वादेतेः 'एरच्' इति भावेऽच् 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरः । धामव्यत्ययेन विरूपः दुर्दशा तं किं वहतः धारयतः वहप्रापणे लट् ॥ २५ ॥

इदानीं कुबेरस्य दुर्दशां दर्शयति । शुचैवेति । सोऽहं प्रसिद्धो धनदः शुचैव शोकेनैव 'हेतौ' इति हेत्वर्थे तृतीया, गदेन रोगेण सहितः सगदः अथ च गदया आयुधविशेषेण सहितः सगदः 'तेनसहेति तुल्ययोगे' इति समासः वोपसर्जनस्येति सादेशः, अस्मीति शेषः । भूयः पुनः धृतया अवलंबितया अनया गदया किं क उपयोग इत्यर्थः । गम्यमानक्रियानिरूपितकरणत्वात्तृतीया इति हेतोः शुचैव सगदत्वे पृथग्गदाधारणस्य उपयोगाभावात् इत्यर्थः । गिरिः धनुर्यस्य 'धनुषश्च' इति अनङादेशः तस्य शङ्करस्य मित्रेण सख्या कुबेरेण इति यावत् 'अथ मित्रं सखा सुहृत्' इत्यमरः । गदा आयुधविशेषः नूनं निश्चयेन त्यक्ता उज्झिता 'त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे' इत्यमरः । उत्प्रेक्षालङ्कारः ॥ २६ ॥

इदानीं यमस्य दुर्दशां दर्शयति । लाघवमिति । आयुधं शस्त्रं उह्यते अनेनेति वाहनं वहतेस्त्युटि वाहनमाहितान् इति निपातनाद्वृद्धिः आयुधवाहनाभ्यां सहितः तस्मिन् महिषस्य स्ववाहनस्य रक्षति पालयतीति रक्षकः रक्ष पालने ण्वुल् दंडः यमदण्डः हस्ते यस्य एतादृशे कीनाशे यमे महिषस्य छागस्य रक्षके पालके रक्षणार्थं गृहीतदण्डः हस्ते यस्य एतादृशे शिशाविव बालक इव 'पृथुकः शावकः शिशुः' इत्यमरः । लाघवं लघोः भावस्य कर्म लाघवं 'इगन्ताच्चलघुपूर्वादिति' कर्मण्यण् उचितं कर्मेत्यर्थः केन पुरुषेण कृतं आचरितं सायुधवाहने दंडहस्तेत्यादिविशेषणैः अपरामाण्ये यमे महिषरक्षकगोपशिशाविव । केनापराधेनेत्यर्थः । उत्प्रेक्षालङ्कारः ॥ २७ ॥

इदानीं कार्तिकेयस्य दुर्दशां दर्शयति । कल्पानिल इति । शिखिनः शिखाः मयूरस्य सन्ति यस्य स शिखी 'व्रीह्यादिभ्यश्च' इति मत्वर्थे इनि प्रत्ययः 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः । शिखा शिरः' इत्यमरः । तस्य अश्वः प्रेरकः प्रवर्तकः

**आहत्य हतसर्वास्त्रा भ्रूधनुर्मात्रधारिणी ।**
**कटाक्षशरशेषेयं चण्डी केन कृता रणे ॥ २९ ॥**

---

प्रपूर्वकात् ईर् गतौ इत्यस्मात् ण्वुल्प्रत्ययः अतएव वायुसखत्व वन्हेः ।
भीमः भयानकः' 'घोरं भीमं भयानकं' इत्यमरः । शक्त्या सामर्थ्येन
'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । शक्त्ये॥ २५ ॥
तृतीया । पातिततारकः पातिताः स्खलिताः तारकाः न
भं तारा तारकाऽप्युडु वास्त्रियां' इत्यमरः । कल्पान्तेऽयः पक्षिणः तेषां प्रहो
प्रवृत्तत्वात् तेन नक्षत्रादिपातनं युक्तमेव। नन्वत्र पृथेति महधातोरत् प्रत्ययः
त्सापेक्षमसमर्थवत् इति समासो दुर्लभः एतन्मूल शः क्षुद्रः तुच्छः पाशी पाशः
वृत्तस्य वा विशेषणयोगो न' इति ... । पाशपाणिः पाशः नागपाशः पाणौ
त्यसापेक्षत्वात् नित्यसापेक्षा मोर्दो' इति ज्ञापकात् व्यधिकरणपदो बहुव्रीहिः
धवत् इति न प्रवर्तते। तदुक्तं सर्वाधिवनकदेहधारीत्यर्थः वनं उदकं गोचरो
वाक्यवत्सा व्यपेक्षा हि स नं' इत्यमरः। जलदेशस्थायीत्यर्थः असौ विप्रकृष्ट-
इति सूत्रे मनोरमाशब्दरत्न पुरुषेण पीडितः उत्क्लेशितः । उपमाश्लेषा-
वायु 'संवर्तः प्रलयः ॥
स इव अवार्यः वारयितुं शक्ति । किमयमिति । अयं सन्निकृष्टः 'इदमस्तु सन्नि-
इति ण्यत् । न वार्यः अवश्य मातरि अंतरिक्षे श्वयति वर्धत इति मातरिश्वा
इत्यर्थः । शिखिनः मयूरस्य 'शिखावेसितीतिवेति' यास्कः 'श्वतुक्षन्निति नि-
त्प्रेरकः भीमः दैत्यानां भयंकरः देवसेनानात्लोकस्य शुचः संतापाः तपनानि
विषेण पातितः नाशितः तारकः एतन्नामा असुरो येन त्यमरः भूरिभिः बहुभिः
केयः दीनस्य भीतस्य भावः दैन्यं 'ब्राह्मणादित्वात् ष्यञ् निःश्वासाः दुःखजनित-
वाच्यवद्दुर्गते भीते' इति मेदिनी । किं कृतः आस्थि कृशोपि निःश्वासानां
पमेऽलंकारौ ॥ २८ ॥ पूर्वरूपालंकारः ।

इदानीं चंड्याः दुर्दशां दर्शयति । आहत्येति । इय पुरोवर्ति
'चडी तु शिवयोषिति' इति हैमः । रणे आजौ 'रणाः कलहविग्रहौ' इत्यमरः ।
आहत्य ताडयित्वा हतसर्वास्त्रा हतानि अपहृतानि सर्वाणि निखिलानि अस्त्राणि
यस्याः सा 'अनेकमन्यपदार्थे' इति बहुव्रीहिः । भ्रूः भृकुटी धनुरिव धनुष्य-
मिव इति भ्रूधनुः 'उपमितं व्याघ्रादिभिः' इत्यादिना समासः भ्रूधनुरेव भ्रूधनु-
र्मात्रं 'मयूरव्यंसकादित्वात्समासः तत् धरति तच्छीला इति भ्रूधनुर्मात्रधारिणी
'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः 'ऋन्नेभ्य' इति ङीप् । कटाक्षाः
अपांगदर्शनानि शरा इव बाणा इव 'कटाक्षोऽपांगदर्शने' 'कलंबमार्गणशराः'
इत्यमरौ । ते एव शेषः अवशेषो यस्याः सा एतादृशी केन पुरुषेण कृता ।
सकलायुधैः शुंभादिदैत्यमर्दिन्यपि हठात् हतसकलास्त्रा शत्रुष्वनुपयुक्तभ्रूधनुः

प्रमथानामधीशस्य माथकस्यासुरद्विषाम् ॥
कूटस्थोऽपि मद. शोपवैकृतं किन्नु सेवते ॥ ३० ॥
वक्त्रश्वासाग्निपिङ्गाङ्गकर्कोटाबद्धकन्धरः ।
नागशोणितदिग्धास्यस्तार्क्ष्यो राजशुकायते ॥ ३१ ॥
नाडिजालनद्धा चास्य फणावली ।
प्रेरकः शिञ्जिते वर्पान्वे घनश्रेणीव वासुकेः ॥ ३२ ॥

---

'लब्ध प्रासं विग्र' इत एतादृशी दुर्दशावती केन कृतेति यावत् । उपमा-
विधु तीव्रतापश्च च
पूर्वोक्तौ देवौ सूर्याचन्द्रमसौ द्युति । प्रमथानां इति । सुरान् देवान् द्विपतीति
'एरच्' इति भावेऽच् 'गृहदेहत्विट्प्रभाव'। यद्यपि पुस्तके असुरद्विषा इति पाठो
विन्व दुर्दशा त किं वदत घारयत यद्यसुराश्चते द्विषश्चेति कर्मधारये तु
इदानीं कुवेरस्य दुर्दशां दर्शयति "पर्ण विशेष्येण बहुल' इति
शोकेनैव 'हेतौ' इति हेत्वर्थे तृतीया, गदेन रोगेण करणस्याऽनित्यत्वस्वीकारे
गदया आयुधविशेषेण सहित सगद 'तेनसहेति' कस्य नाशकस्येति यावत्
वोपसर्जनस्येति सादेश , असीति शेप । भूय 'प्रमथा स्यु पारिषदा'
गदया किं क उपयोग इत्यर्थ । गम्यमानक्रिया कूटस्थ कूट सन् निश्चल-
त्वेनैव सगदत्वे पृथग्गदाधारणस्य उपयोगाभ कालव्यापी स कूटस्थ ' इत्यमरः
'धनुपश्च' इति अनन्यादेश तस्य शक्र । एतादृशोपि मद गर्व 'चित्तोद्रेक
'अथ मित्रं सखा सुहृत्' इत विकार 'नपुसके भावे क्त' इति क्त
उद्धिता 'त्यक्त हीन स्वार्थे अण् शोपेण नाशेन वैकृत विकार इत्यर्थ किंनु
लकार ॥ २६ ॥ यावत् । अहङ्कारेण दैत्यविघातकस्य शिवस्य अहङ्कार
॥ ३० ॥

इदानीं यमस्य दु वर्णयति । वक्त्रेति । उच्यते अनेनेति वक्त्र मुख वचधातो.
वाहन वहतेर्ल्युटि इत्यादिना ष्टुणादिसूत्रेण त्र । तस्य श्वासा ते एव अग्नि
तस्मिन् अग्निपस पिशङ्ग 'कडार कपिल पिंग' इत्यमर । एतादृश अग शरीर यस्य
'अग प्रतीकोऽवयव' इत्यमर एतादृशो य कर्कोट एतन्नामको नाग तेन
आबद्धा नद्धा कधरा ग्रीवा यस्य 'शिरोधि कधरेति' अमर । नागाना सर्पाणां
शोणित रक्त तेन दिग्ध उपचित व्याप्त दिहउपचये कर्मणि क्त एतादृश तार्क्ष्य
गरुड 'गरुत्मान्गरुडस्तार्क्ष्य' इत्यमर । राज्ञां शुक कीर राजशुक । शुकानां
राजा राजशुक इत्यपि 'राजदन्तादिषु पर' इत्यनेन साधु सइव आचरति इति
राजशुकायते 'कर्तुं क्यङ् सलोपश्चेति' क्यङ् प्रत्यय । 'अकृत्सार्वेति' दीर्घ ।
अत्र तार्क्ष्यस्य राजशुकत्व समर्थनापेक्ष तस्य च विशेषणद्वयेन समर्थनात् काव्यलिं
गमलकार तदुक्त 'समर्थनीयस्यार्थस्य काव्यलिंग समर्थन' इति ॥ ३१ ॥

अथेदानीं वासुकिनामसर्पस्य दुर्दशां दर्शयति । शिञ्जितेति । चक्कार समु-

पृष्टवन्तमिति प्रष्टः प्राज्ञः प्राञ्जलिरव्ययम् ।
धिषणो धिषणागम्यं जगाद जगदीश्वरम् ॥ ३३ ॥
त्वया विज्ञातमेवेदं सर्वज्ञ पुनरुच्यते ।
असौहित्यं हि भृत्यानां स्वामिनि स्वार्तिजल्पने ॥ ३४ ॥

---

वायार्थकः अपिबेत्यर्थः अस्य पुरोवर्तिनः वासुकेः वसु रत्नं के मूर्ध्नि यस्य वसु कायतीति वा वसुकः कै शब्दे इत्यस्मात् कः तस्यापत्य वासुकिः 'अतइञ्' इति इञ् प्रत्ययः। तस्य सर्पराजस्य 'वासुकिस्तु सर्पराजः' इत्यमरः। साग्निजिव्हा अग्निना (अग्निवत् ज्वालया) सहिता साग्निः एतादृशी जिव्हा यस्याः सा अथवा दाहरूपैककार्यकारित्वादग्निपदेन विषमुच्यते तेन सहिता साग्निः 'तेनसहेति तुल्ययोगे' इति बहुव्रीहिः 'वोपसर्जनस्य' इति सादेशः साग्निः जिव्हा यस्याः सा साग्निजिव्हा एतादृशी फणावली फणानां फटानां आवली पंक्तिः 'फटायां तु फणाद्वयोः' इत्यमरः। 'पंक्तिरावली' इति त्रिकाण्डशेषः। वर्षाते वर्षाणां प्रावृषः अंतः नाशः समाप्तिरित्यर्थः तस्मिन् 'वर्षाअथ शरत्स्त्रियां' इत्यमरः। तडित्-जालनद्धा ताडयतीति तडित् विद्युत् तस्याः जाल समूहः तेन नद्धा बद्धा युक्तेति यावत् घनश्रेणीव घनानां मेघानां श्रेणी पंक्तिः 'श्रेणी लेखास्तु राजयः' इत्यमरः। सा इव किंतु म्लायति कुतो म्लायतीत्यर्थः। म्लै म्लै हर्षक्षये लट्। उपमालंकारः॥ ३२॥

एव त्रयोदशभिः श्लोकैः सामान्यविशेषरूपेण दुर्दशाहेतु वृत्तांत भगवत सर्वदेवताभिप्राय श्रेष्ठेन भाषितव्यमिति न्यायेन बृहस्पतिः प्रत्युवाचेत्याह। पृष्टवंतमिति। इति पूर्वोक्तप्रकारेण 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः। पृष्टवंत प्रच्छ ज्ञीप्सायां इत्यस्मात् 'निष्ठा' इत्यनेन भूते क्तवतुप्रत्ययः कृतप्रश्नमिति यावत् धिषणागम्यं धिषणया बुध्या गम्यं ज्ञेयं ये गत्यर्थास्ते ज्ञानार्था इति न्यायेन गम्लृ सृप्लृ गतौ इत्यस्मात् 'पोरदुपधात्' इति यत्। नास्ति व्ययः नाशो यस्य स अव्ययः तं नाशरहितमित्यर्थः। एतादृश जगदीश्वरं जगतः विष्टपस्य ईश्वरं स्वामिनं प्रष्टः अग्रेसरः 'पुरोगाग्रेसरप्रष्ठाः' इत्यमरः। 'प्रष्ठोऽग्रगामिनि' इति निपातनात् षत्वं प्राज्ञः मनीषी 'धीरोमनीषी ज्ञः प्राज्ञः' इत्यमरः। प्राञ्जलिः प्रकृष्टः अंजलिः करसंपुटो यस्य धिषणः बृहस्पतिः 'गीष्पतिर्धिषणो गुरुः' इत्यमरः। जगाद उवाचेत्यर्थः। अनुप्रासालंकारः॥ ३३॥

जगदीश्वरं जगादेत्युक्तं तद्दर्शयति। त्वयेति। हे सर्वज्ञ सर्वं निखिलं जानातीति सर्वज्ञः तत्संबोधने हे सर्वज्ञ 'आतोऽनुपसर्गे कः' इति कप्रत्ययः उपपदसमासः 'यः सर्वज्ञः सर्ववित्' इत्यादि श्रुतेः. हे निखिलज्ञ भगवन् इदं च संबोधन त्वया इदं विज्ञातमेव इतिवक्ष्यमाणार्थोपन्यासार्थं। साभिप्राय त्वया तेन इदं मया वक्ष्यमाणं विज्ञातमेव अवगतमेवेत्यर्थः ननु अवगतं चेत्

मानिनामग्रणीरस्ति पुलस्तिसुतसम्भवः।
दर्पोद्धृतजगद्रक्षो रक्षोनाथो दशाननः ॥ ३५ ॥
स महौजा जगन्नाशफलाय फलसाधनः।
निर्विकारश्चिरं चीरी चचार च महत्तपः ॥ ३६ ॥

---

वक्तव्य अतआह पुनरुच्यते इति पुनः अभीक्ष्णं उच्यते अस्माभिरित्यर्थः ब्रुवः कर्मणि लट् ब्रुवोवचिः आदेशः। ननु विज्ञातार्थस्य पुनर्भाषणे किं फलं अत आह हीत्यादि। हि यतः भृत्यानां किंकराणां 'भृञोऽसंज्ञायां' इति क्यप् स्वामिनि ईश्वरे विषये 'स्वामिन्नैश्वर्ये' इति निपातनात् साधुः। स्वस्य आर्तिः पीडा 'आर्तिः पीडाधनुष्कोटयोः' इत्यमरः। तस्याः जल्पनं कथनं तद्विषये असौहित्यं सौहित्यस्य तृप्तेः अभावः असौहित्यं अतृप्तिरिति यावत् अस्तीनिशेषः स्वद्विज्ञातमपि भृत्यं सेवकानां स्वपीडाकथने अतृप्तेः अस्माभिरुच्यते इति भावः। अत्र विज्ञातार्थस्य पुनर्भाषणरूपः अर्थः समर्थनार्हः तस्य च उत्तरार्धेन समर्थनात् काव्यलिंगमलङ्कारः तदुक्तं 'समर्थनीयस्यार्थस्य काव्यलिंगं समर्थनमिति ॥ ३४॥

स्ववृत्तांतमेव कथयति। मानिनामिति। अतिशयितः मानः गर्वः तेषां ते मानिनः तेषां अभिमानिनां अग्रणीः श्रेष्ठः 'सत्सूद्विषेत्यादिना अग्रशब्दोपपदे नयतेः क्विप्' 'अग्रग्रामाभ्यां' इत्यनेन णत्वं। पुलस्तिसुतसंभवः पुलस्तेः एतन्नामकमुनेः सुतः पुत्रः पुलस्त्याख्यः ऋषिविशेषः तस्मात् संभवः उत्पत्तिर्यस्य दर्पेण गर्वेण उध्धृता नाशिता जगतः भुवनस्य रक्षा रक्षणं येन गर्वेण सर्वजगत्पीडक इति यावत् रक्षसां राक्षसानां नाथः अधिपतिः दश आननानि मुखानि यस्य सः स दशाननः नाम राक्षसः अस्ति ॥ ३५ ॥

दशाननस्य तपसा विलक्षणं सामर्थ्यं लब्धमित्याह। स इति। महौजाः महत् अतिशयितं ओजः बलं यस्य 'ओजो दीप्ते बले' इत्यमरः फलसाधनः फलानां साधनं यस्य फलप्राप्तिपर्यंत प्रयत्नकारीत्यर्थः। अत्र फलसाधनयोः प्रकृतिविकृतिभावाऽभावात् चतुर्थीसमासाऽभावः किंतु अश्वघासादिवत् षष्ठीसमासः फलसाधक इति पाठे फलस्य त्रिभुवनैश्वर्यरूपस्य साधक इत्यर्थः 'तृजकाभ्यां कर्तरीति' निषेधस्तु कर्तृषष्ठ्याः ननु शेषषष्ठ्याः 'अतएव घटानां निर्मातुस्त्रिभुवनविधातुश्चकलहः' इति संगच्छते। निर्गतः विकारः तपः क्लेशजन्यविकारो यस्य स तथा तपः क्लेशसह इति यावत् चीरी चीराणि मलिनजीर्णवस्त्रखण्डानि यस्य सः इति चीरी 'अतइनिठनौ' इति इनि प्रत्ययः एतादृशः स दशाननः। जगतः नाशः ध्वंसः स एव फल तस्मै तादर्थ्ये चतुर्थी महत् अतिशयित तीव्रमित्यर्थः तपः कृच्छ्रादिकर्म 'तपःकृच्छ्रादि कर्म च' इत्यमरः। चिरं बहुकालं चचार आचरति स्म चकार इति पाठस्तु सुगम एव। चकारः पादपूरणार्थः 'चकार सुचिरं तपः' इति पाठोपि सम्यगेव। अनुप्रासालङ्कारः ॥ ३६ ॥

मातङ्गमकरक्रूरदन्तोल्लिखितवक्षसा ।
तेन व्रतयताहारं तपस्तप्तमुदन्वति ॥ ३७ ॥
तत्तपस्तोषितस्तस्मै चतुराय चतुर्मुखः ।
वरं वीराय विश्वेशः प्रादाज्जेतुं जगद्द्वयम् ॥ ३८ ॥
स कदाचिद्भ्रमन्नाग नगं नाकौकसामरिः ।
हारगौरं हरस्थानं पटुनादं व्यपाटयत् ॥ ३९ ॥

---

पुनश्च तत्तपः वर्णयति । मातङ्गेति । मातङ्गा हस्तिनः मकरा ग्राहाः तेषां ये क्रूरा रदना दन्ता तैः उल्लिखितं विदीर्णं वक्ष उरो यस्य 'उरोवत्सञ्च वक्षश्च' इत्यमरः । यस्य एतादृशेन अनेन तस्य जले स्थले च तपः सूचितं आहारं जेमनं 'जेमनं लेहआहारः' इत्यमरः । व्रतयति निवर्तयति इति व्रतयन् तेन व्रतयता आहाररहितः इति यावत् 'व्रताद्भोजनतन्निवृत्त्योः' इति वार्तिकानुरोधेन मुण्डमिश्रेति सूत्रेण व्रतशब्दात् भोजननिवृत्त्यर्थे णिच् णिजन्ताच्छतृप्रत्ययः एतादृशेन तेन रावणेन उदकानि सन्ति यस्मिन्स उदन्वान् तस्मिन्नुदन्वति समुद्रे 'उदन्वानुदधौ च' इति निपातनात्साधुः तपः कृच्छ्रादि तप्तं आचरितं इत्यर्थः । अनुप्रासालङ्कारः ॥ ३७ ॥

तत्तप इति । तत्तपस्तोषितः तस्य रावणस्य यत्तपः तेन तोषितः सन्तोषं प्रापितः विश्वेशः विश्वस्य अशेषस्य 'विश्वमशेषं कृत्स्नं' इत्यमरः । ईशः अधिपतिः चतुर्मुखः चत्वारि चतुःसंख्याकानि मुखानि यस्य चतुर्मुखः ब्रह्मा वीराय भटाय चतुराय दक्षाय 'दक्षेतु चतुरपेश' इत्यमरः । तस्मै रावणाय जगद्द्वयं जगतो विष्टपयो द्वयं द्वितयं भूलोकस्य स्वत एव आधीनत्वात् पातालस्वर्गाभिप्रायेण द्वयमित्युक्तं जगत्त्रयमिति पाठस्तु कविवृन्दपद्धतेरसमीचीनः । जेतुं वशीकर्तुं वरं प्रादात् प्रायच्छदित्यर्थः जेतुमिति 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायां' इत्यादिना तुमुन् तस्मिन् इति सम्प्रदाने चतुर्थी । अनुप्रासालङ्कारः ॥ ३८ ॥

स्फुरन्नगशिरस्त्यक्तैरुन्नदन्नदनिर्झरैः ।
स्पृष्टे पूषणि झङ्कारं घोरमातन्वति क्षणात् ॥ ४० ॥
वाजिनः प्रग्रहाकृष्टखलीनावक्रकन्धरान् ।
एकतो जवयत्यद्रिपातभीत्यार्कसारथौ ॥ ४१ ॥

---

स्मरहरोभर्गः' इत्यमरः । न गच्छतीति नग. त 'नगोप्राणिष्वन्यतरस्यां' इति निपातनात्साधुः पर्वत अर्थात्कैलासमित्यर्थः । पटुनाद पटुः पेशलः सुदर इति यावत् नादः ध्वनिः यस्मिन् तत् पटुनाद मधुरध्वनि यथास्यात्तथा विपाटनक्रियायाविशेषणमिदं व्यपाटयन् व्यदधारयत् उत्पाटितवान् इति यावत् विपूर्वकात् पटधातोर्णिजन्ताल्लङ् । अनुप्रासालङ्कार. ॥ ३९ ॥

किं सति व्यपाटयत् इत्याद्यकाया विपाटनकालिकस्थितिं सप्तभिः श्लोकैर्दर्शयति । स्फुरदिति । स्फुरति शोभते इति स्फुरति उच्चत्वेन शोभमानानि यानि नगस्य पर्वतस्य शिरांसि शिखराणि तैः त्यक्ता उज्झिताः एतादृशैः उन्नदति शब्दायते इति उन्नदतः एतादृशा ये नदास्तेषां निर्झरैः प्रवाहैः 'प्रवाहोनिर्झरोझरः' इत्यमरः । स्पृष्टे संबद्धे पूषणि सूर्ये क्षणात् क्षणमात्र घोर भयकर 'घोर भीम भयानक' इत्यमरः । झंकार निर्झरध्वन्यनुकरणमिद आतन्वति आतनोति आसमताद्विस्तारयति इत्यातन्वन् तस्मिन्नातन्वति सतीत्यर्थः पर्वतस्य अत्युन्नतत्वात् तच्छिखरोद्भूतनिर्झरसबद्धे सूर्ये भयकर शब्द तन्वति सतीत्यर्थः । अत्र निर्झराणां सूर्यस्य च असबधेपि स्पर्शवर्णनात् असंबधे संबंधातिशयोक्तिरूपोऽलङ्कारोऽनुप्रासश्च । इतआरभ्य सप्तम्यतानां सत्सप्तमीत्व तदर्थभूतज्ञापकक्रियाणां च न्यपीडयदिति अग्रिमश्लोकस्थया लक्ष्यभूतया निपीडनक्रियया अन्वयः ॥ ४० ॥

वाजिन इति । अर्कसारथौ अर्कस्य सूर्यस्य सारथिः क्षत्ता तस्मिन् अरुणे इत्यर्थः 'सूतःक्षत्ता च सारथिः' इत्यमरः । प्रग्रहैः रश्मिभिः 'किरणप्रग्रहौ रश्मी' इत्यमरः । आकृष्टः विकृष्टः एतादृशो यः खलीनः कविका (लगाम इति लोके) 'कविका तु खलीनोऽस्त्री' इत्यमरः । आवक्रा 'आङीपदर्थेभिव्याप्तौ' इत्यमरः । 'कुगतिप्रादयः इति प्रादिसमासः। प्रग्रहाकृष्टखलीनेन आवक्रा कधरा ग्रीवा येषां ते एतादृशान् 'शिरोधि कधरे' अपि इत्यमरः । वाजिनः घोटकान् 'वाजिवाहार्वगन्धर्व' इत्यमरः । अद्रेः पर्वतात्पातः पतन 'अद्रिगोत्रगिरिग्रावेत्यमर.' । तस्मात्या भीतिः भय 'भीत्रार्थानाभियपादानत्वं' 'भयभीतभीभिरित्यादिना पचमीसमासः' । एकस्मान्निति एकतः आद्यादिभ्यउपसख्यान इति सप्तम्यतात्तसिः एकस्मिन्भागे इत्यर्थः । जव वेग करोतीति जवयन् तस्मिन् वेग कुर्वति सतीत्यर्थः 'तरसी तु रय स्यदः जवः' इत्यमरः । जवशब्दात् णिजतात् शतृप्रत्ययः । रावणेन पर्वताकर्षणे कृते तच्चलनेन सूर्यस्यानामध पातसभावनया तत्प्रग्रहाकर्षण अरुणस्येति बोध्यं । ननु रावणेन कैलासाकर्षणेपि सूर्याश्वानां तत्सबंधाभावात् अधःपातोऽसमर्थानि

घूर्णमानमहाशैलतटभ्रष्टे मुहुर्मुहुः ।
मत्तस्येवोत्तरीये स्वस्थानं त्यजति निर्झरे ॥ ४२ ॥
गौरीभयपरिष्वङ्गस्पर्शलब्धमहोत्सवे ।
संक्रुद्धधूर्जटिक्रोधप्रतिलोमप्रवर्तिनि ॥ ४३ ॥
कपालनयनच्छिद्रं जटाबद्धफणावति ।
सङ्कोचितफणाचक्रं विशत्युन्नासविह्वले ॥ ४४ ॥

---

क्थमेतदिति चेन्न । कैलासस्य अत्युच्चत्वेन तत्सम्बन्धभासनाभिप्रायेणैवमुक्ते. अतएव पूर्वश्लोके निर्झरे. स्पृष्टे पूषणीति उक्ति. स्वरसतः सगच्छते । लोके सूर्योदयवेलाया सूर्यस्य पर्वतसबधस्य स्पष्ट दर्शनाच्च ॥ ४१ ॥

घूर्णमानेति । महान् स्थूलः एतादृशो यः शैलः पर्वतः अर्थात्कैलासः ' चलशैलशिलोच्चयः ' इत्यमरः । ' आन्महत ' इत्यात्व । घूर्णते भ्रमतीति घूर्णमानः घुणघूर्णभ्रमणे शानच् एतादृशो यो महाशैलः तस्य तट प्रांतः तस्मात् भ्रष्टे अधः पतिते एतादृशे निर्झरे प्रवाहे ' स्रस्त ध्वस्त भ्रष्ट ' ' प्रवाहोनिर्झरोझर ' इत्युभयत्राप्यमरः । मत्तस्य क्षीबस्य 'मत्ते शौंडोत्कटक्षीबा' इत्यमरः । उत्तरीये इव सव्याने इव ' सव्यानमुत्तरीय स्यात्' इत्यमरः । मुहुर्मुहु वारवारः ' नित्यवीप्सयो ' इति द्वित्व । स्वस्य स्थान त्यजति इति त्यजन् तस्मिन् त्यजति सति यथा मदमत्तस्य उत्तरीय वारवार अध. पतति एव कैलासस्य चांचल्यात् उत्तरीयसदृशे निर्झरे स्वस्थान त्यजति सतीत्यर्थः । उपमालंकारः ॥ ४२ ॥

गौरीभयेति । गौर्याः पार्वत्याः यो भयेन परिष्वगः गौरीत्यत्र ' षिद्गौरादिभ्यश्च ' इति ङीष् गौर्याः परिष्वजनक्रियायामन्वयः । तेन कर्तरि षष्ठी । भयशब्दाद्धेतौ तृतीया । सुप्सुपेतिसमासः । परिष्वगः आलिंगनं ष्वजपरिष्वगे घञ् तेन च स्पर्शः तेन लब्धः प्राप्तः यो महानुत्सवः तस्मिन् सति कथभूते महोत्सवे इत्याकांक्षायां आह–संक्रुद्धेति । सम्यक्क्रुद्धः धूः भारभूता जटिर्यस्य ' जटिर्जटा ' इतिद्विरूपकोश । धूर्जटे शिवस्य च क्रोध. कोपः तस्य प्रतिलोम विरुद्ध यथास्यात्तथा प्रवर्तिनि प्रवर्तते इति प्रवर्ती तस्मिन् सुप्यजातौणिनि णिनिः उपपदसमासः । रावणकृतापराधेन क्रुद्धेऽपि शंभौ गौर्यालिंगनस्पर्शतः महोत्सववतीति भाव ॥४३॥

कपालेति । उन्नासविह्वले उद्गतः उच्चः अतिशयित इति यावत् उन्नासः पर्वतचलनजन्यक्लेश. तेन विह्वले विक्लवे 'विक्लवो विह्वल स्यात्तु ' इत्यमरः । एतादृशे फणाः फटा सति यस्य सफणावान् जटासु सटासु बद्धःनद्धः एतादृशो य फणावान् सर्पः तस्मिन् कपालनयनछिद्रं कपाले मस्तके यन्नयन नेत्र सुप्सुपेतिसमास षष्ठीतत्पुरुषो वा । 'लोचन नयनं नेत्र' इत्यमरः । 'कपाल कुष्ठभेदे घटादिशकले गणे शिरोऽस्थिनि' इति हैमः । तदेव छिद्र तत् कर्मवाचकमिद फणानां चक्र मंडल सङ्कोचित आकुञ्चितं फणाचक्र यस्मिन्कर्मणि तत् सकोचित-

परित्रस्ते गोपयति कृकवाकुध्वजे सति ।
कार्तस्वरमयं मेषं मातुरुत्सङ्गसङ्गिनि ॥ ४५ ॥
उत्पादयति चिरं धीरं क्रोधरोधार्त्तचेतसि ।
भर्त्तुर्भ्रूभागभङ्गस्य प्रादुर्भावं ककुद्मति ॥ ४६ ॥

---

फणाचक्र वेशनक्रियाया विशेषणमिदं । विशति प्रविशति इति विशन् तस्मिन् प्रविशति सतीत्यर्थः । पर्वतस्य चलनेन जटाबद्धसर्पे तृतीयनयनरूपे बिले प्रविशति सतीति भावः ॥ ४४ ॥

परित्रस्त इति । परित्रस्ते पीडिते अतएव मातुः जनन्याः अर्थात्पार्वत्याः 'जनयित्री प्रसूर्माता' इत्यमरः । उत्सङ्गस्य अङ्कस्य सङ्गः सम्बधः सोस्यास्तीति उत्सङ्गसङ्गी 'अतइनिठनौ' इति इनि प्रत्ययः । एतादृशे कृकवाकुद्वये कृकेन गलेन वक्तीति कृकवाकुः मयूरः 'कृकेवचः कश्च' इति उण् 'कृकवाकुर्मयूरेपि चरणे चरणायुधे' इति विश्वः । सः ध्वजः केतनं यस्य तस्मिन् अर्थात् शिखिवाहने कार्तिकेये कार्तस्वरमयं कृतस्वरे स्वाकरविशेषे भव कार्तस्वरं तत्र भव इत्यण् प्रत्ययः । सुवर्णं 'रुक्मकार्तस्वरजाम्बु' इत्यमरः । कार्तस्वरस्य विकारः कार्तस्वरमयः ' 'नित्य वृद्धशरादिभ्यः' इति विकारे मयट्प्रत्ययः एतादृशं मेषं रुणांशुं ' 'ऊर्णायुर्मेष एडके' इत्यमरः गोपयति पालयति सति 'गुपू रक्षणे' इति धौरादिकभ्वादिपठितगुप् धातोः णिजन्ताच्छतरि इदं रूपं यद्यपि स्वार्थिकः तथापि धातूनामनेकार्थत्वात् अत्र ते पालनार्थं च गृह्यते । पर्वतचलनभीत्या मातुरुत्सङ्गाश्रयं कुर्वन् कार्तिकेयः स्वस्य सुवर्णमयं मेषमेव गोपायामासेति भावः एतच्छ्लोकव्याख्यानं यथामति कृतं एतदपेक्षया समीचीनं व्याख्यानं केनचित् कृतं चेत्स्वीकर्तव्यं । अनुप्रासालङ्कारः ॥ ४५ ॥

पुनः शिवस्थितिप्रकारमाह । उत्पादयतीति । क्रोधस्य कोपस्य रोधः अवरोधः व्यतिरिति यावत् । रुधिरावरणे भारे यम् तेन आर्तं पीडितं चेतः अंतःकरण 'चित्तं तु चेतो हृदयं' इत्यमरः यस्य तस्मिन् ककुदस्यास्तीति ककुद्मान् 'तदस्यास्त्यस्मिन्निति मतुप्' 'झयः' इति मत्व तु यवादिन्वात्र भवति । 'ककुदे भवादा नित्य' इत्यनुनासिकोऽपि अत एव निपातनात्र भवति । तस्मिन् शिववाहने वृषे भर्तुः बिभर्ति पुष्णातीति भर्ता 'डुभृञ् धारणपोषणयोः' इत्यस्मात् तृच् । तस्य शंकरस्य भ्रुवः भ्रुकुट्याः यो भागः अग्रः तस्य यो भंगः भ्रंशः कोपसूचकस्तस्य भ्रुकुटिभागस्येत्यर्थः धीरं गम्भीरं प्रादुर्भावं आविर्भावमित्यर्थः 'प्रभवे प्रादुर्भावः स्यादित्यमरः' । तं चिरं चिरकालं 'चिराय चिररात्राय' इत्यमरः । क्रियाविशेषणमव्ययमिदं उत्पादयति वर्धयति इत्युत्पादयन् तस्मिन् उत्पादयति सति उत्पादयतेः शत्रन्तात् सप्तम्येकवचनः 'ण्यन्ते' इति परस्मैपद आगमेन शंकरस्य कोपावेशः कथं भवेद् इति वृषे नंदिकेश्वरे वर्धयति सतीत्यर्थः ॥ ४६ ॥

रूढमूलमिव श्वेतैरधोलग्नैर्भुजङ्गमैः ।
प्रौढपुष्पमिवाग्रस्थस्फुरन्नक्षत्रमण्डलैः ॥ ४७ ॥
चरणेन रणत्सिंहकुलाकुलगुहामुखम् ।
गिरिं गौरीपतिः कुञ्जगुञ्जत्सिन्धुं न्यपीडयत् ॥ ४८ ॥
धराधरभराक्रान्ते बाहौ बहुभिराननैः ।
दिक्षु दीर्घप्रतिक्रोशो रावणेन कृतो रवः ॥ ४९ ॥

---

रूढेति । गौरीपतिः गौर्याः पार्वत्याः पतिः भर्ता शङ्करः 'उमाकात्यायनीगौरी' इत्यमरः । अधोलग्नैः अधः अधोभागे लग्नैः संबद्धैः श्वेतैः श्वेतवर्णैः 'शुक्लशुभ्रशुचिश्वेतेत्यमरः' । भुजगमैः भुजैर्गच्छतीति भुजगमाः गमश्चेति खच् प्रत्ययः 'अरुर्द्विषजन्तस्येति' मुमागमः 'सर्पः पृदाकुः भुजगो भुजगोहिर्भुजगमः' इत्यमरः । तैः हेतुभिः हेतौ तृतीया रूढमूलं रूढानि प्रादुर्भूतानि मूलानि शुभ्राः यस्य दृढबीजजन्मनि क्तप्रत्ययः 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः । अग्रे उपरिभागे तिष्ठतीति अग्रस्थानि सुपिस्थ इति कप्रत्ययः । स्फुरति चकासति इति स्फुरति । न क्षरतीति नक्षत्राणि 'नभ्राण्नपाद्वेति निपातनात् साधुः स्फुरन्ति च तानि नक्षत्राणि उडूनि 'विशेषणं विशेष्येणेति' समासः ग्रीवाग्रस्थानि च तानि स्फुरन्नक्षत्राणि च तेषां मण्डलानि चक्रवालानि तैः हेतुभिः हेतौ इति तृतीया । प्रौढानि एधितानि प्रफुल्लानीति यावत् पुष्पाणि कुसुमानि यस्य स प्रौढपुष्पः 'स्त्रियः सुमनसः पुष्पं' इत्यमरः । रणति शब्दायते इति रणतः अण् रण् इति शब्दार्थाद्धातोः शतृप्रत्ययः रणंतः शब्दायमानाः ये सिंहाः हिंसतीति सिंहाः पृषोदरादित्वात्साधु । रणत्सिंहानां कुलानि समूहाः 'सजातीयैः कुलं यूथं' इत्यमरः । तैः आकुलानि व्याप्तानि गुहायाः दरीणां मुखानि आननानि यस्य 'दरी तु कन्दरो वा स्त्री' कुञ्जेषु निकुञ्जेषु गुञ्जति शब्दायमाना सिंधुः नदी यस्य गुजि अव्यक्ते शब्दे शतृ प्रत्ययः । स्त्रियाः पुंवदिति पुंवद्भावः 'सिंधुर्नासरिति स्त्रियां' इत्यमरः । एतादृशं गिरिं पर्वतं कैलासं चरणेन पादेन न्यपीडयत् समक्लेशयत् । उत्प्रेक्षानुप्रासालङ्कारौ ॥ ४७ ॥ ४८ ॥

तदानीं रावणस्याऽवस्थां दर्शयति । बाहौ भुजे 'भुजबाहूप्रवेष्टोदो' इत्यमरः । धरतीति धरः पचाद्यच् धरायाः पृथ्व्याः धरः धराधरः पर्वतः तस्य यो भरः भारः तेन आक्रान्ते व्याप्ते सति रावणेन विश्रवसोऽपत्यं रावणः विश्रवः शब्दस्य रवणादेश अपत्यार्थेऽण्प्रत्ययश्च तेन बहुभिः अनेकैः दशभिरिति यावत् आननैः मुखैः दिक्षु काष्ठासु बहुवचनेन सर्वदिशां लाभः तेन च रवस्य अतिमहत्त्वं ध्वनितं दीर्घः आयतः 'सुदूरं दीर्घमायतं' इत्यमरः । प्रतिक्रोशः प्रतिध्वनिर्यस्य एतादृशः रवः निनदः 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । रु शब्दे 'ऋदोरप्' इति भावे अप् कृतः विहितः तदुक्तं पुष्पदन्तेन 'अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः ॥

तं देवं स शिरश्छेदव्रणचक्रैरपूजयत् ।
नीलकुट्टिमविन्यस्तैर्मण्डलैरिव कौङ्कुमैः ॥ ५० ॥
आज्ञापयितुमेतस्य राक्षसस्य दिशो दश ।
चक्राणि पङ्क्तिसङ्ख्यानि पुनः सृष्टानि शूलिना ॥ ५१ ॥
तमःस्थानं तमासाद्य बालिशं कुलिशं रणे ।
अजहादज धाम स्वं वैकुण्ठस्य विकुण्ठितम् ॥ ५२ ॥

---

धलन्यापातालिप्यस्मचलिताङ्गुष्ठशिरसि प्रतिष्ठा स्वप्यासीत् ध्रुवमुपचितोमुष्यति स्वल' इति । अनुप्रासालङ्कारः ॥ ४९ ॥

रावणस्य भक्त्यतिरेकं वर्णयति । स पूर्वोक्तो रावणः नीले नीलवर्णे यत् कुट्टिमं निबद्धभूमिः 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः । तत्र विन्यस्तैः स्थापितैः कौङ्कुमैरिति यावत् कौङ्कुमैः कुङ्कुमेन काश्मीरजन्मना 'अथ कुङ्कुमं काश्मीरजन्माग्निशिखेत्यमरः' कृतानि 'कौङ्कुमानि' तेषेति इत्यण् । एतादृशैः मण्डलैरिव सर्वतो-भद्रादिमण्डलैरिवेत्यर्थः । शिरसां मस्तकानां यच्छेदः छेदनं छिद्रीकरणं द्विधाकरणं तस्य व्रणानि 'ईर्माणि व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । तेषां चक्रैः समूहैः पूर्वोक्तं देवं दीव्यतीति देवः 'दिवुक्रीडादित्यादेः' पचाद्यच् अपूजयत् पूज-पूजायां णिजन्ताल्लङ् । उपमालङ्कारः ॥ ५० ॥

भक्तितस्तुष्टस्य शिवस्य प्रसादमाह । आज्ञापयितुमिति । दश दशसङ्ख्याकाः दिशः हरितः आज्ञापयितुं आज्ञां कर्तुमित्यर्थः आङ्पूर्वकाज्ज्ञाधातोः 'तुमुन्ण्वुलौ क्रियायां' इत्यादिना तुमुन् प्रत्ययः । एतस्य पूर्वोक्तस्य रक्ष एव राक्षसः तस्य प्रज्ञादित्वात्स्वार्थेऽण् पङ्क्तिः दशसङ्ख्या येषां तानि पङ्क्तिसङ्ख्यानि दशसङ्ख्या-नीत्यर्थः । 'पङ्क्तिश्छन्दोऽपि दशमः' इत्यमरः । चक्राणि मुखानि 'वक्त्रास्ये वदनं तुण्डमाननं' इत्यमरः । शूलं अस्यास्तीति शूली 'अतइनिठनौ' इति इनिः । तेन शङ्करेण 'शिवः शूली महेश्वरः' इत्यमरः । पुनः सृष्टानि उत्पादितानि सृज् विसर्गे क्तप्रत्ययः । परिकराङ्कुरालङ्कारः । तदुक्तं 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति ॥ ५१ ॥

शङ्करप्रसादेन रावणस्य अलौकिकसामर्थ्यं एकोनविंशतिश्लोकैर्दर्शयितुं सर्वदेवपराजयादिकं दर्शयिष्यन् प्रथमं तावत् त्रिभिः श्लोकैर्विष्णुपराजयेन दर्शयति । तमःस्थानमिति । न जायते न उत्पद्यते इत्यजः तत्सम्बोधनं हे अज । 'अन्येष्वपि दृश्यते' इति सूत्रेण नञि उपपदे जनेर्डः 'नलोपो नञः' इति नलोपः । हे अज हे विष्णो रणे युद्धे 'रणः कलहविग्रहः' इत्यमरः । तमः स्थानं तमसः अज्ञानस्य तमोगुणस्य वा स्थानं बालिशं मूर्खं तं रावणं आसाद्य प्राप्य विकुण्ठितं प्रतिहतं सत् वैकुण्ठस्य हरेः 'वैकुण्ठः कृष्णशार्ङ्गिणौ' इति मेदिनी । कुलिशं वज्रं 'कुलिशं भिदुरं पविः' इत्यमरः । स्वं धाम अजहात् अत्यजत् ओहाक् त्यागे लङ् हाते द्विर्भावः । अनुप्रासालङ्कारः ॥ ५२ ॥

तमद्याप्यनवद्येन वसुना वासवः स्वयम् ।
अजय्यं पूजयत्येकवीरं वैरस्य शान्तये ॥ ५३ ॥
बलिं वज्राय पौलोमी सस्मितं विगतादरा ।
कुर्वती कुरुते शक्रं व्रीडासन्नमिताननम् ॥ ५४ ॥
यक्षनाथो दिशंस्तस्मै केवलं धनदो धनम् ।
सर्वस्वहरणप्रीतो रावणस्तु धनेश्वरः ॥ ५५ ॥

---

तमिति । वसवः देवाः सन्ति अस्य वसु धनमस्यास्तीति वा वासवः इन्द्रः 'ज्योत्स्नादिभ्य उपसंख्यानं' इति मत्वर्थेऽण् स्वयं स्वतः इत्यर्थः । ननु भृत्यादिना वैरस्य विरोधस्य 'वैरं विरोधो विद्वेषः' इत्यमरः । शान्तये शमनाय न अवद्यं गर्ह्यं इति अनवद्यं तेन 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः । अत्युत्कृष्टेन वसुना धनेन 'वसु तोये धने मणौ' इति मेदिनी । जेतुं शक्यो जय्यः न जय्यः अजय्यः । तं अजय्यं 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात् अयादेशः । एकः अद्वितीयः स चासौ वीरः एकवीरः तं रावणं अद्यापि इदानीमपि पूजयति अर्चयति । केवलं न पराजयकाले एव इन्द्रेण सुपूजितः किं तु साम्प्रतं कालेऽपि इन्द्रः उत्तमधनेन तं पूजयति इति अहो ऐश्वर्यं तस्येति भावः ॥ ५३ ॥

बलिमिति । पौलोमी पुलोम्नः दैत्यविशेषस्य अपत्यं स्त्री पौलोमी पुलोमशब्दात् 'तस्यापत्यमित्यण्' 'नस्तद्धिते' इति टिलोपः । अनिति प्रकृतिभावस्तु 'नमपूर्वोऽपत्येति' निषिद्धः । अण्णन्तत्वान्ङीप् । पौलोमी इन्द्राणी विगतादरा विगतः आदरः सत्कारो यस्याः सा विगतादरा अतएव सस्मितं स्मितेन मन्दहासेन सहितं सस्मितं यथास्यात्तथा वज्राय कुलिशाय बलिं पूजां 'करोपहारयोः पुंसि बलिः' इत्यमरः । तादर्थ्ये चतुर्थी कुर्वती करोतीति कुर्वती डुकृञ्करणे शत्रन्तान्ङीप् कुर्वती सती शक्रं इन्द्रं व्रीडया लज्जया सन्नमितं अधःकृतं आननं मुखं येन एतादृशं कुरुते । वज्रस्य पराभूतत्वात् पूर्ववत् पूजानर्हतां स्मितेन सूचयती इन्द्रं लज्जानमितमुखं कुरुते इति भावः । अनुप्रासालङ्कारः ॥ ५४ ॥

इदानीं कुबेरकृतसत्कारं दर्शयति । यक्षनाथ इति । तस्मै रावणाय धनं वित्तं दिशन् दिशति ददातीति दिशन् दिशउत्सर्गे शतृप्रत्ययः । केवलमित्यनेन दिशन्नेव न तु कदाचिद्दण्डन् इति सूचितं । यक्षनाथः यक्षाणां गुह्यकानां नाथः अधिपः धनदः धनं ददातीति धनदः धनशब्देोपपदे दाधातोः आतोऽनुपसर्गेति कप्रत्ययः केवलं धनदः इति चान्वयः । सर्वं निखिलं च तत्स्वं धनं तस्य यद्धरणं अपहारः तेन प्रीतः प्रीङ् प्रीतौ क्तप्रत्ययः रावणस्तु दशाननस्तु तुना धनदापेक्षया विशेषः सूचितः । धनेश्वरः धनानां ईश्वरः अधिपतिः । कुबेरेण धनस्य दानात् स धनदः रावणस्तु धनग्रहणप्रीतत्वात् धनाधिपः इति वैपरीत्य १ निरुक्त्यलङ्कारः । तदुक्तं 'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनं' इति ॥ ५५ ॥

धर्म्यं कर्म परित्यज्य प्रीणाति पिशितप्रियम् ।
प्रेतराजोऽप्यभिप्रेतभक्ष्यदानेन राक्षसम् ॥ ५६ ॥
दूरतः सेवते भानुरादित्यमणितोरणात् ।
च्युते तन्मन्दिरद्वारदाहभीतो हुताशने ॥ ५७ ॥
निवृत्ततत्सरःपद्मस्वापकारणतेजसा ।
बोधनीयं किलादोषमिन्दुना कौमुदं वनम् ॥ ५८ ॥

---

इदानीं यमकृतसत्कारं दर्शयति । धर्ममिति । प्रेतराजः प्रेतानां योनिविशेषाणां राजा स्वामी यमः 'समवर्ती परेतराट्' इत्यमरः । सः अपि अपिः समुच्चये 'गर्हासमुच्चय प्रश्नशङ्का' इत्यमरः । धर्मादनपेतं धर्म्यं 'धर्मपथ्यर्थन्यायेन' यत्प्रत्ययः । कर्म क्रिया 'कर्म क्रिया तत्सातत्ये' इत्यमरः । धर्माधर्मविवेचनरूपां परित्यज्य त्यक्त्वा पिशितप्रियं पिशितं मांसं प्रियं इष्टं यस्य 'पिशितं तरसं मांसं' इत्यमरः । एतादृशं राक्षसं रावणं अभिप्रेतं अभीष्टं यद्भक्ष्यं तस्य यद्दानं अर्पणं तेन प्रीणाति सन्तोषयति । प्रीञ् तर्पणे लट् । अखिलप्राणिभीतिदोऽपि यमः निजव्यापारप्रदानपूर्वकं अभिप्रेतभक्ष्यदानेन मांसप्रियं तं सन्तोषयतीति महदाश्चर्यमिति भावः । अनुप्रासालङ्कारः ॥ ५६ ॥

इदानीं सूर्यकृतसेवां दर्शयति । दूरत इति । भानुः सूर्यः 'दाभाभ्यां नुः' इत्यौणादिको नुः 'भानुर्हंसः सहस्रांशुः' इत्यमरः । अदितेरपत्यं आदित्यः 'दित्यदित्यादित्येति' ण्यप्रत्ययः । आदित्यस्य मणयः रत्नानि सूर्यकान्तमणय इत्यर्थः । तेषां यत्तोरणं बहिर्द्वारं 'तोरणोऽस्त्री बहिर्द्वारं' इत्यमरः । हुतं हविर्द्रव्यं अशनं यस्य 'हिरण्यरेता हुतभुग्' इत्यमरः । तस्मिन् च्युते गलिते सति 'स्कन्ने पन्नं च्युतं गलितं' इत्यमरः । 'यस्य च भावेनेति' सप्तमी । तस्य रावणस्य मन्दिरं गृहं तस्य यद्द्वारं तस्य दाहः ज्वलनं तस्माद्भीतः सन् दूरतः दूरभागे आकाशादिभाग[illegible] सेवते । सूर्यकान्तमणिघटितात् तोरणात् च्युते द्वारदाहः स्यादिति भिया सूर्यो दूरस्तिष्ठतीति भावः । सूर्यस्पर्शेऽपि सूर्यकान्तमणिभ्यः अग्निः स्रवते इत्यभिप्रायेणेदं ॥ ५७ ॥

इदानीं तस्य चन्द्रकृतोपकारं वर्णयति । निवृत्तेति । तस्य रावणस्य सन्ति सरांसि सरोवराणि [illegible] तेषां पद्मानि [illegible] तेषां स्वापः मुकुलीभावः तस्य कारणं हेतुः एतादृशं तेजः दीप्तिः निवृत्तं गतं तेजः यस्य [illegible] एतादृशेन इन्दुना चन्द्रेण अदोषं [illegible] 'निशाकरः [illegible]' इत्यमरः । कौमुदं कुमुदानां [illegible] इदं कौमुदं वनं [illegible] इत्यर्थः । बोधनीयं किल [illegible] । किलेति वार्तायां । 'सूर्यतेजः [illegible] मुकुलीभावे निमित्तम् [illegible] केवलं कुमुदानां विकासकरत्वेन एव इन्दुना [illegible]' इति [illegible] ॥ ५८ ॥

काले कालाभ्रगर्भेऽपि निर्मदा नर्मदादयः ।
नन्दयन्ति सदा नद्यो धर्मध्वजायुधाश्रिषम् ॥ ६२ ॥
प्रियाजनपरिष्वङ्गप्रीतिं कर्तुं निरन्तराम् ।
निशि ज्ञातमनोवृत्तिस्तमुपैति हिमागमः ॥ ६३ ॥
तस्योद्यानवनं विश्वं दिवः प्रवसता सता ।
सर्वर्तुषु निजैः पुष्पैर्भूष्यते मधुनाऽधुना ॥ ६४ ॥

दुराराध्यस्वभावस्य समालम्ब्य सिषेविषाम् ।
जलक्रीडादिनं तस्य ग्रीष्मश्चिरमुदीक्षते ॥ ६५ ॥
त्रासकण्ठग्रहव्यग्रांस्तस्मिन्निच्छति मानिनः ।
धीरं गर्जन्ति लङ्कायामकाले वारिदा अपि ॥ ६६ ॥
अश्रान्ता वीजयत्यष्टहस्तपर्यायसम्पदा ।
इति चण्डीमभिप्रेप्सुः कर्तुं चामरधारिणीम् ॥ ६७ ॥

---

भूष्यते अलङ्क्रियते । वसतस्याधीनत्वात् सर्वेऽपु तद्भवमस्तीति भावः । 'सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्' इति महाकाव्यलक्षणोक्तेः अनेन ऋतुवर्णनेन उत्तरसर्गस्य ऋतुवर्णनकथासूचिता । अनुप्रासालङ्कारः ॥ ६४ ॥

इदानीं ग्रीष्मर्त्वानुकूल्यमाह । दुराराध्येति । ग्रीष्म. ऊष्मकः ऋतुः दु.खेन आराध्यते इति दुराराध्यः दुराङ्पूर्वकाद्राधधातोः कर्मण्यत् दुराराध्यः स्वभावो यस्य एतादृशस्य तस्य रावणस्य सिषेविषां सेवितुमिच्छा सिषेविषा ता समालम्ब्य आश्रित्य सेव्धातो. 'सन्नताद्प्रत्यय.' इत्यनेन अप्रत्ययः । चिरकाल तस्य रावणस्य जलक्रीडा जल जले क्रीडा जलक्रीडा क्रीड् विहारे गुरोश्च हल इत्यप्रत्ययः । साधन कृतेति समासः तस्याः दिन दिवस उदीक्षते प्रतीक्षते । अन्यदा स्वस्य प्रादुर्भावे दुराराध्य स्वभावोऽयं क्रुध्येन अतः निजाविर्भावोत्सुकयस्तारी तस्य जलक्रीडादिन ग्रीष्म प्रतीक्षते इति तात्पर्य ॥ ६५ ॥

इदानीं वर्षर्त्वानुकूल्य दर्शयति । त्रासेति । तस्मिन् रावणे अतिशयितः मानो येषा ते मानिनः प्रणयकलहकुपितान् पुरुषान् इत्यर्थः । त्रासेन मदनपीडया यः कंठग्रहः अर्थान्नायिकाकर्तृकः तत्र व्यग्रान् व्यासक्तान् 'व्यग्रो व्यासक्त आकुले' इत्यमरः । इच्छतीति इच्छन् तस्मिन् इच्छति सति लङ्कायां रक्ष पुर्यां वारिदाः वारीणि उदकानि ददति ते वारिदाः वारिशब्दोपपदे दा धातोः आतोनुपसर्गे क. इति कप्रत्ययः । मेघा अपि 'तडित्वान्वारिदोऽम्बुभृत्' इत्यमर : । अपि पूर्वोक्तानां समुच्चायकः । विरुद्धः कालः अकालः तस्मिन् वर्षाकालभिन्नेपि काले धीरं गभीरं यथास्यात्तथा गर्जन्ति शब्दं कुर्वन्ति गर्जशब्दलट् । मेघगर्जने प्रणय- कुपिताः नायिकाः नायककण्ठग्रहण कुर्वन्ति इति साहित्यशास्त्रसंकेतात् तस्य नायि- कानुकूल्येच्छायां अकालेपि जलदा गर्जन्तीति भावः ॥ ६६ ॥

इदानीं गौर्यानुकूल्यं दर्शयति । अष्ट च ते हस्ताश्च तेषां या पर्यायसम्पत् पर्यायेण कार्यकरणसम्पदित्यर्थः । तया अश्रान्ता न श्रान्ता अश्रान्ता अक्लिष्टा सती अष्टहस्तानां विद्यमानत्वात् पर्यायेण वीजनकार्यं कर्तुं शक्यत्वात् अश्रान्तत्व बोध्य, वीजयतु इति एव प्रकारेण चण्डी देवीं चामरं प्रकीर्णकं 'चामरं तु प्रकीर्णकं' इत्यमरः । तत् धारयति तच्छीला चामरधारिणी 'सुप्यजातौणिनिस्ताच्छील्ये' एतादृशीं कर्तुं अभिप्रेप्सुः अभिप्रेतुमिच्छुः अभिप्रेप्सुः अभिप्रोपसर्गादिणगमतात् उः वर्तते

स्तब्धकर्णो नमत्येनं श्रवणाक्षेपमारुतैः ।
भूभक्तिकुसुमक्षेपदोषभीतो गणाधिपः ॥ ६८ ॥
स्मरश्च संसदं तस्य विशति स्रस्तवाससा ।
प्रतीहार्या स्मिताकूतविभ्रमैः कठिनागमः ॥ ६९ ॥
शुद्धान्तमन्तःशुद्धः सन् स्त्रीजनस्य तदाज्ञया ।
लीलोपदेशदानैकव्यग्रो विशति मन्मथः ॥ ७० ॥

---

इति शेषः । यद्यप्यत्र वीजयतीति पाठः दृश्यते तथापि वीजयतु इति पाठे एव पुष्टार्थता सम्भवति इति सहृदयैराकलनीय । आशिषि लोट् ॥ ६७ ॥

इदानीं गणाधिपकृतानुकूल्यं दर्शयति । स्तब्धकर्ण इति । श्रूयते आभ्यां इति श्रवणे कर्णौ 'श्रुतिःश्रोत्रं श्रवणं श्रवः' इत्यमरः । तयोर्ये आक्षेपः इतस्ततश्चलनं तत्संबंधिनः ये मारुता वायवः 'समीरमारुतमरुत्' इत्यमरः । तैः हेतुभिः 'हेतौ इति' हेत्वर्थे तृतीया भुवः पृथिव्याः,या भक्तिः भागः तत्संबधीनि यानि कुसुमानि तेषामाक्षेपः अन्यत्राकरण स एव दोषः तस्माद्भीतः एतादृशो गणानामधिप गणपतिरित्यर्थः । तदुक्तं मन्त्रराजे कृष्णं प्रति नारदोक्तिः 'गणानामाधिपत्ये च रुद्रेण विहितः पुरा ॥ अणिमा महिमा चैव लघिमा गरिमा तथा ॥ प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥ भार्यार्थं प्रददौ देवो गणेशस्य प्रजापतिः ॥ पूजयित्वा गणाध्यक्षं स्तुतिं कर्तुं प्रचक्रमे' इति ॥ स्तब्धौ निश्चलौ कर्णौ यस्य एतादृशः सन् एन रावण नमति । णम् प्रह्वत्वे शब्दे च लट् सर्वगणाधिपोपि कुसुमचित्रितभूमस्तेः निजकर्णाक्षेपवायुना विक्षेपणं माभूत् इति भीतः सन् स्तब्धकर्ण एन नमतीति भावः । अनुप्रासालंकारः ॥ ६८ ॥

इदानीं स्मरानुकूल्य दर्शयति । स्मर इति । चकारः समुच्चयार्थे स्रस्तं अधः पतितं वासः यत्र यस्याः सा 'वासःचैलं वसनमंशुकं' एतादृश्या प्रतीहार्या प्रतिह्रियते अनया इति प्रतीहारी प्रतिपूर्वाद्धरतेः करणे घञ् उपसर्गस्य घञीति दीर्घः गौरादित्वान्ङीष् । तया द्वारपाल्या स्मिताकूतविभ्रमैः स्मितं मन्दहासः आकूतं अभिप्रायसूचकचेष्टाविशेषः विभ्रमः इतरविलासः तैः कठिनागमः कठिनः आगम आगमनं यस्य एतादृशः स्मरः मदनः तस्य रावणस्य संसद् सभां विशति प्रविशति विशतेर्लट् । अनुप्रासः ॥ ६९ ॥

मन्मथः मदनः अतः अतःकरणे शुद्धः निर्मलः तत्स्त्रीविषये मनसाप्यलोलुपः सन् तस्य रावणस्य आज्ञा निदेशः तथा 'निदेशः शासनं च सः सृष्टिथाज्ञा' इत्यमरः । स्त्रीजनस्य स्त्रीणां जनः स्त्रीजनः तस्य लीलायाः हेलाया य उपदेशः शिक्षणं तस्य यद्दानं अर्पणं तद्विषये एकव्यग्रः एकः केवलः एतादृशो यो व्यग्रः व्यासक्तः 'व्यग्रो व्यासक्त आकुल' इत्यमरः । पूर्वकालैकेति समासः 'एकोन्यार्थे प्रधाने च प्रथमे केवले तथा' इति कोशः । शुद्धांत अवरोध अंतःपुरमिति यावत्

त्वयि रक्षाकृति स्वर्गसद्मनामपि दैवते।
कथं नक्तञ्चरेणैवं दिवस्त्रासो वितन्यते ॥ ७१ ॥
भ्रातरि द्विषतो बाहुभग्नौजसि बिडौजसि।
भोगिभोगे चिरं तावत्केयं देवस्य शायिका ॥ ७२ ॥
आत्मस्वनुगुणं दैवं दृष्ट्या मन्यामहे तव।
न हि त्वं देवहीनस्य जनस्य तु सुदर्शनः ॥ ७३ ॥

---

विशति प्रविशति पापवासनां हित्वा तदाज्ञया केवल स्त्रीजनस्य लीलोपदेशार्थमेव अंतःपुर प्रविशतीत्यर्थः ॥ ७० ॥

एव उक्त सर्वदेवतानां दुर्दशावर्णन उपसंहरति। त्वयीति। स्वर्गः सद्म येषा स्वर्गे वा सद्मानि येषा तेषां देवानामपि अपिशब्दान्मनुष्याणामपि दैवते देवे 'वृंदारका दैवतानि' अमरः। देवशब्दात्स्वार्थेतल् तस्मात्प्रज्ञादित्वात्स्वार्थे अण्। 'क्वचित्स्वार्थिका प्रकृतितो लिंगवचनानि' इति पुंस्त्व एतादृशि त्वयि भगवति रक्षा रक्षणं करोतीति रक्षाकृत् तस्मिन् रक्षाशब्दे उपपदे कृधातो क्विप् ह्रस्वस्येति तुक् रक्षणकर्तरि सतीत्यर्थः। नक्त रात्रौ चरतीति नक्त इति सप्तम्यतोपपदे 'चरेष्ट' इति प्रत्ययः। तेन रावणेन एव पूर्वोक्तप्रकारेण दिव स्वर्गस्य 'द्यो दिवौ स्त्रिया' इत्यमरः। त्रासः पीडा कथ कृत इत्यर्थः। वितन्यते विस्तीर्यते विपूर्वतनधातोः कर्माणि लट् ॥ ७१ ॥

पुनरपि कारुण्यार्थं देवानां दीनत्व वर्णयति। भ्रातरीति। भ्रातरि बधौ बिडौजसि विड भेदकं ओजः बल शत्रुनाशक बिड इत्यइगुपधलक्षणः कः 'ओजो दीप्तावपि' एतादृशे इन्द्रे द्वेष्टीति द्विषत् तस्य द्विषतः द्विष अप्रीतौ लटः शतृआदेशः। रावणस्य बाहुभिः भुजैः भग्न नाशक ओजो यस्य एतादृशे सति देवस्य भगवतः भोगः शरीर अस्यास्तीति भोगी शेषः तस्य भोगे शरीरे 'अहेः शरीरं भोगः स्यात्' चिर बहुकाल अव्ययमिद शायिका शयन धात्वर्थे ण्वुल् वक्तव्यः इति शीङ्धातो ण्वुल् टाप् प्रत्ययस्थादितीत्वं। केय तावत् कीदृशी तावदिति वाक्यालंकारे। भ्रातृबले शत्रुणा तिरस्कृते भवतश्चिरकालशयनमनुचितमिति तात्पर्यं। इन्द्रस्य भ्रातृत्व तु कश्यपपुत्रत्वेन भगवतोपि वामनावतारे कश्यपपुत्रत्वात्। अनुप्रासालंकारः ॥ ७२ ॥

इदानीं तव दर्शनमस्माक जात अतो वयं धन्या इत्याह। आत्मेति। तव परमेश्वरस्य दृष्ट्या अवलोकनेन दैवं दिष्ट 'दैवदिष्ट भागधेयमित्यमरः' सुतरां अनुगुण अनुकूल स्वनुगुण 'कुगति प्रादयः' इति प्रादिसमासः। आत्मनः स्वस्य स्वनुगुण मन्यामहे जानीमहे मनज्ञाने लट्। अत्र बृहस्पतेरेकत्वेपि सर्वदेवाभिप्रायेण बहुवचनं। हि यतः 'हि हेतावधारणे' इत्यमरः। त्व नारायणः

इत्थं वाचस्पतौ वाचं व्याहृत्य विरते क्षणम् ।
स्वर्गे च स्वप्रतीजल्पस्पृहानिःस्पन्दवर्तिनि ॥ ७४ ॥
कुक्षिस्थनिःशेषलोकत्रयभारोद्वहोऽप्यहम् ।
विधाय मर्त्यस्त्रीकुक्षिवासं शोकक्षयाय वः ॥ ७५ ॥
भूत्वा राम इति ख्यातः कुर्यां भर्तुः सुरद्विषाम् ।
एकबाणकृताशेषशिरश्छेदपराभवम् ॥ ७६ ॥

---

दैवेन भाग्येन हीनः न्यूनः ' हीनन्यूनावूनगर्ह्यौ ' इत्यमरः । ' पूर्वसदृशसमोनेति' तृतीयासमासः एतादृशस्य जनस्य लोकस्य सुदर्शनः सुखेन दर्शनं यस्येति सुदर्शनः एतादृशः ननु नैव 'तुः स्याद्भेदेऽवधारणे' इति कोशात् तुशब्दोऽवधारणार्थः । असीति शेषः । काव्यलिङ्गमलङ्कारः । तदुक्तं 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं ' इति ॥ ७३ ॥

ततः किं प्रवृत्तं तदाह । इत्थमिति । इत आरभ्य चतुर्णां श्लोकानां एकोऽन्वयः। वाचः सरस्वत्याः पतिः वाचस्पतिः ' षष्ठ्याः पतिपुत्रपादपयस्पोषेषु सत्वविधानात् षष्ठ्याः अलुक् । अनेन पूर्वोक्तप्रकारेण इत्थं 'इदमस्थमुः' इति इदम्शब्दात् थमुप्रत्ययः प्रकारवचने 'एतेतौरथोः ' इत्यनेन इतादेशः । वाचं वाणीं 'गीर्वाग्वाणी सरस्वती' इत्यमरः । व्याहृत्य उक्त्वा क्षणं क्षणमात्रं 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया विरते सति तूष्णींभूते सतीत्यर्थः । च स्वर्गे स्वर्गलोके स्वस्य यः प्रतीजल्पः प्रत्युत्तरं प्रतीजल्प इत्यत्र 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः ' एवं च स्वोद्देश्यकविष्णुदत्तोत्तरमित्यर्थः । तद्विषयिणी या स्पृहा नाम श्रवणेच्छा तया निःस्पन्दं निश्चलं यथास्यात्तथा वर्तते तच्छीलः निःस्पन्दवर्ती तस्मिन् 'सुप्यजातौ णिनिः' अत्र स्वर्गपदेन तत्रस्था देवा गृह्यन्ते मञ्चाः क्रोशन्तीतिवत् संबन्धस्तु परत्र ॥ ७४ ॥

कुक्षिस्थ इति । त्रयः अवयवा यस्य तत्त्रयं 'द्वित्रिभ्यां तयस्यायज्वा' इति अयजादेशः । लोकानां भुवनानां त्रयं त्रितयं लोकत्रयं ' त्रिष्वथो जगती लोको' इत्यमरः । निःशेषं निखिलं यल्लोकत्रयं ' समस्तनिखिलाखिलानि निःशेषं ' इत्यमरः । कुक्षौ उदरे तिष्ठतीति कुक्षिस्थं सुपीति योगविभागात्कप्रत्ययः उपपदसमासः । कुक्षिस्थं यन्निःशेषलोकत्रयं तस्य यो भारः उद्वहतीति वहः पचादेराकृतिगणत्वादच् । कुक्षिस्थनिःशेषलोकत्रयभारस्य उद्वहः एतादृशोऽप्यहं विष्णुः वः युष्माकं देवानामित्यर्थः। 'बहुवचनस्य वस्नसौ' इति वसादेशः । शोकस्य शुचः 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । क्षयः नाशः तस्मै मर्त्यस्य मनुष्यस्य स्त्री मर्त्यस्त्री अथवा मर्त्या चासौ स्त्री च मर्त्यस्त्री तस्याः कुक्षिः उदरं तस्मिन् यो वासः तं विधाय कृत्वा विरोधाभासालङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास इष्यते ' इति ॥ ७५ ॥

राम इति । राम इत्येवं प्रकारेण ख्यातः प्रसिद्धः प्रसिद्धिं ख्यातिमर्हतीति भूत्वा

इत्युदारमुदाहृत्य वचो वाचामगोचरः ।
तत्याज वेदविद्वेद्योवपस्तिल्पं वृषानुजः ॥ ७७ ॥

चिरशयनगुरुं स्वभोगभारं भुजगपतिः शनकैर्वितत्य खेदात् ।
शिथिलितफणपङ्क्तिमुक्तदीर्घश्वसितविधूतमहार्णवोऽवतस्थे ७८

सुरान् अमरान् द्विषतीति सुरद्विषः तेषां दैत्यानामित्यर्थः । 'पूर्वदेवा' सुरद्विषः' इत्यमरः । भर्तुः बिभर्ति पुष्णाति इति भर्ता डुभृञ् धारणपोषणयोः तृच् प्रत्ययः । रावणस्य एकः एकसङ्ख्याको यो बाणः 'पूर्वकालैकेति समासः' । बाणः शरः तेन कृतः अशेषाणां शिरसां मस्तकानां छेदः द्वैधीकरणं यस्मिन् एतादृशो यः पराभवः रणेभङ्गः 'रणेभङ्गः पराजयः' इत्यमरः । तं कुर्यामि कृधातोः प्राप्तकाले लोट् । पराभवकरणस्य प्राप्तकाले इत्यर्थः ॥ ७६ ॥

इति पूर्वोक्तप्रकारेण वाचां वाणीनां अगोचरः अविषयः 'यतो वाचो निवर्तन्ते' इति श्रुतेः वागविषय इत्यर्थः । वेदविद्वेद्यः वेदान् विदन्ति जानन्तीति वेदविदः 'सत्सूद्विषदित्यादिना वेदशब्दे उपपदे विदेः क्विप्' विद्यते ज्ञायते इति वेद्यः विदधातोः 'ऋहलोर्ण्यदिति' ण्यत् अथवा णिजन्तात् अचो यदिति यत् । एतादृशः वृषानुजः वृष्णः इन्द्रस्य अनुजः कनिष्ठभ्राताविष्णुः 'उपेन्द्रइन्द्रावरजः' इत्यमरः उदारं महत् गभीरमिति यावत् 'उदारो । दातृमहतोरित्यमरः' । तल्पं शय्यां 'तल्पंशय्याट्टदारेषु' इत्यमरः । तत्याज त्यजहानौ लिट् । अनुप्रासालंकारः ॥ ७७ ॥

भुजैः गच्छतीति भुजगः 'अन्येष्वपिदृश्यते' इत्यनेन भुजशब्दे उपपदे गमेर्डः । 'सर्पः पृदाकुर्भुजगः' इत्यमरः । तेषां पतिः ईश्वरः 'ईश्वरः पतिरीशिता' इत्यमरः । भुजगपतिः शेषः चिरं चिरकालं यच्छयनं अर्थाद्विष्णोः तेन गुरु जडं एतादृशं स्वस्य यो भोगः अथवा स्वशब्द एव आत्मीयवाची 'स्वो ज्ञातावात्मनि स्वं निष्वात्मीये' इत्यमरात् । स्वः आत्मीयः यो भोगः शरीरं तस्य भारं खेदात् सकष्टादिति यावत् 'विभाषा गुणे स्त्रियां' इति पञ्चमी । शनकैः 'अव्ययसर्वनाम्नां' इति अकच् । मंदं यथास्यात्तथा इत्यर्थः । वितत्य विस्तृत्य तनुविस्तारे क्त्वापि वाल्यपीति नलोपे ह्रस्वस्यापिति कृतीति तुक् । फणानां फटानां या पङ्क्तिः परंपरा 'फटायां तु फणाद्वयोः' इत्यमरः । शिथिलिता विशीर्णिता या फणपङ्क्तिः शिथिलशब्दात् णिजन्तात् क्तप्रत्ययः इडागमः । तया मुक्तं उज्झितं यद्दीर्घश्वसितं दीर्घश्वासः तेन विधूतः कम्पितः महार्णवो महासमुद्रो येन एतादृशः सन् अवतस्थे अवपूर्वात्तिष्ठतेर्लिट् द्वित्वं 'समवप्रविभ्यःस्थः' इत्यात्मनेपदं अनुप्रासालङ्कारः । सर्गलक्षणे अंते भिन्नवृत्तत्वस्योक्तत्वात् पुष्पिताग्रवृत्तं, उक्तं च 'अयुजिनयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥ ७८ ॥

भूमिस्पर्शभयादुपेत्य तरसा लक्ष्म्या करेणोद्धृतं
व्यालम्ब्यैकपटान्तमङ्गशिखरे क्षिप्त्वोत्तरीयं ततः।
निद्रामन्थरताम्रलोचनयुगो लीलालसन्न्यासया
गत्या निर्जितवारणेन्द्रगमनः क्वापि प्रतस्थे हरिः ॥ ७९ ॥

इति कुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
जगत्पत्यभिगमनो नाम द्वितीयः सर्गः ॥

---

शेषानुजस्तल्प तत्याज इत्युक्त तत किं चकार तदाह। भूमिस्पर्शेति। लक्ष्म्या कर्त्र्या 'कर्तृकरणयोस्तृतीयेति' तृतीया भूमिस्पर्शभयात् आसनात् अधस्तन प्रदेशोऽत्र भूमिशब्दार्थ तस्या स्पर्श अर्थादुत्तरीयस्य तस्माद्यद्भयं भीति तस्माद्धेतो दुकूलस्य भूमिस्पर्शो माभूत् इति बुध्येत्यर्थ। तरसा वेगेन 'रंहस्तरसी तु रयस्यद' इत्यमर। उपेत्य आगत्य करेण हस्तेन उद्धृत उद्गृहीत व्यालम्ब्य लम्बमान एक पटस्य वस्त्रस्य अत प्रान्तो यस्य एतादृश यत् उत्तरीय दुकूल अङ्गशिखरे ऊर्ध्वाङ्गे असशिखरे इति पाठे स्कन्धोपरि क्षिप्त्वा उत्क्षिप्य निद्रया स्वापेन मथरं अलस मन्दस्पन्दमिति यावत् एतादृश ताम्रयो अरुणयो लोचनयो नयनयो युग युग्म यस्य स. लीलया लसन् शोभमान न्यास पादप्रक्षेपो यस्या एतादृश्या गत्या गमनेन निर्जितवारणेन्द्रगमन वारणाना हस्तिनां 'मतङ्गजो वारण करी' इत्यमरः इन्द्र स्वामी ऐरावत इत्यर्थ तस्य गमन निर्जित तिरस्कृत वारणेन्द्र गमन येन एतादृश हरति नाशयति सकलमिति शेष। स हरि विष्णु तत तस्मादिति ततः पञ्चम्यास्तसिल् समुद्रस्थानादित्यर्थ। क्वापि अनिर्वचनीयस्थाने प्रतस्थे जगामेत्यर्थ प्रपूर्वात्तिष्ठतेर्लिट् द्वित्व 'समवप्रविभ्यस्थ' इत्यात्मनेपद शार्दूलविक्रीडित वृत्तम् 'सूर्याश्वैर्यदि म सजौ सततगा शार्दूलविक्रीडित' इति लक्षणात् ॥ ७९ ॥

इतिश्री द्व्युत्तपदवाक्यप्रमाणपारवारीणमहामहोपाध्यायपदव्यलङ्कृतपण्डितप्रकाण्डश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्यान्तेवासिनानिगुडकरोपाभिधेन नारायणशर्मणा विरचितायां महोत्साहाख्यजानकीहरणकाव्यटीकायां जगत्पत्यभिगमनो नाम द्वितीय सर्ग.
समाप्त ॥ २ ॥

---

# तृतीयः सर्गः।

अथ श्रियः प्राणसमस्य तस्य ज्ञात्वा विविक्षामिव मर्त्यधाम।
पूर्वावतीर्णः सुमनःसमृद्धया सम्यग् वसन्तो भुवनं ततान ॥ १ ॥

---

श्रीगणेशाय नमः ॥ अथ 'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः। उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥' इत्यादि महाकाव्यलक्षणभूतऋत्वादिवर्णनं प्रारीप्सुः कविः प्रथमत्वात् 'ऋतूनां कुसुमाकरः' इत्युक्तेः भगवद्विभूतित्वेन च मुख्यत्वेन प्रथमं तावद्वसन्तं वर्णयति। अथेति। अथेत्यय शब्दः आनन्तर्यार्थः 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरात्। तथा च पूर्वसर्गे 'भूपो राम इति ख्यातं कुर्यां भर्तुः सुरद्विषां' इत्यादिना 'हरिः रामावतारं प्रतिज्ञां विधाय शेषरूपतल्पं त्यक्त्वा क्व ऽपि प्रतस्थे' इत्युक्तं तथा च अथ अनन्तरं अवतारधारणप्रतिज्ञापूर्वकं देवाऽभयप्रदानाऽनन्तरमित्यर्थः। अथशब्दस्य मङ्गलार्थत्वं तु स्वरूपत एव मृदङ्गध्वनिवत्। वसन्त्यस्मिन्मदनोत्सवाः इति वसन्तः। 'तृभूवहिवसि' इत्यायुणादिसूत्रेणाधिकरणे झच् 'वसन्ते पुष्पसमयः सुरभिः' इत्यमरः। श्रयत्येनां इति श्रीः लक्ष्मीः 'क्विब्वचिप्रच्छ्यायतस्तु' इत्यादिवार्तिकेण श्रिधातोः कर्मणि क्विप् दीर्घश्च। 'कमला श्रीर्हरिप्रिया' इत्यमरः। तस्याः प्राणैः असुभिः समः तुल्यः असवः प्राणा इव' 'वाच्यलिङ्गाः समस्तुल्य' इत्यमरौ। तस्य हरेः विविक्षां वेष्टुमिच्छा विविक्षा विशधातोः सन्नन्तात् 'अप्रत्ययादिति' अप्रत्ययः। प्रवेशेच्छाम् इत्यर्थः तां ज्ञात्वेव अवगत्येव मर्त्यानां मनुष्याणां धाम स्थानं मनुष्यलोकमित्यर्थः 'मनुष्या मानुषा मर्त्याः' 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरौ। पूर्वं हरेरवतारात् पूर्वं अवतीर्णः प्राप्तः पूर्वावतीर्णः अवपूर्वकात्तॄधातोः प्लवनतरणयोः इत्यस्मात्कर्तरि क्तः इत्त्वं नत्वं च भुवनं अर्थाद्भूलोकं 'विष्टपं भुवनं जगत्' इत्यमरः। सुमनसां पुष्पाणां समृद्ध्या सम्पत्त्या तथा सम्यक् प्रशस्तं 'सम्यक्त्रये प्रशंसयोः' इति मेदिनी। ततान चकारेत्यर्थः तनुविस्तारे लिट्। यथा कश्चिद्भृत्यः स्वामिनः कस्मिंश्चित्स्थले जिगमिषां बुद्ध्वा स्वामिगमनात्पूर्वं स्थलस्य प्रमार्जनपुष्पादिभिः शोभां तनोति, तद्वत् वसन्तः हरेः मनुष्यलोकेऽवतारेच्छां ज्ञात्वैव तत्पूर्वं स्वयं भूतले प्राप्य स्वीयपुष्पसमृद्ध्या नृलोकं भूषयामासेत्यर्थः। उत्प्रेक्षाऽनुप्रासालङ्कारौ। अत्र यद्यपि सर्गारम्भे जगणो निषिद्धः 'जोऽर्कोऽरुज मध्यगः' इत्युक्तेः तथापि 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' इत्युक्तेः। अथशब्दश्रीशब्दप्रयोगान्नैषदोषः। अस्मिन्सर्गे अतिमानि पञ्च पद्यानि हित्वा प्रायः उपजातिवृत्तानि। 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् ॥ १ ॥

भ्रान्त्वा विवस्वानथ दक्षिणाशामालम्ब्य सर्वत्र करप्रसारी ।
ऋत्विक् ततो निःस्व इव प्रतस्थे यत्रोपलब्धो धनदस्य वासः ॥२
वृक्षा मनोज्ञद्युति चम्पकाख्या रूपं वितेनुर्नवकुड्मलाढ्याः ।
न्यस्ता वसन्तस्य वनस्थलीभिः सहस्रदीपा इव दीपवृक्षाः ॥ ३॥

---

तत्तदनुवर्णनं नाम तत्तदनुसार्यवर्णनमेवेत्यभिप्रेत्य वसन्तकाले सूर्यो दक्षिणां दिशं हित्वा उत्तरां गन्तुं प्रस्थित इत्याह । भ्रान्त्वेति । अथ वसन्तप्रादुर्भावानन्तरं निःस्वः दरिद्रः 'निःस्वस्तु दुर्विधो दीनो दरिद्रः' इत्यमरः । ऋत्विगिव याजक इव 'ऋत्विजो याजकाश्च ते' इत्यमरः । ऋत्विग्दधृगित्यादिसूत्रेण ऋतुशब्दोपपदे यजेः क्विन् सम्प्रसारणं च । विवो रश्मिः सोऽस्यास्तीति विवस्वान् सूर्यः 'तदस्यास्त्यस्मिन्निति मतुप्' 'मादुपधायाश्च' इति वत्वम् 'विवस्वान् विबुधे सूर्ये' इति कोशात् दक्षिणायाः यजमानदित्सितद्रव्यरूपाया आशा आकाङ्क्षा तां अथ च दक्षिणां दिशं आलम्ब्य आश्रित्य सर्वत्र सर्वेषु इति सर्वत्र 'सप्तम्यास्त्रल्' इति त्रल् । सर्वधनिकविषये पक्षे सर्वस्थले करं हस्तं प्रसारयति अग्रे करोति तच्छीलः करप्रसारी करशब्दोपपदे प्रपूर्वात्सर्तेः 'सुप्यजातौ णिनि'। पक्षे करान् किरणान् प्रसारयति विस्तारयति 'बलिहस्तांशवः कराः' इत्यमरः । करप्रसारी सन् भ्रान्त्वा हिण्डित्वा पक्षे गत्वा भ्रमु चलने क्त्वाप्रत्यये 'उदितो वेति' वैकल्पिकेट्त्वात् अनुनासिकस्य 'क्विझलोरिति' दीर्घः । ततः दक्षिणदिशः सकाशादित्यर्थः यस्यां इति यत्र स्थले पक्षे यस्यां दिशि धनं द्रव्यं ददातीति धनदः धनशब्दोपपदे दाधातोः 'आतोऽनुपसर्गे कः' दानशीलधनिकस्येत्यर्थः । पक्षे कुबेरस्य 'मनुष्यधर्मा धनदो राजराजो धनाधिपः' इत्यमरः । तस्य वासः स्थितिः उपलब्धः प्राप्तः 'लब्धं प्राप्तं विन्नं' इत्यमरः । यत्तदोर्नित्यसापेक्षत्वात् तत्रेति लभ्यते । तत्र प्रतस्थे प्रस्थानं कृतवान् अथवा यत्र धनदस्य वासम् उपलभ्य ततः नाम तत्र 'इतराभ्योऽपि दृश्यते' इति सप्तम्यन्तात्तसिः प्रतस्थे प्रपूर्वकात् स्थाधातोर्लिट् 'समवप्रविभ्यः स्थः' इत्यात्मनेपदं दक्षिणां दिशं हित्वा सूर्यः उत्तरां दिशं गत इत्यर्थः । श्लेषालङ्कारः । 'नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रितः' इति लक्षणात् । इन्द्रवज्रा वृत्तं 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात् ॥ २ ॥

वृक्षा इति । वनानां अरण्यानां स्थल्यः अकृत्रिमभूमयः 'जानपदकुण्डगोणस्थलेत्यादिना' स्थलशब्दान्ङीप् । ताभिः वसन्तस्य न्यस्ताः तदुद्देश्यकसत्कारार्थं स्थापिता इत्यर्थः । सहस्रं दीपा येषु सहस्रशब्दोऽत्रापरिमितवाची । दीपानां प्रदीपानां वृक्षाः चम्पक इति आख्या अभिधानं येषां ते चंपकाख्याः 'आख्याह्वे अभिधानं च' इत्यमरः । नवाः नूतनाः 'नवीनो नूतनो नवः' इत्यमरः । ये कुड्मलाः मुकुलाः 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । तैः आढ्याः युक्ताः

**सम्पिण्डितात्मावयवा उदीयुः पद्मा नवाः कण्टकितोर्ध्वदण्डाः ।**
**अन्तर्जलावासविरूढशीतत्रस्ता वसन्तातपकाम्ययेव ॥ ४ ॥**
**कर्णे कृतो दीर्घविलोचनानामालोलदृष्टिद्युतिभिन्नरागः ।**
**बालोऽप्यशोकप्रभवः प्रवालः कान्तिं प्रपेदे परिणामगम्याम् ॥५॥**

---

एतादृशा वृक्षा शाखिन ‘वृक्षो महीरुह शाखी’ इत्यमर । मनोज्ञा मञ्जुला द्युतिः कान्तिः यस्य तत् मनोज्ञद्युति एतादृश रूप स्वरूप वितेनु विस्तारयामासु तनुविस्तारे लिट् उस् एत्त्वाभ्यासलोपौ । यथा राजाद्यागमनसमये उत्साहनिमित्त दीपवृक्षा क्रियते तद्वद्वनस्थलीभि वसन्तागमनसमये कुड्मलयुक्ता चपकवृक्षा दीपवृक्षा कृता इति भाव । उत्प्रेक्षालङ्कार ॥ ३ ॥

सपिण्डितेति । आत्मन स्वस्य अवयवा पत्राद्य सपिंडिता सकुचिता मुकुलिता इति यावत् आत्मावयवा येषा ते पक्षे सपिंडिता सकुचिता आत्मन देहस्य अवयवा हस्तपादादयो येषा ते पिंडिसघाते सपूर्वात् क्तप्रत्यय । कटका सजाता येषा ते कटकिता ‘तदस्य सजात तारकादिभ्य इतच्’ इति कटकशब्दात्तारकादित्वादितच्प्रत्यय । कटकिता पक्षे रोमाचिता ऊर्ध्वा उद्गता दडा नालान्या येषा ते एतादृशा नवा नूतना नवीनोद्भूता इत्यर्थ । पद्मा कमलानि ‘वा पुसि पद्म नलिन’ इत्यमरात्पद्मशब्दस्य पुस्त्व जले इत्यतर्जल ‘अव्यय विभक्तीत्यादिना सप्तम्यर्थवृत्त्यत शब्देन अव्ययीभाव अतर्जल आवास स्थिति तेन विरूढ वृद्धिंगत यच्छीत नीहार तेन त्रस्ता पीडिता सत वसतस्य वसततौ सबधी य आतप उष्ण तस्य काम्या इच्छा तया इव वसतातपशब्दात् काम्यच्प्रत्ययांतान् ‘अप्रत्ययादिति सूत्रेणाप्रत्यय’ उदीयु उदगु उत्पूर्वी इण् गतौ इत्यस्मात् लिट् उस् ‘दीर्घइण किति’ इत्यभ्यासस्य दीर्घ । समासोक्तिरलकार उत्प्रेक्षालकारश्च । ‘समासोक्ति परिस्फूर्ति प्रस्तुतेऽप्रस्तुतस्य चेत्’ इति लक्षणात् । इन्द्रवज्रावृत्त ॥ ४ ॥

कर्ण इति । दीर्घ आयते ‘सुदूर दीर्घमायत’ इत्यमर । विलोचने नेत्रे यासा तासा स्त्रीणा कर्णे श्रवणे कृत स्थापित इत्यर्थ अतएव ईषत् लोलय आलोला ‘कुगतिप्रादय’ इति प्रादिसमास आलोला चासौ दृष्टिश्च आलोलदृष्टि चचलेक्षणमित्यर्थ आलोलदृष्टे द्युति कान्ति तया भिन्न मिश्र इत्यर्थ राग रक्तिमा यस्य एतादृश बालोऽपि कोमलोऽपि अशोकात् वञ्जुलात् प्रभव उत्पत्तिर्यस्य ‘वञ्जुलोऽशोके’ इत्यमर । ‘प्रभवो जन्ममूले स्यात्सन्महेतौ पराक्रमे’ इति विश्व । एतादृश प्रवाल पल्लव परिणामेन पक्वतया रम्या मनोहरा कांति शोभा ‘शोभा कान्तिर्द्युतिश्छवि’ इत्यमर । प्रपेदे प्राप प्रपूर्व पदगतौ इत्यस्माल्लिट् एत्वाभ्यासलोपौ । स्त्रीणा शृगारार्थं कर्णस्थापित कोमलोप्यशोकपल्लव दृष्टीनामाकर्णपर्यतत्वात् तद्गतनीलकान्त्या मिश्र सन् परिपाकजन्यकान्ति प्रापेत्यर्थ । तद्गुणालकार ‘तद्गुण स्वगुणत्यागादन्यदीयगुणग्रह’ इति । इन्द्रवज्रा ॥ ५ ॥

प्रादुर्बभूवुर्नवकुड्मलानि स्फुरन्ति कान्त्या करवीरजानि ।
प्रवासिनां शोणितपाटलानि तीरीफलानीव मनोभवस्य ॥ ६ ॥
वन्ध्योऽपि सालक्तकपादघातं लब्ध्वा रणन्नूपुरमङ्गनानाम् ।
उद्भूतरोमाञ्च इवातिहर्षात् पुष्पाङ्कुरैरास नवैरशोकः ॥ ७ ॥
महीध्रमूर्ध्नि भ्रमरेन्द्रनीलैर्विभक्तशोभः शिखिकण्ठनीलैः ।
गृहीतभास्वन्मुकुटानुकारस्ततान कान्तिं नवकर्णिकारः ॥ ८ ॥

---

प्रादुरिति । कांत्या शोभया स्फुरति इति स्फुरति स्फुरधातो शत्रंतान्नपुंसकात् जसः स्थाने 'जश्शसो शिः' इति श्यादेशः एतादृशानि करवीरेभ्यः चंडातेभ्यो जातानि करवीरजानि 'चडातहयमारकाः । करवीरे' इत्यमरः । 'अन्येष्वपिदृश्यते' इत्यनेन करवीरशब्दोपपदे जनेर्डः । एतादृशानि नवानिच तानि कुड्मलानि च मुकुलानि च 'कुड्मलो मुकुलो स्त्रियां' इत्यमरः । विशेषण विशेष्येण बहुलमिति समासः । प्रवसति तच्छीलाः प्रवासिनः पथिकाः तेषां शोणितेन रक्तेन पाटलानि श्वेतरक्तानि 'श्वेतरक्तस्तुपाटलः' इत्यमरः मनसि भवः उत्पत्तिर्यस्य तस्य मदनस्य तीराया बाणविशेषस्य फलानि अग्राणि इव प्रादुर्बभूवुः आविर्बभूवुः इत्यर्थः । 'तीरामुख्यास्तु तद्भिद' इत्यभिधानं 'फले हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः' इति हेमः । तीरीफलानीतिपाठे तीरशब्दाद्गौरादित्वान्ङीप् । पथिकजनप्राणघातात् तद्रक्तमिश्रितमदनबाणाग्राणीव करवीरोत्पन्नानि नवकुड्मलानि प्रादुर्बभूवुः । करवीरकुड्मलदर्शनेन हि मनसिजबाणप्रहारेण प्रवासिना पीडा जायते इत्यभिप्रायेणेयमुत्प्रेक्षा । उत्प्रेक्षालङ्कारः ॥ ६ ॥

वध्योपीति । वध्योपि अवकेश्यपि 'वध्योऽफलोऽवकेशीच' इत्यमरः एतादृशः अशोकः अगनानां प्रशस्तमग यासां ताः अगनाः 'अगात्कल्याणे' इत्यनेन नप्रत्यय. तासां सुंदरस्त्रीणामित्यर्थः रणति शब्दायते इति रणन् एतादृशः नूपुरो यस्मिन्कर्मणि इति रणन्नूपुर 'मजीरोनूपुरोऽस्त्रियां' इत्यमरः । पादहननक्रियाया इद विशेपण अलक्तकेन सहितः सालक्तकः तेनसहेति तुल्ययोगे इति बहुव्रीहिः 'वोपसर्जनस्य' इति सादेशः । सालक्तकः यः पादश्चरणः तस्य यो घातः ताडन हंतेर्भावे घञ् तं लब्ध्वा प्राप्य अतिशयितश्चासौ हर्षः प्रमोदः तस्मात् नवैः नूतनै पुष्पाणामकुराः प्ररोहाः प्रादुर्भावा इत्यर्थः तैः उद्भूताः उद्गताः रोमांचाः पुलकाः यस्य उद्भूतरोमांच इव आस अस् गतिदीप्त्यादानेषु इति अस्माल्लिट् । उत्प्रेक्षालंकारः । स्त्रीणां पादप्रहारेण अशोको विकसति तथाहि कविसमयप्रदीपे 'स्त्रीणां स्पर्शात्प्रियगुर्विकसति बकुलः सीधुगण्डूषसेकात् पादाघातादशोकस्तिलककुरबकौ वीक्षणालिंगनाभ्याम् ॥ मंदारो नर्मवाक्यात्पटुमृदुहसनाच्चंपको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः' इति ॥ इन्द्रवज्रावृत्तम् ॥ ७ ॥

महीध्रेति । महीं पृथ्वीं धरतीति महीध्र मूलविभुजादित्वात्कः । तस्य मूर्ध्नि

वासन्तिकस्यांशुचयेन भानोर्हेमन्तमालोक्य हृतप्रभावम् ।
सरोरुहामुद्धृतकण्टकेन प्रीत्येव रम्यं जहसे वनेन ॥ ९ ॥
समीरणानर्तितमञ्जरीके चूते निसर्गेण निपक्तभावाः ।
पुष्पावतंसेषु पदं न चक्रुर्द्विमेष्विवाशोकवनेषु भृङ्गाः ॥ १० ॥

---

मस्तके शिरसि इत्यर्थः शिखाः सन्ति येषां ते शिखिनः मयूराः 'शिखावलः शिखी केकी' इत्यमरः। तेषां कंठाः गलाः तद्वन्नीलैः नीलवर्णैः 'कृष्णे नीलासितश्यामेत्यमरः'। भ्रमरा भृंगा एव इंद्रनीलाः मणिविशेषाः तैः विभक्ता विभागं प्रापिता शोभाः द्युतिर्यस्य भ्रमरैर्भिन्नवर्णं इत्यर्थः। अतएव भासः संति यस्य स भास्वान् 'तदस्यास्त्यस्मिन्निति मतुप्' एतादृशो यो मुकुटः तस्य अनुकारः अनुकरणं गृहीतः भास्वन्मुकुटानुकारो येन सः एतादृशः नवशाखो नूतनशाखो कर्णिकारश्च द्रुमोत्पलः 'अथ द्रुमोत्पले कर्णिकारः' इत्यमरः (पांगारा इति भाषायाम्) कांतिं शोभां ततान विस्तारयामास तनुविस्तारे लिट्। अनुप्रासालंकारः। उपेंद्रवज्रावृत्तं 'उपेन्द्रवज्रा प्रथमे लघौ सा' इति लक्षणात् ॥ ८ ॥

वासंतिकेति। वसंते भवः वासंतिकः 'कालाट्ठञ्'। यद्यपि 'संधिवेलाद्यृतुनक्षत्रेभ्यादिना' अण् प्राप्तः तथापि 'क्वचिदपवादविषयेऽप्युत्सर्गोभिनिविशते' इति न्यायेन ठञ् साधुः एतादृशस्य भानोः सूर्यस्य 'भानुर्हंसिर्दिवाकरौ' इत्यमरः। अंशूनां किरणानां चयः समूहः 'समवायश्चयो गणः' इत्यमरः। तेन हृतः नाशितः प्रभावः सामर्थ्यं यस्य एतादृशं हेमंत एतन्नामकं ऋतुमालोक्य दृष्ट्वेत्यर्थः उद्धृतः कंटकः क्षुद्रशत्रुः यस्य 'कंटको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे' इति मेदिनी। पक्षे उध्दृताः कटकाः कटकसदृशसूक्ष्मावयवा यस्य एतादृशेन सरोरुहां सरसि रोहति प्रादुर्भवतीति सरोरुहि सरःशब्दे उपपदे रुहबीजजन्मनि प्रादुर्भावे च इत्यस्मात् 'क्विप्च' इति क्विप्। तेषां वनेन अरण्येन समूहेनेत्यर्थः प्रीत्येव शत्रुनाशजहर्षेणेव 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः। रम्यं मनोज्ञं जहसे उपहसितं पक्षे विकसितं, यथा लोके शत्रुनाशे आनंदेन हास्यमुत्पद्यते एवं स्वपीडकहेमंतस्य वासंतिकसूर्येण विनाशे कृते कमलसमूहेन शत्रुनाशजन्याऽऽनंदेन हास्यं कृतं। हेमंतशीतेन कमलानि दग्धानि भवंतीति लोकेऽनुभवसिद्धं। उत्प्रेक्षालंकारः समासोक्तिश्च ॥ ९ ॥

समीरणेति। समीरणेन वायुना 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः। आनर्तिताः ईषत्कंपिताः मंजर्यो यस्य सः समीरणानर्तितमंजरीकः 'नद्यृतश्चेति' बहुव्रीहेः कप् 'नकपीति' निषेधात् 'केण' इति ह्रस्वो न। एतादृशो चूतस्य पुष्पं चूतं 'पुष्पमूलेषु बहुलं' इति लुप् 'लुपि युक्तवद्व्यक्तिवचने' इति युक्तवद्भावः तस्मिन् चूतमंजर्यामित्यर्थः। निसर्गेण स्वभावेन 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः। निपक्तः सक्तः भावः

विनिद्रपुष्पाभरणः पलाशः समुल्लसत्कुन्दलतावनद्धः।
उद्भूतभस्मा मधुनेव रेजे राशीकृतो मन्मथदाहवह्निः॥ ११॥

वसन्तदीप्तातपखेदितानां महीरुहां वातचलाः प्रवालाः।
जिह्वा यथा विद्रुमभङ्गताम्रा निष्कासिता रेजुरतिश्रमेण॥ १२॥

---

अभिप्रायः अंतःकरणं येषां 'भावोऽभिप्रायवस्तुनोः' इति हैमः। एतादृशाः भृंगाः भ्रमराः पुष्पाणि कुसुमानि अवतंसाः भूषणानि येषां 'अवतंसो न स्त्रियां स्यात्कर्णपूरे च शेखरे' इति मेदिनी। एतादृशेषु अतएव दीप्तेष्विव प्रदीप्तेष्विव अशोकानां वनानि समूहाः तेषु पदं चरणं पक्षे स्थानं न चक्रुः न विदधुः। मंजुलचूतमञ्जरीषु रमणशीलाः भ्रमराः आरक्तपुष्पैः प्रदीप्तवद्भासमानेष्वशोकेषु न जग्मुरित्यर्थः। उत्प्रेक्षालङ्कारः अनुप्रासश्च॥ १०॥

*विनिद्रेति*। विनिद्राणि विकसितानि पुष्पाण्येव आभरणानि अलंकारा यस्य। इदं विशेषणं वन्हिसाधर्म्यपोषकं पुनश्च समुल्लसति विकसति इति समुल्लसती एतादृशी या कुन्दलता माध्यवल्ली तयाऽवनद्धः युक्त इत्यर्थः। अवपूर्वान्नहबंधने इत्यस्मात्कर्मणि क्तः। इदं विशेषणं भस्मसाम्यपोषकं एतादृशः पलाशः किंशुकः मधुना वसंतेन 'मधुपुष्परसे क्षीरे मद्ये ना तु मधुद्रुमे। वसंतदैत्यभिच्चैत्रे स्याज्जीवत्यां तु योषिति' इति मेदिनी। राशीकृतः पुंजीकृतः राशिशब्दाच्चिः च्वौ चेति दीर्घः च्व्यन्तत्वाद्गतिसंज्ञायां 'कुगतीति' कृतशब्देन समासः। उद्भूत उद्गतं भस्म भसितं यस्य एतादृशः मन्मथं मदनं दहति भस्मीकरोतीति मन्मथदाहः 'कर्मण्यण्' स चासौ वन्हिश्च मन्मथदाहवन्हिः स इव रेजे दिदीपे राजृदीप्तौ लिट् 'फणां च सप्तानां' इत्येत्वाभ्यासलोपौ। पुष्पितपलाशस्य विकसितकुन्दलतावेष्टनेन वसंतेन समूहीकृतभस्मबहुल. मदनदाहवन्हिरिव उत्प्रेक्षालंकारः॥ ११॥

वसंतेति। वसंतेन पुष्पसमयेन ऋतुना दीप्तः प्रकर्षं प्राप्तः दीपी दीप्तौ क्तः एतादृशः आतपः द्योतः तेज इति यावत् 'प्रकाशोद्योत आतप' इत्यमरः तेन खेदितानां पीडितानां मह्यां पृथिव्यां रोहतीति महीरुहः वृक्षाः मह्यांशब्दे उपपदे रुहधातोः क्विप् तेषां वृक्षाणां वातेन वायुना चलाः चंचलाः 'चलं लोलं चलाचलं' इत्यमरः। प्रवालाः पल्लवाः 'प्रवालमङ्कुरेऽप्यस्त्री' इत्यमरः। विद्रुमाणां प्रवालानां भङ्गाः छेदाः तद्वत्ताम्राः शोणवर्णाः अतिशयितः श्रमः आतपजन्यखेदः प्रादिसमासः तेन निष्कासिताः बहिरानीताः जिव्हा यथा रसना इवेत्यर्थः। रेजुः शुशुभिरे। यथा कश्चित्पथिकः अत्यातपपीडितः सन् बहिर्जिव्हां निष्कासयति तद्वत् वसंततीव्रातपपीडितानां वृक्षाणां वातचंचलाः पल्लवाः शुशुभिरे इत्यर्थः। उपमालंकारः॥ १२॥

प्रालेयकालप्रियविप्रयोगग्लानेव रात्रिः क्षयमाससाद ।
जगाम मन्दं दिवसो वसन्तक्रूरातपश्रान्त इव क्रमेण ॥ १३ ॥
ततः स्मरस्याहवधामकल्पं क्षोणीपतिर्भ्रान्तशिलीमुखाङ्कम् ।
उद्यानमासेवत रक्तदीप्तिसन्तानभास्वत्करवीरकीर्णम् ॥ १४ ॥
रम्याणि रामानुगतो विहङ्गपक्षानिलानर्तितपल्लवानि ।
उत्क्रान्तभृङ्गाणि लतागृहाणि सम्भावयामास रहोविहारे ॥१५॥

---

प्रालेयेति । प्रकर्षेण लीयते पदार्था अस्मिन्निति प्रलय हिमाचल । प्रपूर्वा लीधातोराधिकरणे 'एरच्' इति अच्प्रत्यय प्रलयादागत प्रालेय हिम 'तत आगत' इत्यर्थे अणि 'क्कयमित्रयुप्रलयानां यादेरिय' इत्यनेन इयादेशो आदिवृद्धि । प्रालेयस्य काल समय प्रालेयकाल स एव प्रिय इष्ट नायक इति यावत् तस्य यो विप्रयोग वियोग तेन ग्लानेव म्लानेव रात्रि रजनि क्षय क्षयरोग अथच क्षीणत्व स्वल्पत्वमिति यावत् आससाद प्राप आङ्पूर्वात्सी दते कर्तरि लिट् । वसतस्य सबधी य क्रूर तीक्ष्ण आतप प्रकाश तेन श्रात इव अवसन्न इव दिवस घस क्रमेण अनुक्रमेण मद शनै यथास्यात्तथा जगाम समापदित्यर्थ । उत्प्रेक्षालकार ॥ १३ ॥

तत इति । एव त्रयोदशश्लोके वसततुं सवर्ण्य तादृशे वसततौ राज्ञा दशरथस्य स्त्रीभि सह क्रीडां वर्णयितु उद्यानप्रवेशमाह तत इति । तत वसतप्रादुर्भावानतर क्षोणीपति क्षोण्या पृथ्व्या पति स्वामी दशरथ 'धरा धरित्री धरणि क्षोणिर्ज्या काश्यपी क्षिति' इत्यमर । भ्रांता भ्रमणकर्तार ये शिलीमुखा भ्रमरा पक्षे बाणाश्च भ्रांत इत्यत्र 'गत्यर्थाकर्मकेति' कर्तरि क्त । ते एव अंका चिन्हानि यस्मिन् 'अलिबाणौ शिलीमुखौ' 'उत्सगचिन्हयोरंक.' इत्यमरौ । पुनश्च रक्ता आरक्ता या दीप्ति कांति तस्या सतान सतति परपरेति यावत् 'सतान सततौ गोत्रे स्यादपत्ये सुरद्रुमे' इति मेदिनी । तेन भास्वति यानि करवीराणि करवीरपुष्पाणि 'पुष्पमूलेषु बहुल' इति विकारप्रत्ययस्य लुप् युक्तवद्भावश्च । तै कीर्णे व्याप्त पक्षे रक्तस्य असृज यो दीप्तिसतान शोभापरपरा तेन भास्वत देदीप्यमाना करा येषां एतादृशा ये वीरा भटा तै कीर्णे व्याप्त अतएव स्मरस्य मदनस्य आहवस्य सग्रामस्य यद्धाम गृह 'सग्रामाभ्यागमाहवा' 'गृहदेहत्विट्प्रभावा धामानि' इत्यमर । ईषदून आहवधाम इत्याहवधामकल्प 'ईषदसमाप्तौ कल्पप्देश्यदेशीयमर.' इति कल्पप् प्रत्यय । एतादृशे उद्यान आक्रीड 'पुमानाक्रीड उद्यान' इत्यमर । आसेवत अभजत आङ्पूर्वात् सेवृ धातोर्लङ् । श्लेषालकार ॥ १४ ॥

रम्याणीति । रामाभि स्त्रीभि अनुगत अनुयात अर्थात् दशरथ विहायसा गच्छतीति विहगा पक्षिण विहायसो 'विहच खचद्विहा वाच्य' इत्युक्ते

त्वमप्रमादं कुरु नूपुराङ्घ्रौ भर क्षणं काञ्चि ! नितम्बभारम् ।
इतीव तस्मिन् विहरन्नृपस्त्रीकक्ष्यातुलाकोटिपुटैर्निनेदे ॥ १६ ॥
चिक्षेप बाला मुहुरर्धदृष्टिं पत्यावनङ्गक्षतधैर्यवृत्तिः ।
दूरस्थपुष्पस्तवकावभङ्गव्याजेन सन्दर्शितबाहुमूला ॥ १७ ॥

---

विहायस्शब्दोपपदे गम् धातोः खच्प्रत्ययः डित् उपपदस्य विहादेशः । 'खगे विहगविहङ्ग' इत्यमरः तेषां पक्षच्छदाः 'गरुत्पक्षच्छदः पत्र' इत्यमरः । तेषां योऽनिलः वायुः तेन आनर्तिताः ईषत्कम्पिताः पल्लवाः किसलयानि येषु अनेन वायोर्मन्दत्वं सूचितं उद्भ्रान्ताः इतस्ततो गच्छन्तः भृङ्गाः भ्रमरा येषु अनेन सुमनः समृद्ध्या सुगन्धित्वं ध्वनितं अतएव रम्याणि मनोहराणि लतानां वल्लीनां गृहाणि सदनानि निकुञ्जानीति यावत् रहसि एकान्ते ये विहाराः क्रीडाः तैः सभावयामास सत्कारयामास । अयमेव तेषां सत्कारः यद्गृहोतविहारा प्रमदाभिः सह विलासचातुरेण क्रियते । इन्द्रवज्रावृत्तं ॥ १५ ॥

त्वमिति । हे नूपुर मञ्जीर 'मञ्जीरो नूपुरोऽस्त्रियां' इत्यमरः त्वं अङ्घ्रौ चरणे 'पदङ्घ्रिश्चरणोऽस्त्रियां' इत्यमरः । अप्रमादं प्रमादस्य अनवधानतायाः अभावः अप्रमादः न अर्थाभावे नञ्तत्पुरुषः यद्यपि अव्ययीभावस्य नित्यत्वात् तत्र तत्पुरुषो दुर्लभः तथापि 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' 'अद्भुतायामसं-हित' इति च भाष्यवार्तिकप्रयोगात् उभावपि समासौ तत्रेष्टाविति हरदत्तादिभिः। कुरु विधेहि करोतेर्विध्यादौ लोट् । तथा हे काञ्चि मेखले 'स्त्रीकट्यां मेखला काञ्चीत्यमरः' क्षणं क्षणमात्रं कालाध्वनोरत्यन्तसंयोगे द्वितीया । नितम्बयोर्भारं भर धारय भृञ्भरणे लोट् मध्यम. इतीव पूर्वोक्तप्रकारेणेव तस्मिन्नरण्ये विहर-ति क्रीडति इति विहरन्त्यः एतादृश्यः या नृपस्त्रियः दशरथपत्न्यः विहरन्नृपस्त्री इत्यत्र 'पुंवत्कर्मधारयेति' पुंवद्भावः । तासां कक्ष्याः काञ्च्यः तुलाकोटयः नूपुराः 'कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने' इति मेदिनी । 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियां' इत्यमरः । तेषां पुटैः कोणैः निनेदे शब्दितं निर्वर्तितं नद अव्यक्ते शब्दे अस्मात् भावे लिट् एत्वाभ्यासलोपौ । उत्प्रेक्षा-लंकारः ॥ १६ ॥

चिक्षेपेति । नास्ति अङ्गं शरीरं यस्य अनङ्गो मदनः 'कंदर्पो दर्पकोऽनङ्ग' इत्यमरः । तेन क्षता नष्टा धैर्यवृत्तिः गाम्भीर्यवृत्तिर्यस्याः अतएव दूरे तिष्ठतीति दूरस्थः दूरस्थितः शोभाविभागात्मकः । एतादृशो यः पुष्पाणां कुसुमानां स्तबकः गु-च्छकः 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः । तस्य अवभङ्गः चयनं छेदनमित्यर्थः तस्य व्याजेन मिषेण सन्दर्शितं प्रकाशितं बाह्वोः भुजस्य मूलं कक्षः इति यावत् यया दर्शितकक्षा इत्यर्थः 'बाहुमूले उभे कक्षौ' इत्यमरः । एतादृशी बाला पत्नी कान्ते दशरथे मुहुः वारंवारं अर्धदृष्टिं दृष्टेः अर्धं अर्धदृष्टिः तां अथवा समा-

पत्या परस्या नु विधीयमाने विलासवत्याश्चरणान्तरागे ।
अन्यत्र युक्तोऽपि बबन्ध रागं लाक्षारसस्तत्प्रतिपक्षनेत्रे ॥ १८ ॥

पातुं सुदत्या वदनारविन्दमादाय दृष्टो ललनाभिरीशः ।
अपुष्परेणुव्यथितेऽपि तस्याश्चिक्षेप नेत्रे मुखगन्धवाहम् ॥ १९ ॥

पुष्पावभङ्गे निजहस्तकान्त्या विन्यस्तरागं कठिनं पलाशम् ।
प्रवालकृत्ये विनियोजयन्ती भर्त्रा परा सस्मितमालिलिङ्गे ॥ २० ॥

---

शाभावात् कर्मधारय एवोचितः चिक्षेप निदधे क्षिप्प्रेरणे लिट् । कामबाणपीडिता स्त्री पुष्पावचयनिमित्तेन कक्ष्याप्रदर्शन अर्धदृष्ट्यावलोकन इत्यादि शृंगारचेष्टाश्चकारेत्यर्थ. । इन्द्रवज्रा ॥ १७ ॥

पत्येति । परस्या· इतरस्या. प्रशस्ता विलासा यस्याः सा विलासवती 'तदस्यास्तीतिमतुप्' 'उगितश्चेति ङीप्' । तस्याः चरणयोरन्त· प्रान्तभाग तस्य रागे लाक्षादिरक्तिमनि पत्या भर्त्रा विधीयते क्रियते इति विधीयमान· तस्मिन्सति विपूर्वाद्धाञः कर्मणि लट् 'यकि घुमास्थे'तीत्व अन्यत्र अन्यस्मिन्नित्यन्यत्र इतर स्त्रीपादे इत्यर्थ. सप्तम्यास्त्रल् युक्तोऽपि लग्नोपीत्यर्थ. । लाक्षायाः जतुन रस· द्रव तत्प्रतिपक्षनेत्रे तस्या राजरजितलाक्षारसपादायाः प्रतिपक्ष· विरुद्धपक्षः तद्विरुद्धस्त्रीत्यर्थः तस्या नेत्रे नयने राग रक्तिमान बबध उत्पादयामास नु वेति असंगत्यलकारः । तदुक्त 'विरुद्धं भिन्नदेशत्व कार्यहेतोरसगतिः' इति ॥ १८ ॥

पातुमिति । शोभना दता यस्या सा सुदती 'वयसि दतस्य दतृ' इति दतशब्दस्य दतृआदेशः, 'उगितश्चेति ङीप्' तस्याः वदनमेव मुखमेव अरविंद कमल 'अरविंद महोत्पल' इत्यमरः । तत् आदाय गहीत्वा पातु प्राशितु चुबितुमिति यावत् प्रवृत्त इत्यार्थिक लब्ध ललनाभिः स्त्रीभि. दृष्ट विलोकित ईशः प्रभुः दशरथ इति यावत् पुष्पाणा कुसुमाना रेणु· धूलिः तेन व्यथित व्यथा पीडा सजाता यस्य तत् व्यथित 'तारकादित्वादितच्' तादृश न भवतीति अपुष्परेणुव्यथित तस्मिन् एतादृशे अपि तस्या अभिमतस्त्रियाः नेत्रे नयने मुखस्य वक्त्रस्य गधवाहः वायु. 'गधवाहानिलाशुगा ' इत्यमरः । तं चिक्षेप प्रेरयामास क्षिपप्रेरणे लिट् । अभिमतस्त्रीमुखचुबनप्रवृत्तो राजा इतराभिर्दृष्टः सन् तदन्यथयितु पुष्पपरागेण अपीडितेपि नेत्रे मुखवायु प्रचिक्षेप नेत्रस्थपरागादिदूरीकरणार्थं फूत्कारपूर्वकं मुखवायु प्रक्षिपतीति प्रसिद्धमेतत् तद्वत् नायमेतस्या मुख चुबितु गृण्हाति किंतु नेत्रस्थपरागदूरीकरणार्थं फूत्कारपूर्वक वायु प्रक्षिपति इति इतरस्त्रियो बोधयतीत्यर्थः । छेकापन्हुत्यलकारः । 'छेकापन्हुतिरन्यस्य शकातस्तथ्यनिन्हवः' इति लक्षणात् ॥ १९ ॥

पुष्पेति । पुष्पाणामवभग. छेदन तस्मिन् निज. आत्मीयो हस्तः 'स्वके नित्ये निज त्रिषु' इत्यमरः । तस्य काति· प्रभा तया विन्यस्तः स्थापित· रागः

किं कौतुकेन श्रमकारिणा ते सृज त्वमुद्यानविहाररागम् ।
बाले ! त्वमस्योपवनस्य लक्ष्मीरित्येवमूचे ललना सखीभिः २३
प्रियेण कर्णे विनिवेशितस्य तन्व्या नवाशोकदलस्य रागः ।
आनीलया नेत्ररुचा निरस्तस्तस्या जगामेव विपक्षचक्षुः ॥२४॥

---

ओष्ठयोः रदनच्छदयोः द्युतिः कांतिः ' ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ' इत्यमरः पाटला श्वेतरक्ता भाति शोभते पक्षे ओष्ठवत् द्युतिर्यस्याः सा ओष्ठद्युतिः एतादृशी पाटला मोघा ( पाडळी इति भाषायां ) भाति शोभते । पुंसां नाग इव पुन्नागः सबंधसामान्यषष्ठ्या समासः अथवा नाग इव पुमान् इति पुन्नागः ' उपमितं व्याघ्रादिभिरिति समासः ' हस्तिवच्छ्रेष्ठ इत्यर्थः । तस्य यः संयोगः संबंधः तेन विभूषितायाः शोभितायाः पक्षे पुन्नागः केसराख्यवृक्षविशेषः तस्य यः संयोगः तेन विभूषितायास्ते चेतः अंतःकरणं शोकस्य अभावः अशोकः अशोकस्य भावः सत्ता तं ' भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ' इत्यमरः । पक्षे अशोकानां वृक्षविशेषाणां भावः धर्मः तं अशोकत्वमित्यर्थः यातं प्राप्तं । श्लेषालङ्कारः । इंद्रवज्रावृत्तम् ॥ २२ ॥

किमिति ते तव श्रमं अवश्यं करोतीति श्रमकारि तेन ' आवश्यकाधमर्ण्ययोर्णिनिः ' । कौतुकेन कुतूहलेन ' कौतूहलं कौतुकं च कुतुकं च कुतूहलं ' इत्यमरः । उद्यानलक्ष्मीदर्शनकौतुके सति इतस्ततो भ्रमणं प्राप्तं ततः सुकुमार्यास्तव अवश्यं श्रमो भवेत् अतः एतादृशश्रमकारिकुतूहलेन किं क उपयोग इत्यर्थः । तदेव स्पष्टयति त्वं उद्याने आक्रीडे यो विहारः क्रीडा तद्विषये यो रागः अनुरागः तं सृज उत्सृजेत्यर्थः सृजविसर्गे लोट् युतो वा उद्यानविहाररागस्त्यक्तव्यः इत्याशकायां तत्रैव उपवनस्य लक्ष्मीत्वादित्याहुः । हे बाले अनेन तस्याः तादृशोद्यानलक्ष्मीत्वाऽनभिज्ञत्वं सूचितं अस्य समीपवर्तिनः उपवनस्य आरामस्य ' आरामः स्यादुपवनं ' इत्यमरः । त्वं लक्ष्मीः शोभा असीति शेषः तत्त्वच स्निग्धद्विजादित्यादिश्लोकद्वयेन श्लेषादिभिः प्रतिपादितमेव । इत्येवं पूर्वोक्तप्रकारेण सखीभिः आलीभिः ' आलिः सखी वयस्या ' इत्यमरः ' ललना सुंदरी स्त्री ' ललना च नितम्बिनी ' इत्यमरः ' ऊचे जगदे ब्रूञो धातोः कर्मणि लिट् वच्यादेशे संप्रसारणे द्वित्वं । प्रतीपालङ्कारः । तदुक्तं ' प्रतीपमुपमानस्य कैमर्थ्यमपि मन्यते ' इति ॥ २३ ॥

प्रियेणेति । प्रियेण नायकेन तन्व्याः सुतन्वाङ्ग्याः श्रोत्रे विनिवेशितस्य स्थापितस्य अशोकवृक्षस्य दलं पर्णं नवं नवीनं कोमलमित्यर्थः एतादृशं यत् अशोकदलं अशोकपर्णं तस्य रागः रक्तिमा ईषन्नीला आनीला तया ईषन्नीलवर्णया इत्यर्थः प्रादिसमासः नेत्रयोः । नयनयो रुक् कांतिः तया निरस्तः नाशितः अत एव तस्याः तन्व्याः विपक्षं च तच्चक्षुश्च विपक्षं विरुद्धं चक्षुः तत् कर्म जगामेव

हारिप्रलापोऽथ निधिर्गुणानां निधाय चक्षुर्मदमन्दपातम् ।
पर्यन्तभूमौ निकटोपयातामुवाच वाचं प्रतिहाररक्षीम् ॥ २५ ॥
कुर्वन्ति लोभेन विलोकयन्त्यः कुरङ्गनेत्रा विलसत्प्रसूनम् ।
शुभ्राभिरेनं नयनप्रभाभिः शारत्विषं पुष्पतरुं तरुण्यः ॥ २६ ॥
विभाति भृङ्गीसरणी सरन्ती गन्धाहृता चम्पककुड्मलाग्रे ।
अन्तं प्रदीपस्य निषेवमाणा धूमावली कज्जलरेखिणीव ॥ २७ ॥

---

प्रापेव । यथा कश्चिद्राजा अपरेण बलाढ्येन राज्ञा निर्जितः सन् तत्पक्षे एव गच्छति तद्वत् नवाशोकदलस्य रक्तिमा नीलया नेत्ररुचा पराभूतः सन् विपक्षभूत मधपक्षं तत्रैव जगामेव । उत्प्रेक्षालङ्कारः ॥ २४ ॥

हारिप्रलाप इति । अथ उद्यानप्रवेशोत्तर किंचिल्लीलानतर अवश्य मनः हरतीति हारी प्रलापो अनर्थक वचो यस्य सः मनोहरविलासचाटुभाषीत्यर्थः अतएव गुणानां शृङ्गारादिगुणानां निधिः शेवधिः 'निधिर्ना शेवधिर्भेदाः' इत्यमरः । अर्थाद्दशरथो राजा पर्यंते आसमताद्भागे या भूमिः तस्यां मदेन मदः पातः पतन यस्य मदपूर्णमित्यर्थ चक्षुः नेत्र निधाय स्थापयित्वा निकटभूमौ भृत्यजन विलोकयेत्यर्थं निकट समीपभाग उपयाता प्राप्ता एतादृशीं प्रतिहार द्वार रक्षतीति प्रतिहाररक्षी रक्षतेः कर्मण्यण् टिड्ढेतिसूत्रेण अण्णतत्वान्ङीप् 'स्त्री द्वार् द्वार प्रतीहार' इत्यमरः । द्वारपालीं वाच वाणीं उवाच बभाषे मृदूक्तायां वाचि लिट् वच्यादेशः अनुप्रासालङ्कारः ॥ २५ ॥

प्रतिहाररक्षीं वाचमुवाचेत्युक्त किमुवाचेत्यपेक्षायां तदेव स्पष्टयति । कुर्वन्तीति । विलसन्ति शोभते तादृशानि प्रसूनानि कुसुमानि यस्य 'प्रसूनं कुसुमं सुमं' इत्यमरः । एत दृश पुष्पतरु कुसुमानां वृक्ष लोभेन शोभावलोकनलोलुपतया हेत्वर्थे तृतीया, विलोकयति इति विलोकयन्त्य अवलोकयन्त्य विपूर्वाल्लोकृ दर्शने शतृप्रत्ययः गिञ्ताच्छतान्ङीप् शप्श्यनोर्नित्यमिति नित्य नुम् । एतादृशाः कुरङ्गस्य मृगस्य नेत्राणि नयनानि यासां ताः 'मृगे कुरङ्गवातायुरित्यमरः' एतादृश्यस्तरुण्यः युवतयः 'तरुणी युवतिः समे' इत्यमरः । एन पूर्वोक्त पुष्पतरु अन्वादेशात् 'द्वितीया टौस्स्वेनः' इति एनादेशः । शुभ्राभिः महाभिः स्वच्छाभिरिति यावत् 'शुभ्रो योगे शुभ्र मदे' इति हैम नेत्राणां प्रभाभिः कान्तिभिः शुभ्रैः शारा शबला त्विट् कांति यस्य तं शबलकांतिमित्यर्थः । 'शारः स्याच्छबले वातयासिनः पुंसि गर्त्तके' इति मेदिनी कुर्वंति विदधति । तिङन्तेनान्वीतव्यमिति पुष्पाणां शबलत्वं कुर्वन्तीत्यर्थः । तद्गुणालंकारः लक्षणं तूक्तम् । अनुप्रासश्च ॥ २६ ॥

विभातीति । गन्धेन सुरभिगन्धेन आहृता आकृष्टा चंपकस्य कुड्मलः मुकुलः 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । तस्य अग्रे प्रान्तभागे सरति गच्छतीति

विलोकयाक्ष्णोः शितिकान्तिजालैरुदन्यया वारिविगाहितायाः ।
रक्तोत्पलं तन्निकटप्ररूढमिन्दीवरत्वं गमितं हरिण्याः ॥ २८ ॥
सञ्छादिते पद्मरजोवितानैः परिभ्रमन् वारिणि राजहंसः ।
स्ववर्त्मरेखाभिरसौ विभज्य प्रयच्छतीवाञ्जवनं खगेभ्यः ॥ २९ ॥

---

सरंती सर्तेः शत्रंतान्ङीप् ' शप्श्यनो' रिति नुम् । भृगीणां भ्रमरीणां सरणी पंक्तिः सरणीत्यत्र कृदिकारादक्ति नः इति ङीप् । प्रदीपस्य अत प्रांत निषेवते ऽसौ निषेवमाणा निपूर्वात्सेवृ इत्यस्मात् लटः शानजादेशः । परिनिविभ्यः इत्यादिना षत्व । कज्जलस्य मध्या. रेखा कज्जलरेखा सा अस्या अस्तीति कज्जलरेखिनी ' व्रीह्यादित्वादिनि. ' ' ऋन्नेभ्य ' इति ङीप् । एतादृशी धूमस्य आवली धूमावली सा इव विभाति शोभते । दीपतुल्यचपककुड्मले भ्रमरावलिः कज्जलरेखिधूमावलीव शोभते इत्यर्थ. । चपकमुकुले भ्रमरपक्तेर्गमनासभवादिद विचार्यं। अतएव शार्ङ्गधरे ' भ्रमन्वनाते वनमजरीषु न षट्पदो गधफलीमजिघ्रत् । सा किन्न रम्या स च किंन रता बलीयसी केवलमीश्वरेच्छा ' इति । उत्प्रेक्षालकारः ॥ २७ ॥

विलोकयेति । उदन्यया पिपासया ' उदन्या तु पिपासा तृट् ' इत्यमरः हेत्वर्थे तृतीया वारि उदकं विगाहितायाः प्रविष्टायाः हरिण्या. मृग्याः हरिणशब्दात् ' जातेरस्त्रीविषयादयोपधात् ' इति ङीप् ' मृगे कुरगवातायुहरिणाजि'इत्यमरः । अक्ष्णो. नेत्रयोः 'ईक्षण चक्षुरक्षिणी'त्यमरः शितिः कृष्णवर्णो वा कातिः दृक् तस्या जालैः समूहैः ' जाल समूह आनाय्यागवाक्षेत्यमरः ' तस्याः हरिण्याः निकटे समीपभागे ' समीपे निकटासन्नेत्यमरः ' प्ररूढं उत्पन्न ' साधन कृता बहुल ' इति समास. । रक्त आरक्त तच्च तदुत्पल कमल ' रक्तोत्पल कोकनद ' इ यमरः । रक्तोत्पल कर्मभूत इंदीवरस्य नीलकमलस्य भावः इंदीवरत्व नीलकमल त्वमित्यर्थ· । तत् गमित प्रापित गमधातो·णिजतात् कर्मणि क्तः ' गतिबुद्धीति ' सूत्रेण रक्तोत्पलस्य अणि कर्तुर्ण्यते कर्मत्वात् ' प्रयोज्यकर्मण्यन्येषां ण्यतानां लादयो मता. ' इत्युक्ते· प्रयोज्यकर्मणि रक्तोत्पलरूपे क्तप्रत्ययः विलोक्य पश्येत्यर्थ. । अत्र विलोकनक्रियाया विशिष्टवाक्यार्थस्य कर्मत्व पश्य मृगो धावतीतिवत् । तद्गुणालकार. ॥ २८ ॥

सञ्छादितेति । पद्मानां रजांसि परागाः तेषां वितानैः उच्चैः वितानर्वा सर्वप्रभृते परागैरित्यर्थः । अथवा विपूर्वं तनुविस्तारे इत्यस्माद्भावे घञ् । पद्मरजसां विस्तारैरिति यावत् सञ्छादिते आच्छादिते एतादृशे वारिणि उदके ' आपः स्त्रीभूम्नि वार्वारीत्यमरः ' परिभ्रमति इतस्ततो गच्छतीति परिभ्रमन् परिपूर्वात् भ्रमुचलने इत्यस्माल्लटः शत्रादेशः एतादृशः असौ विग्रहः अदसस्तु विप्रकृष्टमितिवचनात् । राजहंसः मराल. ' राजहंसास्तु ते चंचुचरणैर्लोहितैः

इयत्प्रमाणोऽपि सरःप्रदेशस्तव प्रसादेन ममास्तु भोग्यः।
इत्येष सन्दर्शयती मद्गुर्हंसाय शोषाय विसारितांसः ॥ ३० ॥
पद्मः सितोऽयं पवनावधूतैर्निर्धौतरागो नु तरङ्गलेखैः।
सम्भावितो नु द्रुहिणेन तावत् कृतादिकर्मापि न यावकेन ॥३१॥
ततः सलीलं सलिलं विभिन्दन्नेवं वदन्नेव वराङ्गनाभिः।
वृतो नृपेन्द्रोपमखेलगामी स दीर्घिकां दीर्घभुजो जगाहे ॥ ३२॥

---

सिताः' इत्यमरः। स्वस्य वर्त्म गमनमार्गः 'अयन वर्त्ममार्गाध्वेत्यमरः'। तत्संबन्धिन्यो या रेखाः ताभिः अब्धयो अजनिषत इति अब्जानि 'अन्येष्वपि दृश्यते' इति जनधातोर्डप्रत्ययः। तेषां वन समूहं विभज्य खगेभ्यः खे गच्छतीति खगाः तेभ्यः पक्षिभ्यः प्रयच्छतीव ददातीव प्रपूर्वाद्दाणधातोर्लट् 'पाघ्राध्मेति' यच्छादेशः। परागपरिपूर्णे उदके नेमा हंसपादकृता रेखाः किं तर्हि अब्जवन रेखाभिषेण विभज्य पक्ष्यंतरेभ्यः भय ददाति इति तात्पर्यं। उत्प्रेक्षालंकारः ॥ २९ ॥

इयदिति। शोषाय शोषणाय विसारितौ प्रसृतौ असौ स्कंधौ येन एतादृशः एषः समीपतरवर्ती मद्गुः पानीयकाकिका (पाणकावळा इति लोके) 'मद्गुः पानीयकाकिका' इति रभसः। इयत् एतावत् प्रमाण यस्य सः विसारितांसप्रमाण इत्यर्थः। एतादृशोऽपि आपिना अधिकापेक्षा नास्तीति सूचितं। सरसः सरोवरस्य प्रदेशः भागः तव हंसस्य प्रसादेन प्रसन्नतया कृपयेत्यर्थः। मम मद्गोः भोग्यः भोक्तुं योग्यः भुजधातोः 'ऋहलोर्ण्यत्' इति ण्यत् 'चजोःकुघिण्ण्यतोः' कुत्वं। अस्तु भवतु अस्तेः प्रार्थनायां लोट्। इति एव प्रकारेण हंसाय मरालाय संदर्शयतीव प्रदर्शयतीव इत्यर्थः। यथा कश्चन दीनः कस्माच्चिद्धनिकात् अल्पसंतुष्टः सन् स्वनिर्वाहाय स्वल्पमेव याचते तथा मद्गुः शोषाय विसारितांसः सन् अभीष्ट सरःप्रदेश विसारितांसप्रमाणेन संदर्शयतीवेत्युत्प्रेक्षालङ्कारः ॥ ३० ॥

पद्म इति। द्रुहिणेन ब्रह्मणा कर्त्रा 'धाताब्जयोनिर्द्रुहिणः' इत्यमरः। यावः अलक्तक एव यावकः 'यावो रक्तो द्रुमामयः' इत्यमरः। 'यावादिभ्यः कन्' इति स्वार्थे कन्प्रत्ययः। यावकेन अलक्तकेन करणेन आदि च तत् कर्म च आदिकर्म कृतं विहित आदिकर्म रंजनरूपप्रथमक्रिया यस्य एतादृशोऽपि अयं पुरोवर्ती पद्मः कमलः 'वा पुंसि पद्मं नलिनं' इत्यमरः। सितः शुभ्रः अस्मिन् हेतुः ब्रह्मणा यावकेन कृतादिकर्मापि पद्मः सितोऽस्ति तत्कारणमुत्प्रेक्षते पवनेत्यादिना। पवनेन वायुना अवधूताः कंपिताः तैः तरंगाणां ऊर्मीणां लेखाः तैः निर्धौतः क्षालितः रागो रक्तिमा यस्य एतादृशो नु ननु तरंगलेखैः रागक्षालनेऽपि ब्रह्मणा पुनः रंजनरूपो भवितव्यमिति अत आह तावदिति तरंगलेखैः रागक्षालनोपरं द्रुहिणेन सम्भावितः नास्ति नु। उत्प्रेक्षालङ्कारः ॥ ३१ ॥

तत इति। ततः पूर्वोक्तप्रकारेण प्रजाहितमुद्दिश्य भाषणानन्तरं हंसाय

तस्योरसि क्षत्रकुलैककेतोस्तरङ्गदोर्णा कमलाकरेण ।
न्यस्ता मुहुः पङ्कजरेणुपङ्क्तिः सौवर्णसूत्रश्रियमाततान ॥ ३३ ॥
पद्माकरो वारि विगाह्यमानं कामीव रामाजनमूरुदघ्नम् ।
वीचीकराग्रेण नितम्बभागे व्यास्फालयामास शनैः सशब्दम् ॥ ३४
तस्यावगाहे वनिताजनस्य दूरीकृतः पीननितम्बचक्रैः ।
लब्धप्रवेशस्तनुमध्यदेशेषु स्तनैरुदासेऽथ सरस्तरङ्गः ॥ ३५ ॥

---

उपमा यस्य स इन्द्रोपमः इन्द्रतुल्य इत्यर्थः । ' एतादृशो य. खेलः क्रीडा लीला वा तेन गच्छतीति इन्द्रोपमखेलगामी वृषा सेचकः तरुण इत्यर्थः अतएव दीर्घभुजः दीर्घौ आयतौ भुजौ बाहू यस्य वरा. श्रेष्ठा. या अगना स्त्रिय. ताभिः वृतः एतादृश सः दशरथः । एव पूर्वोक्तप्रकारेण वर्ततीति वदन् लीलया सहितं सलील सलिल उदकं विभिनत्ति ताडयति इति विभिदन् एतादृशः सन् दीर्घिकां वापीं ' वापी तु दीर्घिका ' इत्यमरः । जगाहे प्रविवेश गाहू विलोडने लिट् । उपमाऽनुप्रासालङ्कारौ ॥ ३२ ॥

तस्येति । कमलानां पद्मानां आकरः तेन कमलाकरेण कर्त्रा तरग एव ऊर्मिरेव दोः भुज. तेन करणेन ' भुजबाहू प्रवेष्टो दोः ' इत्यमर । क्षत्राणां क्षत्रियाणां कुल समूहः तस्य एककेतोरिव एकध्वजस्येव सकलक्षत्रकुलश्रेष्ठस्येत्यर्थः । तस्य दशरथस्य उरसि वक्षस्थले मुहुः वारंवार न्यस्ता स्थापिता निपूर्वात् असु क्षेपणे इत्यस्मात्क्त' । पङ्कात् कर्दमात् अजनिषत इति पंङ्कजानि कमलानि ' अन्येष्वपि दृश्यते ' इति डप्रत्ययः तेषां रेणवः परागाः तेषां पङ्क्तिः श्रेणिः सुवर्णस्य इद सौवर्णं ' तस्येद ' इत्यण् प्रत्ययः । सौवर्णं यत्सूत्र गुणः तस्य श्रिय शोभां आततान विस्तारितवतीत्यर्थ. तनु विस्तारे लिट् । अनुप्रासालङ्कारः । ३३ ॥

पद्माकर इति । अतिशयितः कामो यस्य स कामी ' अत इनि ठनौ ' इतीनि. । स इव पद्माकर. जलाशय' दीर्घिकेति यावत् ऊरु दघ्न ऊरू सक्थिनी प्रमाणं यस्य तदूरुदघ्न ' प्रमाणे द्वयसच् दघ्नच्' इत्यादिनाप्रमाणे दघ्नच्प्रत्यय । एतादृश वारि उदक विगाहतेऽसौ विगाह्यमानः त विपूर्वात् गाहू विलोडने इत्यस्मात् शानच् रामाणां स्त्रीणां जन समूहः स्त्रीसमूहमित्यर्थः । नितम्बस्य भाग' नितम्बभागः तस्मिन् वीच्य एव कराः वीचीकरा तेषां अग्र तेन तरंगरूपकराग्रेणेत्यर्थः । शनैः मंद शब्देन सहित सशब्द यथा स्यात्तथा व्यास्फालयामास ताडयामासेत्यर्थः । यथा कश्चि कामी स्त्रीणा नितम्बेषु सशब्द हस्तेन ताडयति तद्वत् पद्माकरोऽपि वीचीरूपनिजहस्ताग्रेण मद मदं तासां नितम्बभागे ताडयामास । उपमालङ्कारः । इन्द्रवज्रावृत्तम् ॥ ३४ ॥

तस्येति । तस्य पूर्वोक्तस्य वनितानां स्त्रीणां जनः समूहः तस्य अवगाहे ...ेशे पीना' पुष्टा. ये नितम्बा' कटिपश्चाद्भागाः तेषां चक्राणि समूहा. तै.

बालापरिष्वङ्गसुखाय पत्युरन्तर्जलावारितमूर्ति यातु. ।
विज्ञाय वैमल्यमपां बभूव व्यर्थ. प्रसादो हि जलाशयानाम् ॥३८॥
भृङ्गा निलीनेन सरोजषण्डे योऽपिद्वितीयेन नराधिपेन ।
उत्सारिता वक्तुमिवापरासां कर्णान्तमीयुर्निहितावतंसम् ॥३९॥
नृपेण केलीकलहेऽपरस्याश्छिन्नच्युतस्याम्बुजिनीपलाशे ।
हारस्य वीचीकणिका समीपे पूर्वस्थिता. संवरणान्यभूवन् ॥४०॥

---

शत्रुणाभेदो न सम्भवतीति ध्वनि । अर्थान्तरन्यासालङ्कार तदुक्त 'उक्तिरर्थान्तरन्यास । स्यात्सामान्यविशेषयो ' इति अनुप्रासश्च । इन्द्रवज्रावृत्त ॥ ३७ ॥

बालेति । बालाना स्त्रीणां य परिष्वङ्ग आलिंगन तत्सबधि यत्सुख तस्मै तादर्थ्ये चतुर्थीय जले इत्यतर्जल अव्यय विभक्ति इत्यादिना विभक्त्यर्थेऽव्ययीभाव । अतर्जलं आवारिता आवरण प्रापिता आच्छन्नेति यावत् आङ्पूर्वात् वारयते क्त एतादृशी मूर्ति देहो यस्मिन्कर्मणि अथवा जलै उदकै आवारिता आवरण प्रापिता आच्छन्नेति यावत् मूर्ति यस्मिन्कर्मणि क्रियाविशेषणमेतत् अत मध्ये यातु यातीति गच्छतीति याता तस्य यातु याधातोस्तृच् जलमध्ये प्रच्छन्न गच्छत इत्यर्थ । एतादृशस्य पत्यु दशरथस्य विज्ञाय अर्थात् बालापरिष्वङ्गविज्ञायेत्यर्थ अपा उदकाना 'आप स्त्रीभूम्नि वार्वारि' इत्यमर । निर्गत मलो यासा ता विमला तासा भाव वैमल्य ब्राह्मणादित्वाद्भावे ष्यञ् बभूव । हि यस्मात्कारणात् जलस्य आशया तेषा पक्षे डलयोरैक्यात् जडाशयानां प्रसाद स्वच्छता सुप्रसन्नता च व्यर्थ निरर्थक इत्यर्थ । जलाशयानामित्यत्र जडाशयानामिति डलयोरभेदाध्यवसायमूलकोऽर्थान्तरन्यास इत्येषा ध्वनित । इन्द्रवज्रा ॥ ३८ ॥

भृंगा इति । सरोजषण्डे कमलवृन्दे 'ना-व्योमूर्धन्योऽ-न्तादिन्द्रये तु षण्ड स्त्रीय' इत्युष्माविवेक निलीनेन निभृतेन गुप्तेनेत्यर्थ योऽपि कोऽपीत्यर्थ । द्वितीया सहचारिणी यस्य एतादृशेन नराधिपेन नराणां मनुष्याणां अधिपेन स्वामिना दशरथेन उत्सारिता निःसारिता एतादृशा भृगा• भ्रमरा अपरासां अन्यस्त्रीणां वक्तुमिव अय राजा युष्मासु मध्ये एकामेव गृहीत्वा पद्मषण्डे गुप्त इति कथयितुमिव निहित स्थापित अवतंस पुष्पाद्याभरणं यस्मिन् 'अवतंसो न स्त्रियां स्यात् कर्णपूरे च शेखरे' इति मेदिनी । कर्णस्य श्रोत्रस्य अत समीपभाग त ईयु प्रापु इण् गतौ लिट् 'दीर्घ इण किति' इति अभ्यासदीर्घ । इन्द्रवज्रा ॥ ३९ ॥

नृपेणेति । नृन् मानवान् पाति रक्षतीति नृप तेन दशरथेन 'आतोऽनुपसर्गे क' इति कप्रत्यय• । अपरस्या अन्यस्या केल्या क्रीडाया सबन्धी य कलह भण्डनं 'कलहे भण्डने युद्धवैरे समरराडशौ' इति हैम । अंबुजिन्या कम-

क्रीडाविमर्दे वलयस्य भिन्नप्रसृतस्य विक्षेप विहस्य खण्डम् ।
स्वच्छे जले बालमृणालभङ्गशङ्काहृतः शङ्खमयस्य हंसः ॥ ४१ ॥
रोधोलतामण्डपयातकान्तासंभोगतः सर्पति काञ्चिनादे ।
ररक्ष राजानमथ व्यलीकादुग्रासमुक्तः कलहंसनादः ॥ ४२ ॥

---

लिन्या. पलाशे दले आदौ च्छिन्नः पश्चाच्च्युतः तस्य हारस्य मुक्तावल्याः समीपे समीपभागे पूर्वं स्थिताः पूर्वस्थिताः सुप्सुपेति समासः । एतादृशाः वीचीकणिकाः वीचीनां ऊर्मीणां कणिकाः कणाः सूक्ष्मबिंदव इत्यर्थः। संव्रियते आच्छाद्यते यैस्तानि संवरणानि आच्छादकानीत्यर्थः । अभूवन् । यद्यप्यत्र करणे ल्युडन्तः संवरणशब्दः कणिकानां विशेषणं तथा च 'श्रियः कुरूणामधिपस्य पालनीमितिवत्' संवरण्य इति प्राप्तं तथापि शरदः कृतार्थता खुरकुट्टाइमित्यादिवत् सामान्ये नपुंसकं इति स्वीकृत्य अयं प्रयोगः सुसाधः । सामान्यालङ्कारः । 'सामान्यं यदि सादृश्याद्विशेषो नोपलभ्यते' इति लक्षणात् ॥ ४० ॥

क्रीडेति । हंसः मरालः क्रीडायाः संबंधी विमर्दः मर्दनं तस्मिन् स्वच्छे निर्मले जले उदके आदौ भिन्नं पश्चात्प्रसृतं अधः पतितं तस्य शङ्खस्य कम्बोः विकारः शङ्खमयः 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इत्यनेन विकारे मयट् अतएव बालं च तत् मृणालं बिसं तस्य भङ्गः खण्डः तस्य शङ्का आशङ्का तां आहरति करोतीति बालमृणालभङ्गशङ्काहृत् 'क्विप्चेति' क्विप् एतादृशस्य वलयस्य कङ्कणस्य खण्डं छेदं विहस्य आहृत्य विक्षेप तत्याजेत्यर्थः । हंसः बालमृणालखण्डशङ्कोत्पादकशङ्खमयवलयस्य खण्डं मृणालखण्डबुध्या गृहीत्वा नेदं मृणालमिति निश्चित्य तत्याजेत्यर्थः । भ्रांतिमानलंकारः 'स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयं । ' इंद्रवज्रावृत्तम् ॥ ४१ ॥

रोधोलतेति । रोधसि क्रीडासरस्तीरे यो लतामण्डपः कुञ्ज इत्यर्थः । तत्र याता प्राप्ता या कान्ता स्त्री तस्याः संभोगतः संभोगेनेत्यर्थः आद्यादित्वात्पूर्णीयार्थे तसिः काञ्च्याः मेखलायाः नादः ध्वनिः । 'स्त्रीकट्यां मेखलाकाञ्चिः' इत्यमरः । सर्पति प्रसरति इति सर्पन् तस्मिन् सर्पति सति 'यस्य च भावेन' इति सूत्रेण भावे सप्तमी अथ काञ्चिनादसर्पणानन्तरं उग्रासमुक्तः उग्रासः अतिशयभीतिरित्यर्थः । 'दरत्रासौ भीतिर्भीः' इत्यमरः । तेन मुक्तः उज्झितः एतादृशः कलहंसनादः कलाः मधुराः ये हंसा मरालाः तेषां यो नादः ध्वनिः अथवा कलो यो हंसनादः सः राजानं दशरथं व्यलीकात् निषिद्धात् अलीकात् कपटात् 'अलीकं त्वप्रियेऽनृते' इत्यमरः । तस्मात् रोधोलतामण्डपे एकस्त्रीसंभोगेन इतरस्त्रीवचनरूपाद्दुःखादित्यर्थः । ररक्ष पालयामास । अयं भावः कलहंसनादे उत्पन्ने तस्मिन् काञ्चीनादस्य निभृतं शीघ्रं एकाकि स्त्रीसंभोगरूपराजकपटं ह्याच्छिन्नं हार अर्थात्कलहंसनाद एव व्यलीकात् राजानं ररक्षेत्यर्थः ॥ ४२ ॥

निरुद्धहासस्फुरिताधरोष्ठः सद्यः समाविष्कृतरोमहर्षः ।
जलावमग्नप्रमदोपगूढेरुद्भासकस्तस्य बभूव गण्डः ॥ ४३ ॥
फुल्लं यदीदं कमलं किमेवमत्रैव नीलोत्पलयोर्विकाशः ।
इत्यात्तशङ्को वदनं सुदत्या हंसः सिषेवे न सरस्तरन्त्याः ॥ ४४ ॥
सुगन्धिनिश्वासगुणावकृष्टं मुखे पतन्तं करपल्लवेन ।
दुर्वारमन्तःसलिलप्रवेशात् तत्याज काचिद्भ्रमरीसमूहम् ॥४५॥

---

निरुद्धेति । हासः हास्य स्फुरिताधरोष्ठः कम्पिताधरोष्ठः निरुद्धौ हासस्फुरिताधरोष्ठौ यस्मिन्नाः सद्यः सपदि जलावमग्नप्रमदोपगूढिकाले इत्यर्थः। सम्यगाविष्कृतः प्रकटीकृतः रोमहर्षः रोमाञ्चः यस्मिन् 'रोमाञ्चो रोमहर्षणमित्यमरः' एतादृशो गण्ड. कपोलः तस्य दशरथस्य जले अवमग्नाः याः प्रमदाः मानिन्यः 'प्रमदा मानिनी कान्तेत्यमरः' तासां उपगूढेः आलिंगनस्य उपपूर्वकाद्गुहधातोः भावे क्तिन् 'तितुत्रेति' निषेधादिणभावे ढत्वादीनि कार्याणि उद्भासकः उद्भासयति प्रकाशयति ज्ञापयतीति उद्भासकः ज्ञापक इत्यर्थः । बभूव । हासस्फुरितादीनां निरोधेऽपि निरोद्धुमशक्यस्तत्कालं उत्पन्नरोमाञ्चो गंडः दशरथस्य जलावमग्नप्रमदोश्लेषस्य ज्ञापको बभूव ॥ ४३ ॥

फुल्लमिति यदि इदं पुरोवर्ति कमलं फुल्लं विकसितमस्ति अत्रैव एतस्मिन्कमले एवेत्यर्थः । नीले नीलवर्णे उत्पले कमले विकाशः विकसनं अस्तीत्यर्थः एवं फुल्लकमले नीलोत्पलविकासः किं अदृष्टश्रुतचरमित्यर्थः । इति उक्तप्रकारेण आत्ता गृहीता शङ्का आशङ्का येन एतादृशः हंसः तरतीति तरन्ती तस्याः उदके प्लवमानायाः तरते शतन्तान्ङीपि शपश्यनोर्नित्यमिति नुम् एतादृश्याः शोभना दंता यस्याः सा सुदती 'वयसि दंतस्य दतृ' इत्यनेन दत्रादेशः उगितश्चेति ङीप् तस्याः स्त्रियाः वदनं मुखं सिषेवे भेजे सरः सरोवरं न सिषेवे अधिकगुणवत्त्वात्सुदतीवदनमेव सिषेवे न सर इत्यर्थः । अतिशयोक्त्यलङ्कारः । इंद्रवज्रावृत्तं ॥ ४४ ॥

सुगन्धीति । काचित्स्त्री सुष्ठु गन्धो यस्य सुगंधि. 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इत्यनेन गन्धशब्दस्य इकारादेश. एतादृशो यो निःश्वासः तस्य यो गुण. सौगन्ध्य तेन अवकृष्ट आकृष्ट अतएव मुखे वक्त्रे पतति गच्छतीति पतन् तं पतंतं करः हस्त. पल्लव इव करपल्लवः तेन दुःखेन वार्यते इति दुर्वारः तं दुर्वार्यमित्यर्थः । 'ईषद्दुःसुषु' इत्यनेन दुःपूर्वकाद्वारयतेः खल् प्रत्ययः । एतादृशं भ्रमरीणां समूहं सलिलं उदकं इति अन्तःसलिलं तत्र प्रवेशः अन्तःसलिलप्रवेशः तस्माद्धेतोः तत्याज जहौ इत्यर्थः । सुगन्धिमुखानुसारेण करपल्लवेनापि दुर्निवार्यं भ्रमरीसमूहं काचित् भ्रमरीसमूहं उदकमध्यप्रवेशाद्दूरीचकार । भ्रमरा उदकेन गन्तुं अशक्ताः अतः जलप्रवेशेन सा दूरीचकारेत्यर्थः ॥ ४५ ॥

मत्स्येन चीनांशुकपृष्ठलक्ष्यकाञ्चीमणिग्रासकुतूहलेन ।
आघ्राय मुक्तोपनितम्बमेका सत्रासभुग्नभ्रु चिर चकम्पे ॥ ४६ ॥
तत्याज नो सव्यपदेशमन्या व्युदस्तवासाः सलिलं नृपेण ।
स्थानप्रयुक्तः कपटप्रयोग॰ कांचिद्विपत्तेर्हि जन बिभर्ति ॥ ४७ ॥
हृतान्तरीया हृदयेश्वरेण व्रीडोपतप्ता पयस॰ प्रसादात् ।
व्यर्थप्रणामाश्रुनिपातवृत्ति काचिज्जले सम्भ्रमयाम्बभूव ॥ ४८ ॥

---

मत्स्येनेति । चीनांशुक चीनदेशोत्पन्नवस्त्र तत्र यत् पृष्ठ पृष्ठभाग चीनांशुका वृतपृष्ठमित्यर्थ । तत्र लक्ष्य दृश्य चीनांशुकानां अतिसूक्ष्मत्वात् तत्र सलक्ष्य मित्यर्थ एतादृश य कांचीमणि मेखलारत्न 'रत्न मणिर्द्वयोरश्म' इत्यमर । तस्य यो ग्रास भक्षण तद्विषये कौतुक कुतूहल यस्य आरक्तत्वसाम्यात् मणी मांसबुध्या तद्ग्रासलोलुपेनेत्यर्थ । एतादृशेन मत्स्येन मीनेन उपनित नितम्बस्य समीप उपनितम्ब 'अव्यय विभक्तीत्यादिना सामीप्ये अव्ययीभाव आघ्राय अर्था-त्काचीमणिमित्यर्थ मुक्ता त्यक्ता एकास्त्री सत्रासेन भुग्ना कुटिला सत्रास भुग्ना सत्रासभुग्ना भ्रू भृकुटिर्यस्मिन् कर्मणि तत्सत्रासभुग्नभ्रु यथास्यात्तथा इद कम्पक्रियायाविशेषण चिर चिरकाल चकम्पे विव्येथे । इन्द्रवज्रावृत्त ॥ ४६ ॥

तत्याजेति । अन्या इतरा काचास्त्री नृपेण दशरथेन व्युदस्त दूरीकृत वास वसन यस्या सा 'वासश्चैल वसनमंशुक' इत्यमर । व्युदउपसर्गपूर्वकादसुक्षेपणे इत्यस्मात्क्तप्रत्यय सव्यपदेश व्यपदेश व्याज 'व्याजोपदेशो लक्ष्य चेत्यमर' तेन सहित सव्यपदेश तद्यथा तथा किंचिन्निमित्त कृत्वा सलिल उदक नो तत्याज न जहावित्यर्थ त्यज हानौ लिट् । नग्नतया बहिर्गन्तुमशक्यत्वात् केनचिन्निमित्तेन जले एव तस्थावित्यर्थ । हि यस्मात्कारणात् 'हि हेतावधारणे' इत्यमर । स्थाने योग्यस्थले प्रयुक्त कृत कपटस्य मिषस्य प्रयोग क्षय च क उदक तदेव पट वस्त्र तस्य प्रयोग वरण विपत्ते आपद 'विपत्त्या विपदापदौ' इत्यमर । कचित् कदाचित् जन लोक बिभर्ति पोषयति पालयतीत्यर्थ डुभृन् धारणपोषणयो लट् । अर्थान्तरन्यास ॥ ४७ ॥

हृतांतरीयेति । हृदयस्य अत करणस्येश्वर स्वामी तेन 'स्वेशभासपिसकसे-त्यनेन ईश् धातोर्वरच् प्रत्यय दशरथेन हृत दूरीकृत अंतरीय उपसव्यान यस्या अपहृतपरिधानीयवस्त्रा इत्यर्थ । 'अंतरीयोपसव्यानपरिधानेत्यमर' अतएव पयस उदकस्य 'पय क्षीर पयोऽम्बुचे'त्यमर । प्रसादान्नैर्मल्याद्धेतो व्रीडया लज्जया उपतप्ता पीडिता प्रणाम नमन अश्रूणां निपात रोदनजन्याश्रुपातन 'प्रणामाश्रुनिपातयो' वृत्ति वर्तन करणमित्यर्थ व्यर्था मोघा प्रणामाश्रुनिपा-तवृत्तिर्यस्या अनेन पक्ष न प्रक्षेप्तव्य इति तस्य दयोत्पादनार्थं कृतापि प्रणामा-श्रुनिपातवृत्ति यस्या व्यर्था बभूवेत्यर्थ । एतादृशी काचित् स्त्री लज्जारक्षणार्थं जल

सामि प्रबुद्धस्य कुशेशयस्य कोशे मुखन्यासनिरुद्धदृष्टिम् ।
स्प्रष्टुं प्रयेते कलहंसशावं निःशब्दमुत्खण्डितवीचि काचित् ॥४९॥
सङ्क्षोभितोद्दामसरस्तरङ्गक्षिप्ता किलैका नृपतिं कुचाभ्याम् ।
आहत्य धृष्टत्वकृतापवादव्यपायरम्यं मुहुराललम्बे ॥ ५० ॥
अन्या पुराणं निजमेव वीचिविक्षालिताङ्गेऽधिपतेः पृथिव्याः ।
पदं नखस्य स्फुरत्कुङ्कुमाङ्कं दृष्ट्वा परं संशयमाललम्बे ॥ ५१ ॥

---

उदकं सम्भ्रमयाम्बभूव विलोडयामास । सपूर्वाद्भ्रमेर्लिट् आम् भवतेरनुप्रयोगश्च । जलस्य आविलत्वे लज्जारक्षणं भवेदित्यभिप्रायेण जलं संक्षोभयामासेत्यर्थः ॥४८॥

सामीति । सामि अर्धं 'सामि त्वर्धे जुगुप्सिते' इति हैमः । प्रबुद्धस्य विकसितस्य कुशे जले शेते इति कुशेशयं कुशशब्दे सप्तम्यन्ते उपपदे 'अधिकरणे शेतेः' इत्यनेन अच् 'शयवासवासिष्वकालात्' इत्यनेन सप्तम्या अलुक् 'कुशं जले' इति हैमः । 'शतपत्रं कुशेशयम्' इत्यमरश्च। तस्य कमलस्य कोशे कुड्मले 'कोशोऽस्त्री कुड्मले खड्गपिधाने' इत्यमरः । मुखस्य वक्त्रस्य न्यासः स्थापनं तेन निरुद्धा प्रतिबद्धा दृष्टिः ईक्षणं यस्य 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः । एतादृशं कलहंसस्य शावः शिशुः 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । तं काचित् स्त्री निःशब्दं निर्गतः शब्दो यस्मात्तन्निःशब्दम् इदं उत्खण्डनक्रियाया विशेषणम् उत्खण्डिताः भिन्नाः वीचयः ऊर्मयो यस्मिन् इदं यतनक्रियाया विशेषणम् उत्खण्डितवीचि यथा स्यात्तथा स्प्रष्टुं स्पर्शं कर्तुं प्रयेते प्रयत्नं कृतवती प्रपूर्वाद्यततेर्लिट् ए त्वाभ्यासलोपौ । ईषद्विकसितकमले मुखन्यासेन निरुद्धदृष्टिं हंसशावं वीचीशब्दे सति स कदाचित् पलायेत अतो निःशब्दं वीचीभङ्गतया तं स्प्रष्टुं काचित् स्त्री प्रयत्नं चकारेत्यर्थः । इदयमावृत्त ॥ ४९ ॥

सङ्क्षोभितेति । सङ्क्षोभितं यत् उद्दामसरः महत्सरः तस्य यस्तरङ्गः वीचिः अथवा सङ्क्षोभितः क्षुब्धश्चासौ उद्दामः एतादृशः यः उद्दामसरस्तरङ्गः महासरोवरतरङ्ग इत्यर्थः । तेन क्षिप्ता प्रेरिता किलेति वार्तायां एका काचित् स्त्री नृपतिं दशरथं कुचाभ्यां स्तनाभ्यां आहत्य ताडयित्वा धृष्टस्य भावः धृष्टत्वं धार्ष्ट्यं तेन कृतः यो अपवादः निन्दा 'अपवादौ तु निन्दाज्ञे' इत्यमरः । तस्य यो व्यपायः नाशः तेन रम्यं मनोज्ञं यथा स्यात्तथा मुहुः वारंवारं 'मुहुः पुनःपुनः शश्वत्' इत्यमरः । आललम्बे आश्लिश्लिषे आङ्पूर्वाल्लम्बधातोर्लिट् । महता सरस्तरङ्गेण क्षिप्ता काचित् स्त्री तरङ्गाघातवेगापनयनात् कुचाभ्यां नृपतिं ताडयित्वा कुचाभ्यां पतिताऽनल्पधार्ष्ट्यनिन्दानाशमनोहरं समेत्य नृपतिं वारंवारं आश्लिश्लिषे इत्यर्थः ॥ ५० ॥

अन्येति । अन्या अपरा काचन स्त्री पृथिव्याः भूम्याः 'गोत्राकुः पृथिवी पृथ्वी' इत्यमरः । अधिपतेः स्वामिनः दशरथस्य वीचिभिः ऊर्मिभिः विक्षालितं धौत

किं राजहंसस्य शशाङ्कबिम्बच्छायामुषश्चञ्चुरियं प्रवाले ।
बद्धा नु गन्धोज्ज्वलकेशराग्रच्छेदेषु दिग्धा नु सरोजकान्त्या ॥५२॥
भृङ्गोऽयमिन्दीवरमध्यपातसञ्चारितैस्तद्द्युतिरञ्जितो नु ।
निधाय वायं निजपक्षशोभामादत्त नु स्वादुमतः परागम् ॥५३॥
पद्मा पदं पद्मवने विभिन्नवीचीकणार्द्रद्रुतयावकाङ्कम् ।
चक्रे चिरं चारुतया नु लोभादित्यास कासामपि तत्र तर्कः ॥५४॥

---

एतादृशं यदङ्गं शरीरं तस्मिन् पुराणं पुरातनं निजमेव आत्मीयमेव 'स्वके नित्ये निजं त्रिषु' स्फुटं स्पष्टं कुङ्कुमाङ्कं घुसृणचिह्नं यस्मिन् 'उः सगौ चिह्नयोरङ्कः' इत्यमरः । एतादृशं नखस्य नखरस्य पदं स्थानं चिह्नमित्यर्थः । दृष्ट्वा विलोक्य परं महान्तं संशयं संदेहं परकीयाया इदं नखव्रणमिति संदेहं आलम्बे आशिश्रिये ॥ ५१ ॥

किमिति । शशः अङ्को यस्य स शशाङ्कः चन्द्रः तस्य बिम्बं मण्डलं तस्य या छाया शोभा तां मुष्णाति एतादृशस्य चन्द्रबिम्बकान्तितुल्यकान्तेरित्यर्थः । एतादृशस्य राजहंसस्य हंसविशेषस्य इयं चञ्चुः त्रोटिः 'चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्यमरः । प्रवाले विद्रुमे बद्धा नु नद्धा नु इति उत्प्रेक्षायाम् । गन्धेन उज्ज्वला ये केसराः किंजल्काः तेषां अग्राणि तेषां छेदेषु खण्डेषु सरसि अवनिपत इति सरोजानि कमलानि तेषां कान्तिः तेन तया दिग्धा नु लिप्ता नु सरोजेषु तेषां वासात् आरक्तसरोजानां ताम्रकान्त्या लिप्ता नु इत्युत्प्रेक्षाशयः । उत्प्रेक्षा प्रकारः । इन्द्रवज्रा वृत्तम् ॥ ५२ ॥

भृङ्गोऽयमिति । अयं पुरोवर्ती भृङ्गः भ्रमरः इन्दीवराणां नीलकमलानां यो मध्यः मध्यभागः तत्र यः पातः पतनं तेन मध्यपतनेन यानि संचारितानि गमनानि तेषां नीलकमलानां द्युतिः कान्तिः तया रञ्जितो नु रागविशिष्टः कृतो नु निरन्तरं नीलकमलेषु संचारात् तेषां कान्त्या रञ्जितो नु वा अथवा अयं भृङ्गः निजाः ये पक्षाः छदाः 'गरुत्पक्षच्छदाः पत्रं' इत्यमरः । तेषां शोभां कान्तिं इत्यर्थः निधाय स्थापयित्वा अतः एतेभ्यः इति अतः नीलकमलेभ्यः स्वादु मधुरं परागं कौसुमं रेणुं आदत्त नु अगृह्णात् नु । आङ्पूर्वात् डुदाञ् दाने इत्यस्माल्लङ् । अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणात् उत्प्रेक्षालंकारः इति केचित् । तदुपरि विमर्देहानिर्वाकार इत्यन्ये । उभयोः संकर इत्यपरे ॥ ५३ ॥

पद्मेति । पद्मा लक्ष्मीः 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः । पद्मानां कमलानां वनं समूहः तस्मिन् विभिन्नाः विदीर्णाः स्फुरिता इत्यर्थः । याश्च वीच्यः ऊर्मयः 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' । तासां ये कणाः लेशाः 'अवश्यायस्तु नीहारस्तुषारः' तुषारा इति यावत् तैः आर्द्रः क्लिन्नः अतएव द्रुतः प्रस्रवन् यो यावकः अलक्तकः 'यावोऽलक्तो द्रुमामयः' इत्यमरः । तस्य अङ्कः चिह्नं यस्य एतादृशं पदं चिरं बहुकालं चारुणो सुन्दरस्य भावः चारुता तया 'सुन्दरं रुचिरं चारु' इत्यमरः । सौन्दर्ये

यातो नु भृङ्गः पतितः पुरास्मिन् बीजत्वमेवं नु विरिञ्चिसृष्टिः ।
विपाकनीलद्युति पद्मबीजं कोशादुदस्येति कयाचिदूचे ॥ ५५ ॥
प्रियोऽपरस्या गलितान्तरीये व्यापारयामास दृशो नितम्बे ।
तद्धस्तयन्त्रच्युतवारिधारा नालं बभूवास्य मुखारविन्दे ॥ ५६ ॥
सायं समादाय निकामपीतसुप्तद्विरेफं मुकुलं सरोजम् ।
काचित्करास्फालितदीर्घदण्डा भर्तुर्भुवः कूजयति स्म कर्णे ॥ ५७ ॥

---

तया हेतुना 'हेतौ' इति तृतीया । लोभात् चक्रे नु पद्मवने पदं स्थापयामास इत्युत्प्रेक्षा इति पूर्वोक्तप्रकारेण कासां स्त्रीणां तत्र तेषु इति तत्र कमलेषु तर्कः वितर्कः आस अपि 'अपिः संभावनायां' इति तर्कः संभाव्यत इत्यर्थः 'गर्हा समुच्चयप्रश्नशंका सभावनास्वपि' इत्यमरः । अनुप्रासोत्प्रेक्षालङ्कारौ । इन्द्रवज्रावृत्त ॥ ५४ ॥

यात इति । पुरा पूर्वस्मिन्काले अस्मिन् नीलकमले पतितः गतः भृगः भ्रमरः बीजस्य भावः बीजत्वं यातो नु प्राप्तो नु । पक्षांतरमाह विपाकनीलद्युति- विपाकेन पक्वतया नीला नीलवर्णा द्युति. कांतिर्यस्य एतादृशं पद्मस्य कमलस्य बीजं कोशात् कुड्मलात् उदस्य निष्कास्य एवं कृष्णवर्णा विरिंचेः ब्रह्मणः कर्तरि षष्ठी सृष्टिः सर्जनं ब्रह्मकर्तृकसृष्टिरित्यर्थः । नु वितर्के इति एव प्रकारेण कयाचित् स्त्रिया ऊचे बभाषे ब्रूञ् व्यक्तायां वाचि भावे लिट् । भृगे कृष्णत्वं विलोक्य एव कस्याश्चिदुत्प्रेक्षा ॥ ५५ ॥

प्रिय इति । प्रियः दशरथः अपरस्याः स्त्रियाः गलित अधः पतितं अंतरीय उपसंव्यानं यस्मात् एतादृशे नितंबे तासां कटिपश्चाद्भागे 'पश्चान्नितंबः स्त्रीकट्याः' इत्यमरः । दृशौ दृष्टी व्यापारयामास स्थापयामासेत्यर्थः । तासां स्त्रीणां ये हस्ताः कराः तत्संबंधीनि यानि यन्त्राणि शृंगाख्यानि तेभ्यश्च्युता गलिता या वारिधारा उदकधारा सा अस्य दशरथस्य मुखमेव अरविंद अलं न बभूव पर्याप्ता न बभूव 'अलं भूषणपर्याप्तिशक्तिवारणवाचक' इत्यमरः । दशरथस्य दृष्टी कस्याश्चिद्गलितांतरीये निपेतनुः । अतः तस्य विमुखत्वात् इतरस्त्रीहस्तयन्त्रच्युतवारिधारा दशरथस्य मुखारविंदे पर्याप्ता न बभूव । अथवा यस्या नितंबे एतस्य दृष्टिः आसीत् तस्या विमुखत्वात् तद्धस्तयंत्रच्युतवारिधारा अस्य मुखारविंदे अलं न बभूव ॥ ५६ ॥

सायमिति । सायं सायंकाले 'सायं प्राग प्रगे प्रातः' इत्यमरः । पीतमस्ति येषां ते पीताः पाधातोः भावे क्तप्रत्ययः तस्मादर्शआदित्वान्मत्वर्थीयोच् । निकामं अत्यंतं पीताः निकामपीताः 'निकामेष्टं यथेप्सितं' इत्यमरः । आदौ निकामपीताः पश्चात् सुप्ताः निकामपीतसुप्ताः 'पीतप्रतिपद्वेतिवत्' 'पूर्वकालैकेति समासः निकामपीतसुप्ताः द्विरेफाः भ्रमराः यस्मिन् । भ्रमरेषु द्विरेफत्वं तु भ्रमर-

सा पद्मिनी पद्मविलोचनेभ्यो याते पतङ्गे विससर्ज भृङ्गान् ।
समुच्छ्वसत्कौमुदगन्धलुब्धान् स्थूलानिवोढाञ्जनबाष्पबिन्दून् ॥५८॥
नूनं पती वासरजङ्गमानां पर्यायविश्रामपरार्थतन्त्रौ ।
एकत्र मज्जत्यधिवारि सिन्धोरन्यो जहौ तत्कमलाकराम्भः ॥५९॥

---

पदवाच्यत्वेन लक्षितलक्षणया बोध्यं एतादृशं मुकुलं कुड्मलरूपं सरोजं कमलं समादाय गृहीत्वा करेण हस्तेन आस्फालितः दीर्घः आयतः दण्डो यया एतादृशी काचित् स्त्री भुवः पृथ्व्याः भर्तुः बिभर्तीति भर्ता पालयिता तस्य दशरथस्येत्यर्थः । डुभृञ् धारणपोषणयोः तृच् । करणे कण श्रोत्रे 'कर्णशब्दग्रहौ श्रोत्रं' इत्यमरः । पूजयतिस्म धन्यतिस्म कृञ् अव्यक्ते शब्दे 'लट् स्मे' इत्यनेन भूते लट् । अनुप्रासालङ्कारः । इन्द्रवज्रावृत्तं ॥ ५७ ॥

सेति । सा प्रसिद्धा पद्मानि सन्ति यस्याः सा पद्मिनी कमलिनी पतङ्गे सूर्ये 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । याते गते अस्तंगते सतीत्यर्थः पद्मान्येव विलोचनानि नयनानि तेभ्यः समुच्छ्वसतीति सर्वेन प्रसरति इति समुच्छ्वसन् एतादृशो यः कुमुदस्य अयं कौमुदः 'तस्येदमित्यण्' कौमुदो यो गन्धः कौमुदगन्धः समुच्छ्वसंश्च कौमुदगन्धः तस्मिन् लुब्धान् एतादृशान् भृङ्गान् स्थूलान् बृहतः ऊढं धृतं अञ्जनं कज्जलं यैः ते ऊढाञ्जनाः एतादृशा ये बाष्पाणां नेत्रोदकानां बिन्दवः पृषताः तानिव विससर्ज उदस्याक्षीदित्यर्थः । उपमालङ्कारः ॥५८॥

नूनमिति । गच्छन्ति तच्छीलाः इति जङ्गमाः गमधातोर्यङन्तात् अचि 'यङोऽचि चेति' लुक् । वासरा दिवसा जङ्गमाः जगत् 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः । तेषां पती स्वामिनौ 'ईश्वरः पतिरीशिता' इत्यमरः । नूनं निश्चयेन विश्रामः विश्रान्तिः परेषां अर्थः प्रयोजनं परार्थः 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । विश्रामशब्दविषये प्राग्व्याख्यातं तत एव द्रष्टव्यं पर्यायेण अनुक्रमेण विश्रामपरार्थौ तन्त्रं प्रधानं ययोस्तौ पर्यायविश्रामपरार्थतन्त्रौ स्तः इति शेषः तदेव दर्शयति । एकत्रेति । एकस्मिन्नित्येकत्र एकशब्दात् 'सप्तम्यास्त्रल्' इत्यनेन त्रल् एकत्र एकस्मिन् सूर्य इत्यर्थः । सिन्धोः समुद्रस्य अधिवारि वारिणि इत्यधिवारि विभक्त्यर्थेऽव्ययीभावः । मज्जतीति मज्जन् तस्मिन् निमज्जति सतीत्यर्थः । अन्यः जङ्गमपतिः दशरथः तत् उपकारं कमलाकरस्य अम्भः उदकं जहौ तत्याज । उत्प्रेक्षालङ्कारः ॥ ५९ ॥

सरोजिनीति । निद्रया आनन आक्रान्तं व्याप्तमिति यावत् एतादृशं यदम्भोजं कमलं अत्र निद्राशब्देन मुकुलितं गृह्यते । निद्राकुलाम्भोजमेव निमीलिताक्षि यस्याः सा बहुव्रीहौ 'सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः 'षित्त्वान्ङीष्' । पक्षे निद्रया आक्रान्ताम्भोजमिव निमीलिताक्षि यस्याः सा रुग्णा भुग्ना 'रुग्णं भुग्ने' इत्यमरः । मृणालीना बिसाना 'मृणालं नलदे क्लीबे स्त्रीनपुंसकयोर्बिसे' इति मेदिनी । वलयं मण्डलं । स्त्री

सरोजिनी तत्परिभुक्तमुक्ता मूर्च्छातुरेव स्तिमिता विरेजे।
निद्राहृताम्भोजनिमीलिताक्षी रुग्णं मृणालीवलयं दधाना ॥ ६० ॥
कृतोपकारस्य निधाय जग्मुर्द्वयं द्वयोरम्बुरुहाकरस्य।
भृङ्गावलीष्वञ्जनमायताक्ष्यः पद्मेषु दन्तच्छदयावकञ्च ॥ ६१ ॥
सरः सहंसं सह कामिनीभिर्विहाय तुल्यो वृषवाहनस्य।
विभूषितो लम्भितभूपजानिरध्यास्त सौधं वसुधाधिनाथः॥ ६२॥

---

आकृष्टदृष्टिर्नगनस्य लक्ष्म्या लक्ष्मीभुजा वासरसन्धिभाजः।
काचित्कुचानम्रतनुर्बभाषे बाला सवालव्यजनैकपाणिः॥ ६३॥
सकुङ्कुमश्रीकुचमण्डलद्युतिः प्रवासिनां चेतसि चिन्तयातुरे।
निधाय तापं तपनः पतत्यसौ विलोलवीच्यावपरान्तसागरे॥६४॥
इयं तनुर्वासरसन्धिचारिणी जगत्सृजो विद्रुमभङ्गलोहिनी।
समं विधत्ते मुकुलं सरोरुहैर्हिरण्यबाहोरपि हस्तपङ्कजम्॥ ६५॥

---

आशाशस्य लक्ष्म्या शोभया आकृष्टा स्वनिकटं प्रापिता दृष्टिः नेत्रं यस्याः कुचाभ्यां स्तनाभ्यां आनम्रा ईषन्नता तनुः देहो यस्याः वालानां केशानां व्यजनेन तालवृन्तेन सहितः सवालव्यजनः सप्रकीर्णक इत्यर्थः। एकश्चासौ पाणिः 'पूर्वकालैकेति समासः' सवालव्यजनः एकपाणिर्यस्या सा एतादृशी काचित् बाला स्त्री लक्ष्मीं राज्यलक्ष्मीं भुनक्ति पालयतीति लक्ष्मीभुक् लक्ष्मीशब्दोपपदे भुजधातोः क्विप् तेन लक्ष्मीभुजा दशरथेन बभाषे ऊचे कर्मणि लिट्। अनुप्रासालंकारः। इंद्रवज्रा वृत्तम्॥ ६३॥

पूर्वश्लोके काचित् स्त्री राज्ञा ऊचे इत्युक्तं किमूचे तदाह। सकुङ्कुमेति कुङ्कुमेन घुसृणेन सहितौ सकुङ्कुमौ एतादृशौ यौ श्रीकुचौ तयोर्यन्मंडलं चक्रवालं तद्वद्द्युतिः कांतिः यस्य एतादृशः असौ पुरोवर्ती तपनः सूर्यः 'तपनः सवितारविः' इत्यमरः। प्रवसंति तच्छीलाः प्रवासिनः तेषां प्रोषितानामित्यर्थः। सुप्यजातौ णिनिस्ताच्छील्य इति णिनिः चिंतया प्रियाविरहजन्ययेत्यर्थः। आतुरे दीने चेतसि अंतःकरणे तापं पीडां ईदृक्सूर्यदर्शनेन तत्सदृशकुंकुमांकितनायिकाकुचस्मरणेन प्रवासिनां नायकानां तापो भवतीति कविसंप्रदायप्रसिद्धमिदं। निधाय स्थापयित्वा विलोलाः चंचलाः वीचयः ऊर्मयो यस्मिन् एतादृशे अपरस्याः पश्चिमस्याः अवसानं तत्संबंधी यः सागरः समुद्रः तस्मिन् पतति अस्तं गच्छतीत्यर्थः। कश्चन दुर्जनः सज्जनहृदयानि तापयन्नेव स्वयं म्रियते तद्वदयमिति ध्वनिः। अनुप्रासालंकारः॥ ६४॥

इयमिति। वासरसंधिचारिणी वासरस्य दिवसस्य 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः। यः संधिः अपरात्रेः दिवसस्य च संधिः इत्यर्थः। तत्र चरति गच्छतीति वासरसंधिचारिणी 'सुप्यजाताविति णिनिः' विद्रुमाणां प्रवालानां यो भंगः छेदः तद्वल्लोहिनी रक्ता लोहिनीत्यत्र 'वर्णादनुदात्तात्तोपधात्तो नः' इत्यनेन ङीपि तकारस्य नकारः। उपमानानि सामान्यवचनैरिति समासः। पक्षे विद्रुमभंगैः प्रवालखंडैः हेतुभिः लोहिनी आरक्ता अतिशयरक्तत्वात् सर्वांगेषु प्रवालधारिणीत्यर्थः। एतादृशी जगत् सृजतीति जगत्सृज् तस्य जगत्सृजः परमात्मनः तनुः मूर्तिः सूर्यरूपा इत्यर्थः। सूर्यस्य परमात्ममूर्तित्वं तु 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुतेः। जगत्सृज इत्यत्र 'क्विप् चेति क्विप्।

अयं प्रमाणं पयसः पयोनिधौ निमज्य सन्दर्शयतीव भानुमान् ।
करेण वीचीवलयस्य मस्तके विभाव्यमानस्फुरिताग्रकोटिना ॥६६
विकीर्णसन्ध्यारुणितं शतक्रतोर्दिशः प्रदेशादभिनिष्पतत्तमः ।
पतङ्गतेजःपरितापलोहितं जगत्क्रमेण व्रजतीव निर्वृतिम् ॥ ६७ ॥

---

सरसि रोहन्तीति सरोरुहाणि मूलविभुजादित्वात्कः कमलानि तैः सम सह 'सहयुक्तेऽप्रधाने' इति तृतीया हिरण्यबाहोरपि ' नमोहिरण्यबाहवे ' इति मन्त्रलिंगात् शिवस्यापि पक्षे हिरण्य सुवर्णं बाह्वोः भुजयोर्यस्य एतादृशस्य धनिकस्यापीत्यर्थः । हस्तपङ्कजं हस्तावेव पङ्कजं कमलं जातित्वादेकवचनं मुकुलं कुड्मलं विधत्ते करोति । विपूर्वाद्दधातेर्लट् शपः श्लौ द्वित्वं । अस्तकाले सूर्यस्य आरक्तवर्णत्वं स्पष्टमेव। सूर्यास्तसमये यथा सरोरुहाणि मुकुलीभवति । एवं शिवादीनामपि हस्ता उपस्थानार्थं मुकुलीभवतीत्यर्थः । अथ च अंगेषु प्रवालधारणकर्त्री हिरण्यधारणकर्तुः हस्तौ मुकुलीकरोतीत्यपि ध्वन्यते । सहोक्त्यलंकारोऽनुप्रासश्च । वशस्थ वृत्तम् ॥ ६५ ॥

' अयमिति । अयं पुरोवर्ती भानवः किरणाः नित्यं सति यस्य स भानुमान् नित्ययोगे मतुप् ' भानुः करो मरीचिः स्त्री ' इत्यमरः । पयसां उदकानां निधिः शेवधि. तस्मिन् समुद्रे निमज्य विलीनो भूत्वा वीचीनां ऊर्मीणां वलयं कंकणं तस्य वीचीसमूहस्येत्यर्थः । मस्तके उपरिभागे विभाव्यमानं सदृश्यमानं स्फुरितं स्फुरणं यस्यां विभाव्यमानस्फुरिता अग्रकोटिः अग्राश्रियस्य ' स्त्रियः पाल्यश्रिकोटयः ' इत्यमरः । एतादृशेन करेण किरणेन जातित्वादेकवचनं अथ च हस्तेन पयसः उदकस्य प्रमाणं इयत्ता यद्यपि 'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ' इत्युक्तेः । प्रमाणशब्दः आयामवाच्येव प्रसिद्धः तथापि ' प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतो मम ' इति प्रमाणे द्वयसजिति सूत्रस्थभाष्यप्रमाणेन ऊर्ध्वमानेऽपि प्रमाणशब्दो वर्तत एव इति ज्ञेयं । सदर्शयतीव बोधयतीव । यथा जलप्रमाणं दिदर्शयिषुः कश्चित्पुरुषः जले निमज्ज्य उपरि करं कृत्वा प्रमाणं प्रदर्शयति तद्वत्सूर्योऽपि जले निमज्य वीच्युपरी स्फुरितकिरणेन जलप्रमाणं दर्शयतीव इति श्लेषानुप्राणितो उत्प्रेक्षालंकारः । वंशस्थ वृत्तम् ॥ ६६ ॥

विकीर्ण इति । शतं क्रतवो यज्ञाः यस्य स शतक्रतुः इन्द्रः तस्य शतसंख्याकयज्ञकर्ता इन्द्रो भवति ' शतमन्युर्दिवस्पतिः ' इत्यमरः । दिशः काष्ठायाः प्रदेशात् प्रांतभागात् अभितः निष्पततीति अभिनिष्पतत् अभिनिष्पतत् तमः अंधकारो यस्य एतादृश विकीर्णो सर्वतः प्रसृता या सध्या पितृप्रसूः ' सायसंध्या पितृप्रसूः' ।। । तया अरुणितं आरक्तीकृतं ततः पतगस्य सूर्यस्य यत्तेज तस्य यः तेन लोहितं रक्तं यज्जगत् विष्टपं तत् क्रमेण अनुक्रमेण निर्वृतिं सौख्यं

हिमांशुबिम्बे पुरुहूतदिङ्मुखस्मितश्रियं बिभ्रति कोमलद्युतौ ।
विसृज्यमानं तमसा नभस्तलं जहाति निर्मोकमिवाञ्जनत्विषा ॥६८॥
अथैवमस्यावसरे वचःश्रियः समीक्ष्य निष्ठामुपनीतमास्थया ।
अपाययन्त प्रमदा मदालसाः स्खलद्गिरास्तं मधु लम्भितादराः ॥६९॥
प्रियोपनीतं पिबतोऽधिवासितं नृपस्य गण्डूषमधु प्रकामतः ।
बभूव दन्तच्छदपल्लवस्तदा निपीतपानावसरोपदंशकः ॥ ७० ॥

---

अथ निर्वृतिः । मोक्षे पुष्टौ सुखे सौस्थ्ये ' इति हैमः । व्रजतीव गच्छतीव । जगतः तमसा यत् दौःस्थ्य प्राप्त तत् सध्यारुणिम्ना सूर्यतेजसा च सुस्थत्व प्राप्नोतीत्युत्प्रेक्षालङ्कारः । वंशस्थ वृत्त ॥ ६७ ॥

हिमांश्विति । कोमला मृदुला द्युतिः कांतिर्यस्य एतादृशे हिमाः शीतला अंशवः किरणा यस्य ' हिमांशुश्चंद्रमाश्चंद्र ' इत्यमरः । तस्य यो बिंबः मंडल ' बिंबोऽस्त्री मंडल त्रिषु ' इत्यमरः । तस्मिन् पुरुहूतस्य या दिक् दिशा पूर्वा ' पुरुहूतः पुरंदरः ' इत्यमरः । तस्याः मुख वक्त्र तत्संबधि यत् स्मित मंदहासः तस्य श्रीः शोभा तां बिभर्तीति बिभ्रत् बिभर्तेः लटः शत्रादेशः शपः श्लौ द्विर्त्वं बिभ्रति धारयति सति अंजन कज्जल तद्वत् त्विट् कांतिर्यस्य एतादृशेन तमसा अंधकारेण विसृज्यते तत् विसृज्यमान एतादृश नभसः आकाशस्य तल नभस्तल तत् निर्मोकमिव सर्पकंचुकमिव ' निर्मोको व्योम्नि सन्नाहे मोक्षके सर्पकंचुके ' इति हैमः । जहाति त्यजति । अत्र अर्थात् तम इति कर्म ज्ञेय । चंद्रोदये सति नभस्तल निर्मोकमिव अंधकारं जहातीत्यर्थः । उपमालङ्कारः वंशस्थ वृत्तम् ॥ ६८ ॥

अथेति । चंद्रोदये सतीत्यर्थ. । अस्य दशरथस्य वचसः भाषणस्य श्रीः संपत्तिः तस्या. अवसरे प्रस्तावे ' प्रस्तावः स्यादवसर' ' इत्यमर । दशरथे भाषमाणे सतीत्यर्थः । आस्थया यत्नेन ' आस्थानीयत्नयोरास्था ' इत्यमरः । निष्ठां निष्पत्तिं ' निष्ठा निष्पत्तिनाशांता ' इत्यमरः । उपनीत प्रापितं भृत्यादिभिरिति शेषः । एतादृशो मधु मद्य ' मधुमद्ये पुष्परसे ' इत्यमरः । समीक्ष्य मदेन मधुमदेन अलसाः अत एव स्खलद्गिरा स्खलंतीति स्खलन्त्यः सचलन्त्यः गिराः वाण्यो यासां ताः गिरशब्दात् वाचा निशा दिशा इतिवत् भागुरिमतेन टाप् लम्भितः कृतः आदरः सत्कारो याभिः एतादृश्यः प्रमदाः स्त्रियः त दशरथ अपाययन् । अत्र पाधातोः भक्षणार्थत्वात् गतिबुद्धीति सूत्रेण द्विकर्मकत्व निगरणचलनेति प्राप्तं परस्मैपद ' नपादम्येति निषेधात्र भवति' । वंशस्थ वृत्तम् ॥ ६९ ॥

प्रियोपनीतमिति । प्रियया पत्न्या उपनीतं समीपमानीत अधिवासितं वासितं सुगंधितं एतादृशो गण्डूषस्य मुखचुलकस्य मधपि मधु मद्य प्रकामस्य प्रकामः प्राचुर्यमाप प्रकामेन इति प्रकामतः आद्यादित्वात्तृतीयार्थे तसिः

प्रियेण पश्वा मधु लासितोत्पलं विपक्षगोत्रेण निगद्य लम्भितम् ।
अपीतमप्यक्षि विधाय रागवत्ततान सद्यः श्रमवारि गण्डयोः ॥७१॥
त्विषा मुखेन्दोर्मुकुलत्वमम्बुजे करेण नीते सति शार्वरीकृतः ।
प्रियेक्षणस्य प्रतिबिम्बमाचरत् सरोजकृत्यं मधुभाजि भाजने॥७२॥
पियासुना पङ्कजगर्भसौरभं मुखं तदीयं प्रतिबिम्बमूर्तिना ।
ससम्भ्रमेणेव तरङ्गितासवे मुहुश्चकम्पे चषके हिमांशुना ॥ ७३ ॥

---

पिबतीति पिबन् पापाने लटः शत्रादेशः पाघ्राध्मेति पिबादेशः तस्य दशरथस्य तदा तस्मिन् काले प्रियागण्डूपमद्यपानावसरे दतच्छद एव ओष्ठ एव पल्लवः किसलय निपीत अर्थात् प्रिया प्राशित तस्य यत्पानं प्राशन तस्य अवसरः प्रस्तावः तस्य उपदशकः अवदंशः 'उपदंशोवदंशः स्यान्मेहनामययोरपि' इति हैमः । भोजनकाले रुच्युत्पादनार्थं यत्सदश्यते स उपदंशः (तोंडी लावणें) बभूव आसेत्यर्थः । वंशस्थ वृत्तम् ॥ ७० ॥

प्रियेणेति । प्रियेण दशरथेन विपक्षस्य शत्रोः गोत्र नाम तेन 'द्विड्विपक्षाहिते' इत्यमरः 'गोत्रं कुलाख्ययोः' इति मेदिनी । सपत्नीनाम्ना इत्यर्थः प्रकृत्यादित्वात्तृतीया । निगद्य भाषित्वा लम्भित प्रापित लासित नर्तितं उत्पल कमल यस्मिन् एतादृशं मधु मद्यं भ्रमात् कौतुकाद्वा सपत्नीनाम्ना आहूय समर्पितं कमलगुम्भित मद्य यतृ अपीतमपि अप्राशितमपि अर्थाभायिकया वध्वाः प्रियाः अक्षि नेत्रं रागः रक्तिमा अस्ति यस्मिन् तद्रागवत् रक्तमित्यर्थः । विधाय कृत्वा गंडयोः कपोलयोः श्रमस्य खेदस्य संबंधि वारि उदकं ततान विस्तारयामास । तनु विस्तारे लिट् । सपत्नीनामकथनपूर्वकं अर्पितं मद्यं अतः क्रोधवशान्नेत्रं आरक्तं जातं तथा गंडस्थलयोः खेदात् घर्मोदकमुत्पन्नमित्यर्थः । वंशस्थ वृत्तम् ॥ ७१ ॥

विलासवत्यो मदघूर्णलोचना निरूपयन्त्यः शुचिरूप्यभाजने।
स्थितस्य मुग्धा मधुनो न जज्ञिरे स्वरूपमिन्दुप्रतिरूपगोपितम् ७४
विधूय मानादपि पूर्वमासवः प्रवृद्धवामत्वमनन्यसाधितम्।
स्मरं नु तासां हृदये विलोचने बबन्ध रागं नु मुखे नु सौरभम् ७५

---

सुरभेः भावः सौरभ इगंताच्च लघुपूर्वादित्यनेन भावे अण् पंकजगर्भवत् सौरभं सुगन्धो यस्य एतादृश। तस्याः नायिकायाः इदं तदीयं 'त्यदादीनि च' इति वृद्धसंज्ञायां वृद्धाच्छः' तद्धि छप्रत्ययः। मुखं वक्त्रं यियासुना यातुमिच्छुः यियासुः यातेः सनंतात् 'सनाशंसभिक्षउः' इति उप्रत्ययः। तेन प्रतिबिंबं मूर्तिः स्वरूपं यस्य एतादृशेन मन्मथेन मदनेन सहितः समन्मथः तेन समदनेनेव हिमांशुना चद्रेण 'हेमांशुश्चंद्रमाश्चंद्र' इत्यमरः। तरंगाः सजाता अस्य तरंगितः तारकादित्वादितच् तरंगितः आसवो मद्यं यस्मिन् एतादृशे चषके पानपात्रे 'चषको ऽस्त्री पानपात्रं' इत्यमरः। मुहुः वारंवार चकंपे विवेपे इत्यर्थः। कंपधातोः भावे लिट्। यथा कश्चित्कामी नायिकामुखगंधलोभात् तत्संबंधाभिलाषिको भवति तद्वत् चंद्रमाः सकाम इव नायिकामुखसौरभ जिघृक्षुः प्रतिबिंबरूपेण भाजनगतमद्यतरंगेषु कंपते इत्यर्थः। मद्ये प्रवेशे सति तत्पानद्वारा मुखसौरभसुलभ इति तात्पर्यं। उत्प्रेक्षालंकारः। वंशस्थ वृत्तम्॥ ७३॥

विलासवत्य इति। मदेन घूर्णानि भ्रांतानि लोचनानि नयनानि यासां ताः एतादृश्यः शुचिरूप्यभाजने शुचि निर्मलं एतादृशं यत् रूप्यस्य रजतस्य भाजनं पात्रं तस्मिन् निरूपयंति पश्यंति इति निरूपयंत्यः मुग्धाः मूर्खाः विचाराकुशला इत्यर्थः। एतादृश्यः विलासः क्रीडा अस्ति यासां ता विलासवत्यः स्त्रियः स्थितस्य मधुनः मद्यस्य इंदोः चंद्रस्य यत्प्रतिरूपं प्रतिबिंबं तेन गोपितं आच्छन्नं स्वरूपं निरूपयंति पश्यति इति निरूपयंत्यः स्त्रियः न जज्ञिरे न ज्ञातवन्त्यः। 'अनुपसर्गात्' इत्यात्मनेपदं रूप्यभाजनस्य मद्यस्य चंद्रप्रतिबिंबस्य च अवदातत्वात् मद्यस्वरूपं न ज्ञातवन्त्य इत्यर्थः। सामान्यालंकारः 'सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते' इति। वंशस्थ वृत्तम्॥ ७४॥

विधूयेति। आसवः मैरेयं 'मैरेयमासवः सीधु' इत्यमरः। अन्येन इतरेण हेतुना साधितं निष्पादितं अन्यसाधितं न भवतीति अनन्यसाधितं स्वतःसिद्धमित्यर्थः। मानात् परिमाणात् 'पंचमी विभक्ते' इत्यनेन पंचमी वामस्य प्रतीपस्य भावः वामत्वं 'वामं वल्गुप्रतीपौ द्वौ' इत्यमरः। प्रवृद्धं वृद्धिंगतं यद्वामत्वं तत् पूर्वं मद्यमानात्स्त्रैणपनादिक्रियासाध्यया पूर्वं विधूय प्रकंप्य दूरीकृत्येत्यर्थः प्रमाणापेक्षया अधिकं प्रवृद्धं यत् प्रातिकूल्यं तत् पूर्वं विधूयेत्यर्थः। तासां स्त्रीणां हृदये चित्ते 'चित्तं तु चेतो हृदयं' इत्यमरः। स्मरं मदनं बबंध नु ननाद नु। विलोचने नेत्रे रागं रक्तिमानं बबंध नु मुखे वक्त्रे सुरभेः भावः सौरभं सुगंधित्व

इति प्रबन्धाहितपानकातरं प्रियाङ्कतल्पे शयितं निशात्यये ।
व्यबोधयन्मङ्गलवन्ति वन्दिनो विधाय वाक्यानि विधातृतेजसम् ॥ ७६ ॥

जहिहि शयनमुद्गमस्य कालः समुपनमत्यनुरक्तमण्डलस्य ।
भुवनशिरसि कीर्णपादधाम्नो भवत इव क्षततामसस्य भानोः ॥ ७७ ॥

विरामः शर्वर्या हिमरुचिरवासोऽस्तशिखरं
किमद्यापि स्वापस्तव मुकुलिताम्भोरुहदृशः ।
इतीवायं भानुः प्रमदवनपर्यन्तसरसीं
करेणाताम्रेण प्रहरति विबोधाय तरुणः ॥ ७८ ॥

---

बबध नु । मद्यपानं स्वाभाविक कौटिल्य दूरीकृत्य तासां हृदये मदन नेत्रे राग मुखे सौरभ उत्पादयामास किमित्यर्थः । उत्प्रेक्षालङ्कारः । वंशस्थवृत्तम् ॥७५॥

इतीति । इति पूर्वोक्तप्रकारेण प्रबन्धेन सातत्येन आहित कृत यत्पान आसवादि॰प्राशन तेन यः कातरः आकुलः ' अधीरे कातरः ' इत्यमरः । अतएव प्रियाया अङ्कः उत्सङ्गः ' उत्सङ्गचिन्हयोरङ्क॰ ' इत्यमरः । स एव तल्प शय्या ' तल्प शय्याट्टदारेत्यमरः ' । तस्मिन् शयित सुप्त विधातृतेजस विधाता ब्रह्मा स एव तेजो यस्य एतादृश स्वामिन इति शेष. बन्दिन स्तुतिपाठकाः ' बंदिनस्तुतिपाठका.' इत्यमरः । निशायाः रात्र्याः अत्यय॰ नाशः उपसीन्यर्थ मङ्गलानि भद्राणि सति येषु तानि मङ्गलवति एतादृशानि वाक्यानि सुप् तिङ्न्तचयान् ' सुप्तिङन्तचयो वाक्य ' इत्यमरः । विधाय कृत्वा मङ्गलवाक्यानि प्रयुज्येत्यर्थः व्यबोधयन् जागरयांबभूवुरित्यर्थः । उपमालङ्कारो रूपक च वंशस्थवृत्तम् ॥७६॥

पूर्वश्लोके बन्दिनः मङ्गलवाक्यान्युच्चार्य दशरथ व्यबोधयन् इत्युक्त कानि तानि मङ्गलवाक्यानि इत्यपेक्षायामाह । जहिहीति । हे राजन् इति संबोधन अध्याह्रियते शयन स्वापं ' स्यान्निद्राशयन स्वाप ' इत्यमर. । जहिहि त्यजेत्यर्थः ओहाक् त्यागे लोट् शपः श्लौ द्वित्वे जहातेश्च इति इत्व अनुरक्त स्निग्ध मण्डल राष्ट्र यस्य ' स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च ' इति विश्व । सूर्यपक्षे आरक्तबिम्बस्य भुवनस्य विष्टपस्य शिरसि मस्तके कीर्ण पाद इव धाम प्रभावो येन पक्षे कीर्ण पादानां रश्मीनां धाम तेजो येन ' पादारश्म्यङ्घ्रितुर्यांशा.' इत्यमरः। गृहदेहत्विट् प्रभावा धामानि ' इत्यमर । क्षता नाशिताः तामसाः तमोगुणविशिष्टा पुरुषा येन पक्षे नाशितान्धकारसमूहस्य एतादृशस्य भवत इव भानोः सूर्यस्य ' भानुर्हंसः सहस्रांशुः ' इत्यमरः । उद्गमस्य उदयस्य काल. समयः समुपनमति प्राप्नोतीत्यर्थः । ' वर्तमानसामीप्ये वर्तमानवद्वा ' इत्यनेन वर्तमानसमीपे भूते लट् । सर्गान्त्यादिमं वृत्तं पुष्पिताग्राख्यं तदुक्त ' अयुजिनयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ' इति ॥ ७७ ॥

विराम इति । शर्वर्याः रात्र्याः 'त्रियामा क्षणदा क्षपा शर्वरी' इत्यमरः । विरामः समाप्तिः

समुत्तिष्ठन्त्येते निगडकृतझङ्कारमपरं
दानैराकर्षन्तः करटतटलीनालिविततीः।
निरस्यन्तो हेलाविधुतपृथुकर्णान्तपवनै-
र्द्विपास्ते दन्ताग्रस्थितकरमुदस्याननतटम् ॥ ७९ ॥
पादेनैकेन तिष्ठन् पटुपटहरवैर्बोधितस्ते मयूरः
पश्चात्पक्षेण सार्द्धं चिरशयनगुरुं पादमन्यं वितत्य।
उत्फुल्लोद्धूतपक्षच्युतहिमकणिकावृष्टिरायासयत्यां
दृष्ट्वा मार्तण्डधामोदयमुदितमुदोज्जृम्भते ताण्डवार्थी ॥ ८० ॥

---

जात इति शेषः हिमा तुहिना रुचिः तेजो यस्य स हिमरुचिः चद्रः अस्तस्य अस्ताचलस्य शिखर सानु अवाप्तः प्राप्तः चद्रः अस्तगत इत्यर्थः। मुकुलाः कुड्मलाः सजाता येषां तानि मुकुलितानि तारकादित्वादितच् प्रत्ययः मुकुलितानि यानि अंभोरुहाणि कमलानि तान्येव दृशः दृष्टयो यस्याः पक्षे मुकुलितकमलवत् एतादृश्यास्तव अद्यापि राज्यवसानेपीत्यर्थः। इति एवप्रकारेण अय पुरोवर्ती तरुणः नूतनोरित. अथच युवा पक्षे तरुणः भानुः सूर्यः प्रमदवन राजांतःपुरवन 'एतदेवप्रमदवनमतः पुरोचित' इत्यमरः। तस्य यः पर्यंतः प्रांतभागः तत्संबंधी सरसी सरोवर ईषत्ताम्रः आताम्रः तेन प्रादिसमासः ईषद्रक्तेनेत्यर्थः करेण किरणेन पक्षे हस्तेन प्रहरति इव स्पृशति इव पक्षे प्रहार करोतीवेत्यर्थ। समासोक्त्युत्प्रेक्षालकारौ। शिखरिणीवृत्त 'रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात् ॥ ७८ ॥

समुत्तिष्ठंतीति। एते पुरोवर्तिनः दतयोरग्रे दताग्रे तयोः स्थितः विद्यमानः करः शुडा यस्य एतादृश आननस्य मुखस्य तट प्रांत उदस्य उत्क्षिप्य ऊर्ध्वं कृत्वेत्यर्थः निगडेन बधनेन कृतः झंकारो येन एतादृश अपर पश्चिम अर्थात्पाद दानै मद यथास्यात्तथा आकर्षतः आकर्षनीति आकर्षंतः हेलया लीलया विधुता. कंपिताः ये पृथुकर्णाः विस्तीर्णकर्णा. तेषां ये अंता प्रांतभागाः तत्संबंधिनो ये पवना वायवः तै करणभूतैः करटानां गंडस्थलानां तटेषु लीनाः स्थिता इत्यर्थः। ये अलयः भ्रमराः तेषां वितती: पक्तीः निरस्यति क्षिपति इति निरस्यतः निरसोर्दसुक्षेपणे इत्यस्मात् लटः शत्रादेशः एतादृशः ते तव द्विपाः द्वाभ्यां मुखाभ्यां पिबतीति द्विपाः हस्तिनः 'सुपीति योगविभागात्कप्रत्ययः' समुत्तिष्ठंति अत्र ऊर्ध्वकर्म त्वात् 'उदोनूर्ध्वकर्मणि' इत्यात्मनेपद न स्वभावोक्त्यलकारः 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्यवर्णन' इति लक्षणात्। शिखरिणी०॥७९॥

पादेनेति। ते पटवः मधुराः ये पटहरवाः आनकरवाः 'आनकः पटहो भेर्यस्त्री' इत्यमरः। तैः बोधितः जागरितः अतएव एकेन पादेन चरणेन तिष्ठतीति तिष्ठन् ष्ठाधातो लटः शत्रादेशः तिष्ठादेशश्च पश्चात् पश्चाद्भागस्थेने-

पूर्वाद्रौ सूर्यपादे चरति विसृजता चन्द्रपादावशातं
तल्पं तेनानुचक्रे मलयतरुरसामोदितांसद्वयेन।
उन्निद्रश्वेतपद्मप्रकरपरिकरच्छन्नवीचीवितानाद्-
दुच्चन्मन्दं सरस्तः सलिलगुरुबृहत्पक्षतिर्मल्लिकाक्षः ॥ ८१ ॥

इति कुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
उद्यानक्रीडावर्णनो नाम तृतीयः सर्गः ॥

---

त्यर्थः पक्षेण गरुता 'गरुत्पक्षच्छदाः पत्रेत्यमरः' सार्धं सह चिर यच्छयन तेन गुरु जड अन्य इतर पाद चरणं वितत्य विस्तीर्य उत्फुल्लः विकसितः अतएव उद्धूतः यः पक्ष तस्माच्च्युता गलिता हिमस्य तुषारस्य या कणिकाः स्वल्पकणाः तासां वृष्टिः वर्षेण यस्य एतादृशः मयूरः शिखी आजस्रयस्यां इति भावाधा अधिकरणे घञ् सा चासौ यष्टिश्च पुंवत्कर्मधारयजातीयदेशीयेति पुंवद्भावः तस्यां ताण्डव नृत्यमेव अर्थः सोऽस्यास्तीति अथवा ताण्डव अर्थयति इति णिनिप्रत्ययः एतादृशः सन् मार्तण्डस्य सूर्यस्य यद्धाम तेज मण्डल वा तस्य उदय आविर्भाव दृष्ट्वा विलोक्य उदिता उत्पन्ना या मुत् हर्षः 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः। तया उज्जृम्भते गात्रविनाम करोतीत्यर्थः जभी जृभि गात्रविनामे लट्। स्वभावोक्त्यलङ्कारः। अत्र मार्तण्डधामोदय दृष्ट्वा इत्यनेन अभिमन्युगौरवपुत्रस्य तक्षेपेण सूचन तथाहि मार्तण्डः सूर्यः तस्य धाम देहः 'गृहदेहत्विट्प्रभावाधामानि' इत्युक्तेः। तस्य उदयः उद्गमने अर्थात् पुत्रपौत्रादिसंततौ गमनं एवं च दशरथपर्यंत समागतस्य सूर्यवंशस्य रामादिरूपेण अभिगमनमिति यावत्। रामादि पुत्राणामुत्पत्तिरिति तु निष्कर्षः। पुत्रादिद्वारा अभिमर्त्यतो पितामहशरीरोद्गमन दायविभागप्रकरणे धर्मशास्त्रग्रन्थेषु प्रसिद्ध तत एव सम्यग् इति दिक्। स्रग्धरावृत्तं 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयं' ॥ ८० ॥

तपस्या यज्वा इति तपपोयज्ञादेशः एतादृशेन तेन दशरथेन उन्निद्राणि विकसितानि यानि श्वेतपद्मानि शुभ्रकमलानि तेषां प्रकराः कीर्णाः व्याप्ता इत्यर्थः 'प्रकरः कीर्णे पुष्पादौ सहतौ' इति हैमः। ये परिकराः समूहाः 'भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः' इति विश्वः। तैः छन्नं अपवारितं वीचीनां उर्मीणां वितान उल्लोचो यस्मिन् 'अस्त्री वितानमुल्लोचो' इत्यमरः। एतादृशात् सरसः इति सरस्तः आद्यादित्वात्पञ्चम्यंतात्तसिः मंद शनैः यथास्यात्तथा उदेति इति उद्यन् उत्पूर्वकात् इण्धातोः लटः शत्रादेशः 'इणो यण्' इति यण् सलिलेन उदकेन गुर्वी जडा बृहती पक्षतिः पक्षमूल यस्य 'पुंवद्भावः' 'पक्षात्तिः' इति मूल्यर्थेति प्रत्ययः 'स्त्रीपक्षतिः पक्षमूलं' इत्यमरः। एतादृशः मल्लिकाक्षः हंसविशेषः 'मलिनैर्मल्लिकाक्षास्ते' इत्यमरः। अनुचक्रे अनुकृतः। आर्थी उपमा। स्रग्धरावृत्तम् ॥ ८१ ॥

इतिश्रीद्युतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यलंकृतपंडित-
प्रकांडश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्यांतेवासिना निगुडकरो-
पाभिधेन नारायणशर्मणा विरचितायां महोत्साहाम्यजानकी-
हरणकाव्यटीकायां तृतीय सर्गः समाप्तः ॥ ३ ॥

---

# चतुर्थः सर्गः।

अथ स प्रविजृम्भिते शुचौ विधुरश्चेतसि पुत्रकाम्यया।
सुबहुद्विजसात्कृताखिलद्रविणः स्तोममयष्ट भूपतिः॥ १॥
बहुशो विफले तदध्वरे सति पुत्रीयमनन्तरं क्रतुम्।
निरवर्त्तयदृष्यश्रृङ्ग इत्यभिधानप्रथितस्तपोनिधिः॥ २॥

---

श्रीकृष्णायनमः। पूर्वस्मिन् सर्गे राज्ञो दशरथस्य निजस्त्रीपरिवृतस्य वसंतर्तु-वर्णनपूर्वकं जलस्थलक्रीडा वर्णिता। एवं सततं व्यसनुरक्तत्वेऽपि न पुत्रसुखमुपलब्धं एवं च 'नाऽपुत्रस्य लोकोऽस्ती'ति श्रुत्यापितृऋणापाकरणार्थं अवश्यं पुत्रोत्पत्तिरपेक्षिता तत्साधनार्थं राज्ञो दशरथस्य तावत् यज्ञमाह। अथेति। अथ जलस्थलक्रीडावर्णनानंतरं शुचौ आषाढे 'शुचिस्त्वयं आषाढ' इत्यमरः। प्रविजृम्भिते सति विकसिते सति प्राप्ते सतीति यावत् 'यस्य च भावेन भावलक्षण' इति सप्तमी। चेतसि अंतःकरणे 'चित्तं तु चेतो हृदय' इत्यमरः। विधुरः विकलः पुत्राभावेन खिन्न इत्यर्थः 'विधुरं स्यात्परिश्लेषे नद्वयोर्विकले त्रिषु' इति मेदिनी। पुत्रकाम्यया पुत्रेच्छया पुत्रशब्दात् काम्यच् प्रत्ययांतात् 'अप्रत्ययादित्यनेन भावे अप्रत्ययः' शोभनाः उत्तमा ये बहवः द्विजाः 'दंतविप्राण्डजाद्विजा' इत्यमरः। सुबहुद्विजानामधीनीकृतं सुबहुद्विजसात्कृतं 'देयेत्राचेति' साति प्रत्ययः। सातिप्रत्ययांतेन कृतशब्दस्य सुप्सुपेति समासः। सुबहुद्विजसात्कृतं अखिलं द्रविणं द्रव्यं येन 'हिरण्यं द्रविणं द्रव्यं' इत्यमरः। एतादृशः सः पूर्वोक्तः भुवः पृथ्व्याः पतिः स्वामी दशरथः स्तोम यज्ञं 'स्तोमः स्तोत्रेऽध्वरे वृंदे' इत्यमरः। अयष्ट इष्टवान् यज्ञं कृतवान् इति यावत्। तदुक्तं 'प्रसवार्थं ततो यष्टुं हयमेधेन वीर्यवान्। अब्रवीत् प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमं। यज्ञो मे क्रियतां ब्रह्मन् यथोक्तं मुनिपुंगव। तथेति च स राजानमब्रवीद्द्विजसत्तमः। करिष्ये सर्वमेवैतत् भवता यत्समर्थितं। ततो वसिष्ठप्रमुखाः सर्व एवद्विजोत्तमाः। ऋष्यशृंग पुरस्कृत्य यज्ञकर्मारभंस्तदा। यज्ञवाटं गताः सर्वे यथाशास्त्रं यथाविधि। श्रीमांश्च सहपत्नीभिराजादीक्षामुपाविशदिति'। वाल्मीकीये। अनुप्रासालंकारः। अस्मिन् सर्गे अंतिमश्लोक चतुष्टयं विना वैतालीयं छंदः 'षड्विषमेऽष्टौसमे कलास्ताश्च समे स्युर्नो निरंतराः। न समात्र पराश्रिता कला वैतालीयेंऽते रलौ गुरुः' इति लक्षणात्॥ १॥

बहुश इति। बहवो इत्यर्थः बहुशब्दात्संख्यकात् स्वार्थे शस्। नच स्वार्थे शः शस् च आकरमधाधारणम्यते इति वाच्यं। 'एको यपिलमेव्यकः सहस्रम्न्देरता' इति भाष्यात् शसंतस्य प्रत्येकमित्यर्थकत्वेन वैयटेन व्याख्यानाच्च स्वार्थिकस्यापि प्रयोऽवगम्यमानत्वात्। एतादृशे तस्य दशरथस्य अध्वरः यज्ञः 'यज्ञः सवो-

उदियाय ततोऽस्य कश्चन श्रितचामीकरभाजनं चरुम् ।
परिगृह्य रुचा परिज्वलन् ज्वलतो रोहितवाजिनः पुमान् ॥३॥
प्रविवेश विशांपतिश्चरुं चतुरंशीकृततेजसात्मना ।
प्रविधातुमरातितापितत्रिदशाश्रुस्रववृष्ट्यवग्रहम् ॥ ४ ॥

---

र्त्वरोयागः' इत्यमरः । तस्मिन् विगत फल पुनःप्राप्तिरूप यस्मात् स विफलः तस्मिन् निष्फले सति 'यस्य च भावेनेति ज्ञाप्यज्ञाप्यकभावे सप्तमी । अनंतर यज्ञवैफल्यानतरमित्यर्थः । ऋष्यशृग इति यत् 'अभिधान नाम आख्याव्हे अभिधान च नामधेय चेत्यमरः'। तेन प्रथित. ख्यातः 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुतः' इत्यमरः । तपसां निधि. शेवधिः पुत्रायहितः पुत्रीयः तस्य निमित्त सयोगोत्पातौ' इत्यधिकारे 'पुत्राच्छच' इत्यनेन छप्रत्ययः । ननु अत्र कथं अनेन प्रत्ययः नहि क्रतुः सयोगो नाऽप्युत्पातः इति चेत् । अत्र आह हरदत्तः सयुज्यते अनेन इति व्युत्पत्त्या क्रतुरपि सयोग एव । यागकरणेन हि पुरुषः फलेन सयुज्यते अतो यागादिरपि सयोगः । न केवल सबंध एव इत्याग्रह इति । तं क्रतु यज्ञ निरवर्तयन् निष्पादितवान् । नि.पूर्वकात् वर्ततेर्णिजताल्लङ् । ऋष्यशृग इति नाम निरुक्तिस्तु ऋष्यो मृगस्तस्येव शृगमस्यास्तीति ऋष्यशृंग. इति भारतेपि युधिष्ठिर प्रति लोमशोक्तिः 'तस्यर्षेः शृग शिरसि राजनासीन्महात्मनः । तेनर्ष्यशृग इत्येव तदास प्रथितोऽभवत्' इति यद्यपि 'ऋष्यशृग इत्यभिधान' इत्यत्र यतिभगदोषः प्राप्तः स च 'व्यवायोग्राम्य धर्मो मे' इत्यादिषु मान्यप्रयोगेषु दृष्टत्वात् क्वचिदनित्य इति कल्प्यते । विस्तरस्त्वन्यत्र द्रष्टव्य. ॥ २ ॥

उदियायेति । ततः पुनरिष्टेरनतर अस्य दशरथस्य अस्येति सबंधसामान्ये षष्ठी ज्वलतीति ज्वलन् तस्मात् ज्वलतः प्रदीप्यमानात् रोहिता रक्ताः 'लोहितो रोहितो रक्तः' इत्यमरः । वाजिनः अश्वा यस्य स रोहितवाजी अग्निः 'वाजिवाहार्वगधर्वः' इत्यमरः । 'रोहिताश्वो वायुसखः' इत्यमरः । तस्मात् श्रित आश्रित चामीकरस्य सुवर्णस्य भाजन पात्र येन 'पात्रामत्र च भाजन' इत्यमरः । एतादृश चरु चरति भक्षयति देवता अमु इति चरुः । त चरधातोर्भक्षणार्थात् 'भृमृशीतॄचरीत्याद्युणादिसूत्रेण उप्रत्ययः परिगृह्य आदाय रुचा तेजसा 'स्युः प्रभारुग्रुचिस्त्विड्भा' इत्यमर । परिज्वलतीति परिज्वलन् दीप्यमान इत्यर्थः । कश्चन अनिर्वचनीयः पुमान् पुरुषः उदियाय प्रादुर्बभूव उत्पूर्वादिण्ये लिट् ॥ ३ ॥

प्रविवेशेति । विशा प्रजाना पतिः स्वामी विष्णुः अरातिभिः शत्रुभिः तापिताः ये त्रिदशाः देवाः 'त्रिदशाविबुधा सुराः' इत्यमरः । तेषां ये अश्रूणा नेत्रोदकाना स्रवा. द्रवाः सैव वृष्टिः वर्षणं तस्या अवग्रह 'वृष्टिर्वर्षे तद्विघातेवग्राहावग्रहौसमौ' इत्यमरः । 'अवेग्रहोवर्षप्रति इति घञभावे' 'ग्रहवृदृनिश्चिगमश्चेति' अप् प्रविधातुं कर्तुं चत्वारः अंशाः यथाभवति तथाकृत चतुरंशीकृत

दयिताभिरनन्ततेजसा मुनिनासौ परिकल्प्यलम्भितः।
अशितः प्रविभज्य भूपतेस्तिसृभिर्गर्भमबीभवच्चरुः॥ ५॥
सुतयोर्भवतः स्म बालिजिद्भरतौ कोशलकेकयेन्द्रयोः।
यमजौ यमतुल्यतेजसौ सुषुवाते समये सुमित्रया॥ ६॥
अथ दिव्यमुनिप्रवर्त्तितप्रसवानन्तरजातकर्म्मणाम्।
रुरुचे चरुजन्मनां दशा तनुसन्दर्शितदन्तकुड्मला॥ ७॥

---

चतुरंशशब्दात् च्विप्रत्ययः अस्य 'च्वौ' इतीत्व ततः ऊर्यादि' इति गतिसंज्ञायां कुगतीति कृतशब्देन समासः। चतुरशीकृतं तेजो येन एतादृशेन आत्मना स्वभावेन स्वरूपेणेत्यर्थः। 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च' इत्यमरः। चरुं हविर्विशेष प्रविवेश प्रपूर्वाद्विशतेर्लिट्। विष्णुश्चतूरूपेण चरौ सान्निध्य चकारेत्यर्थः। उक्तं च वाल्मीकीये 'मानुष्ये चिंतयामास जन्मभूमि-मथात्मनः। तत. पद्मपलाशाक्षः कृत्वात्मान चतुर्विध। पितर रोचयामास तदा दशरथ नृप' इति। अनुप्रासालंकारः॥ ४॥

दयिताभिरिति। नास्ति अतः अवधिर्यस्य तत् अनतं एतादृशं तेजः स्वभावः यस्य 'तेजः प्रभावे दीप्तौ च' इत्यमरः। एतादृशेन मुनिना ऋष्यशृंगेण वसिष्ठेन वा परिकल्प्य प्रविभज्य लंभितः प्रापितः दुर्लभम् प्राप्तो णिजतात् यः लभेथेति नुमागमः भूपतेः दशरथस्य तिसृभिः त्रिसंख्याभिः दयिताभि. प्रियाभिः अशितः भक्षितः असौ पूर्वोक्तः चरुः गर्भं भ्रूण 'गर्भो भ्रूण इमौ समौ' इत्यमरः। अगर्भमभवत् उत्पादयामासेत्यर्थः। भवतेर्णिजंतात् लुङि चङि द्वित्व॥ ५॥

सुतयोरिति। समये गर्भप्रसवकाले इत्यर्थ.। कोशला केकयाश्च देशविशेषाः तेषां इंद्रौ अधिपती द्वन्द्वांते श्रूयमाण पद प्रत्येकं संबध्यते' इति न्यायेन इन्द्र-शब्दस्य प्रत्येकं संबधः कोशलेन्द्रकेकयेन्द्रयोरित्यर्थः। सुतयोः अन्ययोः गंधर्वजामाल्ये षष्ठी। इत्यनेन षष्ठी वालिनं एतन्नामकवानरेंद्रं जयति इति वालिजित् 'सत्सू-द्विषद्रुहादिना क्विप् वालिजिच्च भरतश्च वालिजिद्भरतौ रामभरता-वित्यर्थः भवतःस्म बभूवतुः इत्यर्थः लट् स्मे इति सूत्रेण भूतार्थे लट्। यमेन अंतकेन तुल्यं सदृशं तेजः प्रतापो ययोस्तौ एतादृशौ यमजौ युगलौ लक्ष्मण-शत्रुघ्नौ सुमित्रया एतन्नाम्न्या दशरथपत्न्या कर्त्र्या सुषुवाते प्रसूताविमर्थः। सुषाते: कर्मणि लिट्। अनुप्रासालंकारः॥ ६॥

न स राम इह क्व यात इत्यनुयुक्तो वनिताभिरग्रतः ।
निजहस्तपुटावृताननो विदधेऽलीकनिलीनमर्भकः ॥ ८ ॥
मुखमाहृतधूलि गण्डयोः करघृष्टाञ्जनदानमस्य तत् ।
विबभौ सुरदन्तिनो यथा वदनं दन्तचतुष्टयोज्ज्वलम् ॥ ९ ॥
कतरस्तव तात उच्यतामिति धात्रीवचनप्रचोदितः ।
रुचिरेण करेण निर्दिशन् जगदीशं प्रमदेन सन्दधौ ॥ १० ॥

---

णोत्पन्नत्वात् दिव्यस्य एतादृशानां चरो. हविर्विशेषात् जन्म उत्पत्तिर्येषां ते चरुजन्मानः तेषां पुत्राणां तनवः सूक्ष्माः ' श्लक्ष्णं दभ्रं कृशं तनु ' इत्यमरः । सदर्शिताः दता एव रदना एव कुड्मलाः मुकुला यया एतादृशा दशा अवस्था 'दशावस्थानेकविधा ' इत्यमर.। रुरुचे शुशुभे । रुच् दीप्तौ अभिप्रीतौ च अस्मात् लिट् । यस्यामवस्थायां दता उत्पद्यंते सा अवस्था तेषां प्राप्ता इत्यर्थ । अनुप्रासः ॥ ७ ॥

नेति । सः राम इह नास्ति क्व यात' कुत्र गतः इति एवंप्रकारेण वनिताभिः अग्रे इत्यग्रतः अग्रभागे इत्यर्थः । अनुयुक्तः पृष्टः अर्भकः रामचंद्रः निजं स्वीयं यद्धस्तपुटं हस्तांजलिरित्यर्थः । 'स्वके नित्ये निजं त्रिषु ' इत्यमरः । तेन आवृतं आच्छन्नं आननं मुखं येन एतादृश. सन् अलीकं अनृतं मिथ्येत्यर्थः । एतादृशं यन्निलीनं गुप्तस्थितिः तत् विदधे चकार । विपूर्वाद्धाञ. लिट् । मातृणामग्रतः क्वास्ति रामः इति ताभिः पृष्टः निजहस्ताञ्जल्याच्छन्नमुखः सन् अलीकमेव निलीनं चकार । अनुप्रासालङ्कारः ॥ ८ ॥

मुखमिति । आहृता स्वीकृता धूलिः पांसु. येन धूल्यावृतमित्यर्थः । पुनश्च गडयोः गल्ल्यो' कराभ्यां घृष्ट यत् अंजनं कज्जलं तदेव दानं मदो यस्मिन् ' गड. कटो मदो दानं ' इत्यमर. । एतादृशं अस्य रामचंद्रस्य तत् प्रसिद्धं मुखं वभ' यथा येन प्रकारेण प्रशस्ता दता अस्य स दती सुराणां देवानां दती ऐरावत इत्यर्थः । तस्य दतानां रदनानां चतुष्टयं तेन उज्वलं एतादृशं वदनं मुखं तद्वत् विबभौ शुशुभे इत्यर्थः । विपूर्वात् भा दीप्तौ अस्माल्लिट् सुरदंतिनः चतुर्दंतत्वे प्रमाणं तु ' ऐरावणोऽभ्रमातंगश्चतुर्दंतोऽर्केसोदर.' इति हेमचंद्र ॥ ९ ॥

कतर इति। तव तात' जनक' कतरः क इत्यर्थः। किं शब्दात् डतरच् प्रत्यय'। यद्यपि ' किं यत्तदो निर्धारणे द्वयोरेकस्य डतरच ' इत्यनेन डतरच द्वयोरेकस्य निर्धारणे विहितः तथापि किं शब्दाड्डतरच् बहूनां निर्धारणेपि भवति इति स्पष्ट सिद्धांतकौमुद्यां। उच्यतां कथ्यतां इति एवंप्रकारेण धात्र्याः उपमातायाः यद्वचनं भाषणं "धात्रीस्यादुपमातापि ' इत्यमरः । तेन प्रचोदितः प्रेरितः रुचिरेण सुंदरेण "सुंदरं रुचिरं चारु' इत्यमरः । करेण हस्तेन निर्दिशति दर्शयति इति निर्दिशन् एतादृशः श्रीरामचंद्र' इत्यध्याहारः न्दे जगतः विश्वस्य ईश' स्वामी तं दशरथं प्रमदेन

दयिताभिरनन्ततेजसा मुनिनासौ परिकल्प्यलम्भितः ।
अशितः प्रविभज्य भूपतेस्तिसृभिर्गर्भमवीभवच्चरुः ॥ ५ ॥
सुतयोर्भवतः स्म वालिजिद्भरतौ कोशलकेकयेन्द्रयोः ।
यमजौ यमतुल्यतेजसौ सुषुवाते समये सुमित्रया ॥ ६ ॥
अथ दिव्यमुनिप्रवर्त्तितप्रसवानन्तरजातकर्मणाम् ।
रुरुचे चरुजन्मनां दशा तनुसन्दर्शितदन्तकुड्मला ॥ ७ ॥

---

चतुरस्रशब्दात् च्विप्रत्ययः अस्य 'च्वौ' इतीत्वं ततः ऊर्यादि ' इति गतिसंज्ञायां कुगतीति कृतशब्देन समासः । चतुरस्रीकृत तेजो येन एतादृशेन आत्मना स्वभावेन स्वरूपेणेत्यर्थः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च' इत्यमरः । चरुं हविर्विशेष प्रविवेश प्रपूर्वाद्विशतेर्लिट् । विष्णुश्चतूरूपेण चरौ सान्निध्य चकारेत्यर्थः । उक्तं च वाल्मीकीये ' मानुष्ये चिंतयामास जन्मभूमिमथात्मनः । ततः पद्मपलाशाक्षः कृत्वात्मान चतुर्विध । पितर रोचयामास तदा दशरथ नृप ' इति । अनुप्रासालंकारः ॥ ४ ॥

दयिताभिरिति । नास्ति अतः अवधिर्यस्य तत् अनतं एतादृशं तेजः स्वभावः यस्य ' तेजः प्रभावे दीप्तौ च ' इत्यमरः । एतादृशेन मुनिना ऋष्यशृङ्गेण वसिष्ठेन वा परिकल्प्य प्रविभज्य लम्भितः प्रापितः डुलभष् प्राप्तौ णिजन्तात् क्तः लभेश्चेति नुमागमः भूपतेः दशरथस्य तिसृभिः त्रिसंख्याभिः दयिताभिः प्रियाभिः अशितः भक्षितः असौ पूर्वोक्तः चरुः गर्भ भ्रूण ' गर्भो भ्रूण इमौ समौ ' इत्यमरः । अवीभवत् उत्पादयामासेत्यर्थः । भवतेर्णिजन्तात् लुङि चङि द्विश्च ॥ ५ ॥

सुतयोरिति । समये गर्भप्रसवकाले इत्यर्थः । कोशला केकयाश्च देशविशेषाः तेषां इन्द्रौ अधिपती द्वंद्वांते श्रूयमाण पद प्रत्येक सम्बध्यते ' इति न्यायेन इन्द्रशब्दस्य प्रत्येक संबंधः कोशलेन्द्रकेकयेन्द्रयोरित्यर्थः । सुतयोः कन्ययोः सम्बन्धसामान्ये षष्ठी । इत्यनेन षष्ठी वालिनं एतन्नामकवानरेंद्रं जयति इति वालिजित् ' सत्सू-द्विषद्रुहेत्यादिना जयतेः क्विप् वालिजिच्च भरतश्च वालिजिद्भरतौ रामभरतावित्यर्थः भवतस्म बभूवतुः इत्यर्थः लट् स्मे इति सूत्रेण लिडर्थे लट् । यमेन कृतान्तेन तुल्य सदृशं तेजः प्रभावो ययोस्तौ एतादृशौ यमजौ युगलौ लक्ष्मणशत्रुघ्नौ सुमित्रया एतन्नाम्न्या दशरथपत्न्या कर्त्र्या सुषुवाते प्रसूतावित्यर्थः । सुषुवाते कर्मणि लिट् । अनुप्रासालंकारः ॥ ६ ॥

क्रमशश्चरुजन्मनो वपुःपरिवृद्धिर्महिता महीयसः ।
प्रतिवासरमायुषः क्षयस्त्रिदशारेरपि तुल्यमासतुः ॥ १४ ॥
धनुषि प्रतिलब्धपाटवे नृपतेरन्यतरेद्युरात्मजे ।
भवनं भुवनस्य शासितुः प्रतिपेदे मुषितक्रतुर्मुनिः ॥ १५ ॥
स्वकिरीटमणिप्रभाम्बुभिः प्रथमं क्षालितपादपङ्कजम् ।
नृपतिः समभीमवन्मुनिम्पुनरुक्तैरिव पाद्यवारिभिः ॥ १६ ॥

---

क्रमश इति । चरुजन्मनः चरोः जन्म यस्य एतादृशस्य महिता पूज्या क्रमशः क्रमेण 'एकैकश' इति भाष्यप्रयोगात् क्रमशब्दात्तृतीयांतात्स्वार्थे शस् एतच्च प्राग्व्याख्यातं । वपुषः शरीरस्य परिवृद्धिः वर्धनं तथा अतिशयेन महान् इति महीयान् तस्य महीयसः महत्तरस्येत्यर्थः । महन्ञब्दादीयसुन् टेः इति टिलोपः । एतादृशस्य त्रिदशानां देवानां अरिः शत्रुः तस्यापि रावणस्यापीत्यर्थः । आयुषः आयुष्यस्य क्षयः नाशः प्रतिवासरे वासरे इति प्रतिवासरं प्रतिदिन मित्यर्थः । अव्ययमिति सूत्रेण वीप्सार्थेऽव्ययीभावः । तुल्यं सदृशं यथास्यात्तथा आसतुः बभूवतुः । असधातोर्लिट् । सहोक्त्यलंकारः 'सहोक्तिः सहभावश्चेत् भासते जनरंजनं' इति लक्षणात् ॥ १४ ॥

धनुषीति नृपतेः दशरथस्य आत्मजे पुत्रे धनुषि धनुर्विद्यायां धनुष्ये पाटवाऽसंभवात् धनुःशब्देन धनुर्विद्योपलक्ष्यते पटोः कुशलस्यभावः पाटवं 'इगन्ताच्च लघुपूर्वादि'त्यण् प्रतिलब्धं प्राप्तं पाटवं कौशलं येन 'लब्धं प्राप्तं विन्नं' इत्यमरः । एतादृशे सति अन्यतरस्मिन्नहनि इत्यन्यतरेद्युः 'सद्यः परुत्परार्यादिना अन्यतरशब्दात् सप्तम्यन्तात् एद्युस्प्रत्ययः' । भुवनस्य विष्टपस्य कर्तृकर्मणोरिति कर्मणि षष्ठी । शास्ति दुष्टनिग्रहसत्पालने करोति इति शासिता तस्य शासितुः दशरथस्य भवनं गृहं 'भवनागारमंदिरं' इत्यमरः । मुषितः स्तेनितः चोरित इत्यर्थः । क्रतुः यज्ञः यस्य रक्षोभिर्नाशित यज्ञ इति यावत् मुनिः ऋषिः अर्थाद्विश्वामित्रः प्रतिपेदे प्रापेत्यर्थः । प्रतिपूर्वात् पदधातोः लिट् एत्त्व अभ्यासलोपश्च । अनुप्रास ॥ १५ ॥

स्वकिरीटेति । नृपतिः दशरथः स्वस्य किरीटं मुकुटं 'मुकुटकिरीटं पुंनपुंसकं' इत्यमरः । तत्संबंधिनो मणयः रत्नानि तेषां प्रभा कांतिः सैव अंबूनि उदकानि तैः प्रथमं पूर्वं समस्तपाठे तु प्रथमं क्षालिते इति सुप्सुपेति समासः । एतादृशे पादावेव पंकजे कमले यस्य एतादृशं मुनिं विश्वामित्रं पुनरुक्तैरिव द्विरुक्तैरिव द्वि करणे लाक्षणिकोयं शब्दः पादाभ्यां उपकारकाणि इति पाद्यानि उदकानि 'पादार्घाभ्यां चेति' तादर्थ्ये यत् । तैः समभीमवत् संभावयामासेत्यर्थः । रूपकोत्प्रेक्षालंकारौ ॥ १६ ॥

अयि दर्शय तत्किमुन्दुरादभवतोपात्तमिति प्रचोदितः ।
प्रविदर्शयति स्म शिक्षया नवकं दन्तचतुष्टयं शिशुः ॥ ११ ॥
इतरेऽपि सरोजशीतलैर्मृदुभिः साञ्जनराजिभिः करैः ।
शयने समवाहयन् पितुश्चरणौ मातृजनेन चोदिताः ॥ १२ ॥
शयनीयगतस्य भूपतेः शिशवः क्रोडनिवेशवाञ्छया ।
निशि वञ्चितमातृसम्पदं कलहं कोमलजल्पितं दधुः ॥ १३ ॥

---

हर्षेण 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः । संदधौ संयुयोज संपूर्वाद्धातेर्लिट् । धात्री शिक्षितकरणेन राजानं आनंदयामासेत्यर्थः । अनुप्रासालंकारः ॥ १० ॥

अयीति । अयीति अनुनये संबोधने वा 'अयिप्रश्नानुनययोस्तथा संबोधनेऽपि च' इति मेदिनी । भवता त्वया उंदुरात् मूषकात् 'उंदुरुर्मूषकोऽप्याखुः' इत्यमरः । किं वस्तु उपात्तं गृहीतं तत् दर्शय अस्माकं इति शेषः । इति एवं प्रकारेण प्रचोदितः प्रेरितः शिशुः बालः अर्थात् रामचंद्रः शिक्षया शिक्षणेन । त्वया उंदुरात् किमुपात्तमिति केनचित् पृष्टे इदं दंतचतुष्टयं दर्शय इत्याकारक धातृशिक्षणेनेत्यर्थः । नवमेव नवकं स्वार्थे कः चत्वारः अवयवा यस्य तच्चतुष्टयं दंतानां रदनानां चतुष्टयं दंतचतुष्टयं प्रविदर्शयतिस्म दर्शयामासेत्यर्थः । अनुप्रासः ॥ ११ ॥

इतरेऽपीति । इतरे रामादन्ये त्रयः 'इतरस्त्वन्यनीचयोः' इत्यमरः । अपि शब्दाद्रामोऽपि मातृणां जननीनां जनः लोकः 'जनयित्री प्रसूर्माता जननी' इत्यर्थः । चोदिताः प्रेरिताः संतः सरोजानि कमलानि तद्वच्छीतलाः शीताः तैः 'तुषारः शीतलः शीतः' इत्यमरः । मृदुभिः कोमलैः अंजनं कज्जलं तस्य राजयः पंक्तयः ताभिः सह वर्तते इति साञ्जनराजयः तैः 'तेन सहेति तुल्ययोगे' 'वोपसर्जनस्येति' सादेशः बालस्वभावात् संघट्टनेनापि तत्कज्जलसहितैरित्यर्थः । एतादृशैः करैः शयने पर्यंके 'शयनं मञ्चपर्यंक' इत्यमरः । पितुः दशरथस्य चरणौ पादौ समवाहयन् संवाहयांचक्रुरित्यर्थः । संपूर्वाद्वहतेर्णिजंताल्लङ् ॥ १२ ॥

शयनीयेति । शिशवः बालाः शयनीयं शयनं गतः प्राप्तः तस्य 'शय्यायां शयनीयवत् शयनं' इत्यमरः । द्वितीयाश्रितेति समासः । एतादृशस्य भूपतेः दशरथस्य क्रोडे भुजांतरे यो निवेशः स्थितिः 'क्रोडं भुजांतरं' इत्यमरः । तस्य या वांछा इच्छा निशि रात्रौ निशाशब्दस्य 'पद्दन्नोमास' सूत्रेण निश् आदेशः वंचिता इति प्रापिता मातृणां जननीनां संपत् संपत्तिर्येन एतादृशं कलहं मिथः जल्पितं उपविशामि इत्येवं एवमाद्यर्थवर्णनं कोमलानि मृदूनि 'कोमलं मृदुलं मृदु' इत्यमरः । एतादृशानि जल्पितानि भाषणानि यस्मिन् कलहे दधुः धारयामासुरित्यर्थः । धाञ् धातोः लिट् ॥ १३ ॥

मिषतामपि नस्तपस्यतां धृतवैकङ्कतसाधनस्त्रुचाम्।
स्फुरदर्चिषि देवतामुखे हुतमस्यद्य उदस्यतेऽरिभिः॥ २१॥
सदसः समयेषु वृत्तये विधिनाऽऽहूतहुताशमाजिनः।
युधि तं जहि पश्यतोहरं गुरुणा रामशरेण राक्षसम्॥ २२॥
क्षमते न जनं त्वदर्पितं यमिनामिन्द्र रिपुस्तु हिंसितुम्।
शशिनं मृगशत्रुराश्रितं न मृगः प्रार्थयते हि जातुचित्॥ २३॥

---

सर्वतो विष्वगित्यपि' इत्यमरः। निपततीति निपतः य निपतःय शोणितस्येव रक्तवर्णानि यासु एतादृश्यः दिशः य ये पवनेन वायुना आहतानि ताडितानि यानि वृन्तानि प्रसवबन्धनानि तेभ्यः विच्युता गलिता प्रसवा पुष्पाणि यासां ता 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः। एतादृशां किंशुकानां पलाशानां काननानि अरण्यानि तेषां श्रियं अनुयाति अनुकुर्वन्तीत्यर्थः। सर्वतः राक्षसप्रक्षिप्तरुधिराक्ता दिशः पवनताडितवृन्तपतितपुष्पा किंशुकाऽरण्यश्रियं अनुकुर्वन्तीति तात्पर्यम्॥ २०॥

मिषतामिति। विकङ्कतस्य विकारः वैकङ्कता साधनस्य करणभूताश्च ता स्रुचः हविःप्रक्षेपसाधनभूतपात्रविशेषाः 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः धृता यैः धृतसाधनस्रुचो ये एतादृशानां तपस्यतां तपश्चरति तपस्यति तेषां तपस्यतां 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्। 'तपसः परस्मैपदं चेति' परस्मैपदं एतादृशानां नः अस्माकं मिषतामपि पश्यतां सतामपीत्यर्थः। 'षष्ठी चानादरे' इत्यनेन षष्ठी स्फुरतीति स्फुरति एतादृशानि अर्चींषि यस्य एतादृशे देवतामुखे वह्नौ हुतं वषट्कृतं प्रक्षिप्तमित्यर्थः। 'हुतं त्रिषु वषट्कृतं' इत्यमरः। अयञ्च लोकोक्तिरियं अरिभिः शत्रुभिः राक्षसैः उदस्यते उत्क्षिप्यते अपह्रियते इति यावत्॥ २१॥

सदस इति। समयेषु तत्तत्कालेषु विधिना विधानेन हुताशं हविर्दग्धारं भजतीति हुताशभाजिनः आहूता हुताशभाजिनः यथा येन एतादृशस्य सदसः ऋषिसभायाः वृत्तये पश्यतोहरं चोरं 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इत्यनेन अलुक् तं राक्षसं गुरुणा तीव्रेण रामशरेण रामबाणेन तद्द्वारा इत्यर्थः। घातय नाशय। हन्तेर्णिजन्ताल्लोट् घत्वञ्च उपधावृद्धि र्न तुक्॥ २२॥

मन्वेतादृशः दुर्धर्षोऽयं राक्षसः स कथं सुकुमारस्य रामस्य पाणिना वध्य इति मा शङ्कितव्यमित्याह क्षमत इति। यमिनां यमः संयमः प्रशस्त अस्ति येषां ते यमिनः। यमशब्दादिनिप्रत्ययः तेषां मिन्द्रेन्द्रामध्ये इन्द्र श्रेष्ठ हे दशरथ रिपुः शत्रुः त्वया अर्पितेन दत्तं त्वदर्पितं तं एतादृशं जनं तु हिंसितुं नाशितुं न क्षमते न समर्थो भवति क्षमूष् सहने लट्। हि यस्मात्कारणात् मृगाणां हरिणानां शत्रुः रिपुः सिंहः 'कण्ठीरवो मृगरिपुः' इत्यमरः। शशिनं चन्द्रं आश्रितं मृगं जातुचित् कदाचित् न प्रार्थयते। अर्थान्तरन्यासोऽलङ्कारः॥ २३॥

कुशलं परिपृच्छ्य सर्वगं मुनिरध्यासितरत्नविष्टरः ।
उपविष्टमसौ भुवस्तले विरतं राजमुनिं जगौ गिरम् ॥ १७ ॥
स्वजनादपि लब्धवैशसे नृपतित्वे शठभृत्यसम्पदि ।
प्रियवादिरिपावपि स्थितो नृप दिष्ट्या कुशलेन वर्त्तसे ॥ १८ ॥
द्विपतो भवबन्धभेदिना दहतश्चेतसि योगवह्निना ।
न जहाति विपत्तिरद्य नः परसम्पत्तिषु निस्पृहानपि ॥ १९ ॥
अनुयान्ति समन्ततो मखे निपतच्छोणितवृष्टयो दिशः ।
पवनाहतवृन्तविच्युतप्रसवाः किंशुककाननश्रियः ॥ २० ॥

---

कुशलमिति । रत्नानां हीरकादीनां विष्टरः आसन 'विष्टरो विटपादर्भमुष्टिः पीठाद्यमासनं' इत्यमरः। अध्यासित अधिष्ठितः रत्नविष्टरो येन एतादृश असौ पूर्वोक्तः मुनिः ऋषि. विश्वामित्रः भुवः पृथ्व्याः तले उपविष्टं कृतोपवेशन विरत उपरत 'आरत्यवरतिविरतय उपरामे' इत्यमर । राजसु राज्ञां वा मुनि. राजमुनि त राजर्षिमित्यर्थ । सर्वत्र गच्छतीति सर्वग सर्वसवध्रत्यर्थः । कुशल क्षेम परिपृच्छ्य पृष्ट्वा गिर वाणीं जगौ बभाषे इत्यर्थ कैगैशब्दे लिट् ॥ १७ ॥

स्वजनादिति । स्वस्य जनः लोक स्वजन तस्मादपि आत्मीयजनादपीत्यर्थ । लब्ध वैशस नाशः यस्मिन् तस्मिन् भृत्यानां संपत् सपत्ति शठा भृत्यसपत् यस्मिन् तस्मिन्। प्रिय वदति तच्छीला. प्रियवादिन रिपवो यस्मिन् तत्प्रियवादिरिपु 'तृतीयादिभाषितपुस्क पुंवत्' इत्यादिना पुवत्भाव: तस्मिन् प्रियवादिरिपौ एतादृशे नृपतित्वे राजत्वे स्थितोऽपि विद्यमानोऽपि हे नृप हे दशरथ त्व कुशलेन भव्येन वर्तसे एतत् दिष्ट्या आनदकारकमित्यर्थ । यत्र राज्ये स्वजना अपि पुत्रादय पित्रादीन् निघ्नति शठा अपि यत्र भृत्या भवंति भृत्या वा यत्र शठतामाचरति, रिपवोऽपि यत्र प्रियवादिन स्युः, अथ प्रियवादिनोऽपि दुष्टा रिपुवद्विरुद्धमाचरति, तत्र तथाविधे राज्ये वर्तमानस्त्व कुशलेन वर्तसे एतत् आनदकारकमित्यर्थ ॥ १८ ॥

द्विपत इति । भवस्य बंध बंधनं तं भिनत्ति तच्छील भवबधभेदी तेन एतादृशेन योग एव वह्निः अग्नि तेन चेतसि अत करणे द्विपतीति द्विपतः तान् द्विपतः कामक्रोधादिचतुर्वर्गान् दहत दहतीति दहंत. तान् दहतः नाशकानित्यर्थ न अस्मान् परेषां इतरेषां सपत्सु समृद्धय. तासु निर्गता स्पृहा इच्छा येषां ते निस्पृहा तान् अस्मानपि विपत्ति सांसारिकदुःख न जहाति न त्यजति । आध्यात्मिकदुःखे निवृत्तेऽपि आधिभौतिकं दुःख अस्मान्ननुवर्तते एव राक्षसोपद्रवात् अतएव सर्वे राज्यस्थो भवान् कुशलस्थित न वेति तात्पर्य भवमेव ॥१९॥

अनुयान्तीति । अस्माकं विपत्तिरद्यापि न गतेत्युक्तं तामेव विवृत्ति दर्शयति । मखे यज्ञे 'सवोऽध्वरोऽध्वर मखः' इत्यमरः । समंतत परित. 'समंतवस्तुपरित'

मिषतामपि नस्तपस्यतां धृतवैकङ्कतसाधनस्रुचाम् ।
स्फुरदर्चिषि देवतामुखे हुतमद्यद्र उदस्यतेऽरिभिः ॥ २१ ॥
सदसः समयेषु वृत्तये विधिनाऽऽहृतहुतांशभाजिनः ।
युधि तं जहि पश्यतोहरं गुरुणा रामशरेण राक्षसम् ॥ २२ ॥
क्षमते न जनं त्वदर्पितं यमिनामिन्द्र रिपुस्तु हिंसितुम् ।
शशिनं मृगशत्रुराश्रितं न मृगं प्रार्थयते हि जातुचित् ॥ २३ ॥

---

सर्वतो विष्वगित्यपि' इत्यमरः । निपततीति निपतत्, निपतत्य शोणितवृष्टय रक्तवर्षणानि यासु एतादृश्य दिशः, यः यैः पवनेन वायुना आहतानि ताडितानि यानि वृन्तानि प्रसवबन्धनानि तेभ्यः विच्युता गलिताः प्रसवाः पुष्पाणि यासां ताः 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । एतादृशाः किंशुकानां पलाशानां काननानि अरण्यानि तेषां श्रियं अनुयाति अनुवर्तीत्यर्थः । सर्वतः राक्षसप्रक्षिप्तरुधिरार्क्ता दिशः पवनताडितवृन्तपतितपुष्पाः किंशुकारण्यश्रियम् अनुकुर्वतीति तात्पर्यम् ॥ २० ॥

मिषतामिति । विकङ्कतस्य विकाराः वैकङ्कताः साधनस्य करणभूताश्च ताः स्रुचः हविःप्रक्षेपसाधनभूतपात्रविशेषाः 'स्त्रिया पुंवत्' इत्यादिना पुंवद्भावः धृताः वैकङ्कतसाधनस्रुचो यैः एतादृशानां तपस्यतां तपश्चरति तपस्यति तेषां तपस्यताम् 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् । 'तपसः परस्मैपदं चेति' परस्मैपदम् एतादृशानां नः अस्माकं मिषतामपि पश्यतां सतामपीत्यर्थः । 'षष्ठी चानादरे' इत्यनेन षष्ठी स्फुरतीति स्फुरन्ति एतादृशानि अर्चींषि यस्य एतादृशे देवतामुखे वह्नौ हुतं वषट्कृतं प्रक्षिप्तमित्यर्थः । 'हुतं त्रिषु वषट्कृतम्' इत्यमरः । अद्य अरिभिः शत्रुभिः राक्षसैः उदस्यते उत्क्षिप्यते अपह्रियते इति यावत् ॥ २१ ॥

सदस इति । समयेषु तत्तत्कालेषु विधिना विधानेन हुतांशं हविर्द्रव्यांशं भजन्तीति हुतांशभाजिनः आहूता हुतांशभाजिनः देवा येन एतादृशस्य सदसः ऋत्विक्सभायाः वृत्तये पश्यतोहरं चोरं 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इत्यनेन अलुक् तं राक्षसं गुरुणा तीव्रेण रामशरेण रामबाणेन तद्द्वारा इत्यर्थः । घातय नाशय । हेतुमण्णिजन्तात् हन्तेः वधादेशः ॥ २२ ॥

नन्वेतादृशः दुर्धर्षो राक्षसः स कथं सुकुमारस्य रामस्य बाणेन वध्य इति मा शङ्किष्ठा इत्याह क्षमत इति । यमिनां यमः संयमः प्रशस्तः अस्ति येषां ते यमिनः । यमशब्दादिनिः प्रत्ययः तेषां जितेन्द्रियाणामप्यैन्द्रः हे इन्द्र हे दशरथ रिपुः शत्रुः त्वया अर्पितं दत्तं रक्षितं तं एतादृशं जनं तु हिंसितुं नाशितुं न क्षमते न समर्थो भवति क्षमूष् सहने इदं । हि यस्मात्कारणात् मृगाणां हरिणानां शत्रुः रिपुः सिंहः 'कण्ठीरवो मृगरिपुः' इत्यमरः । शशिनं चन्द्रं आश्रितं मृगं जातुचित् कदाचित् न प्रार्थयते । अर्थान्तरन्यासोऽलङ्कारः ॥ २३ ॥

उरगा इव घर्मपीडिताः क्रतुदानव्यथितास्तपस्विनः ।
उपयान्त्युपतापनाशनं विपुलं त्वद्भुजचन्दनद्रुमम् ॥ २४ ॥
वयमर्ककुलैककाश्रया न परं भूपतिमाश्रयामहे ।
न हि जातु पतन्ति पल्वले जलदा वारिधिपानलम्पटाः ॥ २५ ॥
त्वदणुप्रियमाश्रयामहे न परस्मादतिविस्तराण्यपि ।
पयसः कणमेव चातको जलदादत्ति बहूनि नान्यतः ॥ २६ ॥
नृपताविति वेदितापदा मुनिना जोषमभूयत क्षणम् ।
महतां न कदाचिदर्शना गुरुनिर्बन्धयितृत्वसौष्ठवा ॥ २७ ॥

---

उरगा इति । घर्मेण पीडिता उरगा सर्पा इव क्रतूनां यज्ञानां दानवः रिपवः 'दस्युशात्रवशत्रव.' इत्यमरः । राक्षसा इत्यर्थः तैः पीडिताः एतादृशाः तपस्विनः 'तप.सहस्राभ्यां विनीनि' विनिप्रत्ययः नाश्यते अनेनेति नाशनं नश धातोः णिजन्तात्करणे ल्युट् उपतापस्य पीडायाः नाशनं एतादृशं तं अन्यत्र उपसमीपवर्ती यः सूर्यादितापः तन्नाशनं एतादृशं विपुलं विशालं पक्षे विस्तीर्णं तवभुजः बाहुः स एव चन्दनद्रुमः चन्दनवृक्षः तं प्रति उपयान्ति समीपं प्राप्नुवन्ति । या प्रापणे लट् झोन्तः । श्लेषप्राणितउपमालंकारः ॥ २४ ॥

नन्वन्यो राजा शरणीकरणीय इति मा वोच. इत्याह । वयमिति । वयं ऋषयः अर्कस्य सूर्यस्य तत्कुलं वंशः 'कुलान्यभिजनान्वयौ' इत्यमरः । स एव एकक. केवलः आश्रयो येषां ते एकशब्दात् स्वार्थे कन् परं द्वितीयं सूर्यवंशीय-भिन्नमित्यर्थः । भूपतिं राजानं न आश्रयामहे न शरणीकुर्मः आङ्पूर्वाच्छ्रयतेर्लट् । तदेव अर्थान्तरन्यासेन द्रढयति । वारीणि धीयते अस्मिन् इति वारिधिः 'कर्मण्य-धिकरणे' च इति कि वारिधेः समुद्रस्य यत्पानं प्राशनं तस्मिन् लम्पटा लुब्धाः जलदा जलानि ददतीति जलदाः मेघाः पल्वले वेशन्ते जातु कदाचित् नहि पतन्ति न प्राप्नुवन्तीत्यर्थः । अर्थान्तरन्यासालंकारः ॥ २५ ॥

त्वदिति । त्वत् त्वत्तः सकाशात् अणु स्वल्पं 'लवलेशकणाणव' इत्यमरः । प्रियं इष्टं आश्रयामहे स्वीकुर्म इत्यर्थः । आङ्पूर्वाच्छ्रयतेः णिजन्तात् आत्मनेपदं पर-स्मात् त्वत्तः अन्यस्मादित्यर्थः । अति विस्तराणि प्रभूतानीति यावत् एतादृशा-न्यपि प्रियाणीति शेषः । न नआश्रयामहे इत्यर्थः । चातक. सारंगः 'अथ सारंग-स्तोककश्चातक. समाः' इत्यर्थः । पयसः जलस्य कणमेव लेशमेव जलदात् मेघात् अत्ति भक्षयति अद्भक्षणे लट् । जलदादिति पंचमी गम्यमानपतनक्रियानि-रूपितापादाने अन्यस्मादित्यन्यतः 'पञ्चम्यास्तसिल्' इति तसिल् प्रत्ययः । बहूनि प्रभूतानि 'प्रभूतं प्रचुरं प्राज्यमदभ्रबहुलं बहु' इत्यमरः । जलानीति शेषः नात्ति न भक्षयति । अर्थान्तरन्यासालंकारः ॥ २६ ॥

नृपताविति । इति पूर्वोक्तप्रकारेण नृणां पतिः स्वामी तस्मिन् राज्ञि वेदिता

परिपूततनुर्द्विजाशिषा शुभया त्वत्प्रियताऽऽवृतः स्वयम्।
पृथुकः पृथुकीर्तिरर्पितो भवति श्वः समराय यास्यति ॥ २८ ॥
इति वस्तुमवस्तुकाङ्क्षिणे स मुदाऽस्मै समुदाहृतप्रियः।
शरणं शरणार्थिने ददावृषये विश्वभुजो नरेश्वरः ॥ २९ ॥
चलिते च सुते तपस्यति प्रथमाहृतमृषेर्नमस्यया।
उपनीय चिराय वाञ्छितं स्वयमङ्कं प्रियमाददे वचः ॥ ३० ॥

---

कथिता आपत् आपत्तिर्येन 'विपत्त्यां विपदापदौ' इत्यमरः। एतादृशेन मुनिना विश्वामित्रेण क्षणं क्षणमात्रं 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। जोषं तूष्णीं 'तूष्णीमर्थे सुखे जोषं' अभूयत भवतेर्भावे लङ् ननु बहुप्रार्थनां विना कथं विश्वामित्रस्य कार्यं भवेदित्यत आह—महतामिति। महतां पुरुषाणां अभ्यर्थना प्रार्थना कदाचित् कस्मिंश्चित्काले गुरुः यो निर्बन्धः आग्रहः तेन विनष्टं नाशं गतं सुष्टु भावः सौष्ठवं यस्याः एतादृशी न भवति। अर्थान्तरन्यासालंकारः ॥ २७ ॥

परिपूतेति। भवति त्वयि अर्पितः दत्तः 'समब्राह्मणे दानमितिवत्' सम्प्रदानस्याधिकरणत्वविवक्षया सप्तमी। पृथुकः बालकः 'पृथुकः शावकः शिशुः' इत्यमरः। शुभया मङ्गलया द्विजानां ब्राह्मणानां आशीः आशीर्वादः तया परितः पूता परिपूता तनुः देहो यस्य स्वयं तव प्रियता अभीष्टता तया आवृतः व्याप्तः युक्त इति यावत् अतएव पृथ्वी विपुला कीर्तिः यशो यस्य स एतादृशः सन् श्वः उत्तरेद्युः समराय युद्धं कर्तुं तादर्थ्ये चतुर्थी अथवा क्रियार्थोपपदेति चतुर्थी यास्यति गमिष्यति। अत्र यद्यपि श्वः शब्दप्रयोगे यास्यतीति लृटः प्रयोगोऽनुचितः लुटा बाधात् वासरूपविधेर्लादेशेषु विकल्पबाधस्याऽभावात् तथापि लादेशेषु वासरूपविधिर्नास्तीत्यस्य प्रायिकत्वाभिप्रायेणेत्थमुक्तिः। अनुप्रासालंकारः ॥ २८ ॥

इतीति। इति पूर्वोक्तप्रकारेण सः पूर्वोक्तः समुदाहृतं प्रियं इष्टं येन एतादृशः नराणां ईश्वरः दशरथ इत्यर्थः। विश्वं सर्वं भुनक्ति अभ्यवहरतीति विश्वभुक् अग्निः क्विप्चेति क्विप् तस्य अग्नेः शरणं गृहं 'शरणं गृहरक्षित्रोः' इत्यमरः। वह्निशालामित्यर्थः। वस्तुं निवासाय वसेः 'तुमुन्ण्वुलौ' इत्यादिना तुमुन् अवस्तु 'अकारो वासुदेवः स्यात्' इति कोशात् विष्ण्ववताररामचन्द्ररूपवस्तु कांक्षति इच्छतीति अवस्तुकांक्षी तस्मै अथवा कांक्षिणे इति पृथगेव पदं इच्छते इत्यर्थः। कांक्षधातोः णिनिः एतादृशाय अस्मै शरणं रक्षकं अर्थयते इति शरणार्थी तस्मै सुप्यजातौणिनिः.. एतादृशाय. ऋषये. विश्वामित्राय अकारो. विष्णुः तद्रूपवस्तु रामचन्द्र इत्यर्थः। मुदा आनन्देन ददौ यच्छति स्म अनुप्रासः ॥ २९ ॥

चलित इति। तपश्चरतीति तपस्यन् तस्मिन् तपस्यति तप शब्दात् क्यङ् चलिते गन्तुं प्रवृत्ते सतीत्यर्थः। ऋषेः विश्वामित्रस्य नमस्यया नमस्कारहेतुना

समवेदि यतस्त्वदर्थिना कथितं यद्दुरतिक्रमं त्वया ।
अवधूय ततस्तदापदं चिनु बाणेन कुलोचितं यशः ॥ ३१ ॥
अविजित्य जयैषिणां सदा न भुवः शक्यतयाऽनुरक्षितुम् ।
ननु दिग्जयसंभृतो महाविभवोऽयं भवतः प्रसङ्गतः ॥ ३२ ॥
भुवनानि बिभर्ति कश्चन स्वजनानेव परः प्रयत्नतः ।
इतरस्तनुमेव केवलं प्रभुरन्यो भरणेऽपि नात्मनः ॥ ३३ ॥
इति पक्षचतुष्टये स्थिते रघवः पूर्वमुदस्य मानिनः ।
क्षपयन्ति यशः क्रमागतं न हि पक्षान्तरसम्परिग्रहात् ॥ ३४ ॥

---

इत्त्वर्थे तृतीया । प्रथम आहूतः आकारितः । तं सुत पुन चिराय चिरकालपर्यंत वर्जितं अंक उत्सग स्वय उपनीय आरोप्य प्रिय वचः आददे गृहीतवान् । विश्वामित्रप्रस्थानसमये दशरथो राम उत्सगमारोप्य मधुरभाषया किंचिदुपदिदेश इति भाव ॥ ३० ॥

प्रिय वचः आददे इत्युक्त किंतत् इत्यपेक्षायामाह । समवेदीति । यतः त्वां अर्थयते याचते इति त्वदर्थी तेन युष्मच्छब्दे उपपदे अर्थउपयाञ्चायां इत्यस्मात्णिनिः 'प्रत्ययोत्तरपदयोश्च' इति मपर्यंतभागस्यत्वादेश विश्वामित्रेण दुःखेन अतिक्रम्यते इति दुरतिक्रमं दुरुल्लङ्घनीयमित्यर्थः । ईषद्दुरिति खल् यत् कथित तत् त्वया समवेदि ज्ञातं संपूर्वकात् विद्धातोः कर्मणि लुङ् चिण् ततः तस्मात्कारणात् तस्य आपत् तदापत् तां अवधूय नाशयित्वा कुलस्य उचितं योग्यं कुलेन उचितं अभ्यस्तमिति वा यशः कीर्तिं बाणेन शरेण चिनु लभस्वेत्यर्थः। चिञ्चयने लोट् उतश्च प्रत्ययादिति हेर्लुक् ॥ ३१ ॥

अविजित्येति । जय अभीक्ष्ण इच्छतीति जयैषिणः तेषां जयैषिणां 'बहुलमाभीक्ष्ण्ये' इत्याभीक्ष्ण्ये णिनिः । अत्र सम्बन्धसामान्ये षष्ठी । अविजित्य सदा सर्वस्मिन्काले सदा सर्वकालं भुवः पृथिव्याः अनुरक्षितुं अनुपालयितुं न शक्यता नशक्यता नशब्देन सह सुप्सुपेति समासः । नशक्यायाः भावः नशक्यता तया अशक्यत्वाद्धेतोः 'हेतौ' इति तृतीया । अयं साम्प्रतिकः दिशां जयः ,दिग्जयः तेन सम्भृतः सम्पादितः महांश्चासौ विभवश्च महाविभवः भवतः तव प्रसङ्गात् इति प्रसंगतः ननु निश्चयेन ॥ ३२ ॥

परोपकारे महत्पुण्यमिति दर्शयति युग्मेन । भुवनानीत्यादिना । कश्चन पुरुषः भुवनानि विष्टपानि बिभर्ति पुष्णाति डुभृञ् धारणपोषणयोः लट् शपः श्लुः द्वित्व भृञामिदिति अभ्यासस्येत्वं । परः इतर इत्यर्थः प्रयत्नात् इति प्रयत्नतः आद्यादित्वात्तसिः स्वस्य आत्मनः जनाः लोकाः तान् आत्मीयानित्यर्थः । बिभर्तीति सर्वत्र इतरः पूर्वोक्ताभ्यां भिन्नः तनुमेव देहमेव केवलं इति भरणक्रियाविशेषणं बिभर्ति । अन्यः उक्तत्रितयादन्यः आत्मनः अपि स्वस्यापि भरणे पोषणे प्रभुः

जनमन्याहितप्रवर्त्तनं स्वयमेवाभिसरन्ति सम्पदः ।
नियतं निजकृत्यलम्पटः पुरुषः स्वार्थत एव हीयते ॥ ३५ ॥
पुरुषस्य कृतं भुजद्वयं प्रविधातुं द्वयमेव वेधसा ।
सुहृदामुदयश्च विद्विषामवलेपप्रतिघातमेव च ॥ ३६ ॥
शरणोपगतं न पाति यो न भिनत्ति द्विषतां समुन्नतिम् ।
न स बाहुरसाधनक्षमो नरवृक्षप्रभवः प्ररोहकः ॥ ३७ ॥

---

समर्थो न इति पूर्वोक्तप्रकारेण पक्षचतुष्टये पक्षाणां परिग्रहाणां चतुष्टय तस्मिन् स्थिते विद्यमाने सतीत्यर्थः । मानः क्षत्रियकुलाभिमानः अस्ति येषां ते मानिनः एतादृशा रघवः रघुकुलोत्पन्नाः रघुशब्दस्य तत्कुलोत्पन्ने लक्षणा पूर्वं पूर्वकल्प भुवनपालनरूपं पक्ष उदस्य त्यक्त्वा अन्यः पक्षः पक्षांतरं मयूरव्यंसकादित्वात् समासः । तस्य संपरिग्रहः स्वीकारः प्रथमपक्षेतरपक्षपरिग्रह इत्यर्थः । तस्मात् क्रमेण कुलपरंपरया आगतं प्राप्तं यशः कीर्तिं नहि क्षपयति भोजमते क्षप् धातोर्घटादित्वात् मित्त्वेन ह्रस्वत्वं ॥ ३३ ॥ ३४ ॥

जनमिति । सम्पदः संपत्तयः अन्येषां इतरेषां यद्धितं तद्विषये प्रवर्तते इति अन्यहितप्रवर्तनः तं प्रवर्तते 'अनुदात्तेतश्च हलादेरिति' युच् प्रत्ययः । साधनं कृता बहुल इति समासविधानात् । एतादृश जनं लोकं स्वयमेव आत्मनैव अन्य-प्रवृत्तिं विनैवेत्यर्थः अभिसरन्ति । अभिपूर्वात्सर्तेर्लट् नियत नियमेनैव यथास्या-त्तथा निपूर्वाद्यमेः नपुंसके भावे क्तः इत्यनेन क्तः अनुदात्तोपदेशवनतितनोत्या-दिना अनुनासिकलोपः । निजं आत्मीयं 'स्वके नित्ये निज त्रिषु' इत्यमरः । यत् कृत्यं कार्यं 'विभाषा कृवृषोः' इत्यनेन क्यप्प्रत्ययः तुगागमश्च तद्विषये लम्पटः लुब्धः स्वैकपर इति यावत् एतादृशः पुरुषः जनः स्वार्थात् इति स्वार्थतः आद्यादित्वात्सार्वविभक्तिकस्तसिः एव स्वार्थादेव हीयते भ्रश्यतीत्यर्थः । 'ओहाक् त्यागे' इति धातोः कर्मणि यकि 'घुमास्था-' इतीत्वम् । अर्थान्तरन्यासः ॥ ३५ ॥

पुरुषस्येति । वेधसा ब्रह्मणा 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः । सु शोभनं हृदयं येषां ते सुहृदः तेषां मित्राणामित्यर्थः । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपात-नात्साधुः । उदयं उत्कर्षं समृद्धिं समुच्चये विद्विषन्तीति विद्विषः तेषां 'सत्सूद्विष-द्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' द्विषेः क्विप् 'द्विड्विपक्षाहितेत्यमरः' । शत्रूणां अवलेपस्य गर्वस्य प्रति-घातं नाशं 'दर्पोऽवलेपोऽवष्टम्भः' इत्यमरः । प्रतिघात इत्यत्र बहुलग्रहणात् उपसर्गस्य घञ्यमनुष्ये बहुलं इति दीर्घो न भवति एवकारः पादपूरणार्थः । इति द्वयमेव कार्यद्वितयमेव प्रविधातुं कर्तुं पुरुषस्य मनुष्यस्य भुजयोः द्वय भुज-द्वयं तत् कृतं उत्पादितं ॥ ३६ ॥

शरणोपगतमिति । यः बाहुः शरणं रक्षितारं उपगतः प्राप्तः द्वितीयाश्रितेति समासः । 'शरणं गृहरक्षित्रोः' इत्यमरः । तं न पाति न रक्षति । पारक्षणे लुक्

परकृत्यजडो यशोऽर्जने जठरैकप्रवणो निरुत्सुकः।
पशुरेव बुधैर्निगद्यते यवसग्रासनिवृत्तमानसः ॥ ३८ ॥
न पशुः पुरुषाकृतिर्यतो नृगुणभ्रष्टतया न पूरुषः।
विरतव्रतपौरुषस्पृहः किमु कोऽपि द्रुहिणेन निर्मितः ॥ ३९ ॥
अकृतद्विपदुन्नतिच्छिदः श्रितसंरक्षणवन्ध्यकर्मणः।
पुरुषस्य निरर्थकः करः किल कण्डूयनमात्रसार्थकः ॥ ४० ॥

---

द्विषतां शत्रूणां ' द्विषद्द्वेषणदुर्हृदः ' इत्यमरः । समुन्नतिं समुत्कर्षं न भिनत्ति न विदारयति । भिदिर् विदारणे लट् । न नाशयतीत्यर्थः। साधने कार्यसाधने क्षमः शक्तः ' क्षमं शक्ते हिते त्रिषु ' इत्यमरः । साधनक्षमो न भवतीति असाधनक्षमः बाहुः भुजः न । किं तर्हि तत् इत्यपेक्षायामाह । नरवृक्षेति । स अकार्यकारी नर एव वृक्षः शाखी तस्मात् प्रभवः उत्पत्तिर्यस्य 'सप्तमीविशेषणेति' ज्ञापकात् व्यधिकरणो बहुव्रीहिः प्ररोहक अंकुरः अस्तीति शेषः । शुद्धापन्हुत्यलंकारः रूपकं च ' शुद्धापन्हुतिरन्यस्यारोपार्थो धर्मनिन्हव ' इति लक्षणात् ॥ ३७॥

परोपकारहीन पुरुष पुनश्च निंदति । परकृत्येति । परस्य इतरस्य यत् कृत्य कार्यं तद्विषये जडः अज्ञः ' जडोऽज्ञ एडमूकस्तु ' इत्यमरः । जठर उदर तस्मिन्नेकप्राणः केवलासक्तः तदेकपर इति यावत् यशसः कीर्तेः अर्जन संपादन तस्मिन् निरुत्सुकः अनुत्कण्ठः एतादृशः पुरुषः इति विशेष्यं अर्थलब्धं । यवसस्य तृणस्य ग्रासो भक्षणं ग्रसु ग्लसु अदने धञ् ' यवसं तृणमर्जुनं ' इत्यमरः । यवसग्रासान्निवृत्तं परावृत्त मानसं अंतःकरणं यस्य एतादृशः पशुरेव इति बुधैः पण्डितैः निगद्यते उच्यते निपूर्वात् गदव्यक्तायां वाचि अस्मात्कर्मणि लट् ॥ ३८ ॥

नेति । व्रत नियमः इदमुपलक्षण तपसः पुरुषस्य कर्म पौरुषं पुरुषशब्दात् युवादित्वादण् प्रत्ययः । व्रत च पौरुष च व्रतपौरुषे तयोः स्पृहा इच्छा विरता नष्टा व्रतपौरुष स्पृहा यस्य एतादृशः कोऽपि अनिर्वचनीयः प्राणी द्रुहिणेन ब्रह्मणा ' धाताब्जयोनिर्द्रुहिणो ' इत्यमरः । निर्मितः किमु उत्पादितः किमु । ननु व्रतपौरुषाभावे पशुरिति वक्तव्ये कथं सामान्यतः कोऽपि प्राणीत्युक्त इत्यत आह । नेति । पूर्वोक्तः अयं प्राणी पशुः न यतः यस्मात् कारणात् पुरुषाकृतिः पुरुषस्य आकृतिः आकारो यस्य स तथा । तर्हि पुरुषो वक्तव्यः इत्यत आह । नृगुण इति । नुः मनुष्यस्य गुणाः नृगुणाः तैः भ्रष्टः रहितः तस्य भावः नृगुणभ्रष्टता तया पूरुषः मनुष्यः न भवति अतः कोऽपीत्युक्तमिति भावः । अत्रेदमनुमान विमतः पशुर्न पुरुषाकृतिमत्वात् देवदत्तवत् । विमतः पुरुषो न नृगुणभ्रष्टत्वात् महिषवत् इति । अनुप्रासालंकारः ॥ ३९ ॥

अकृतेति । द्विषतां शत्रूणां उन्नतिः उत्कर्षः तस्य या छिद् छेदः संपदादित्वात् क्विप् । कृता अकृता अकृता द्विपदुन्नतिच्छिद्येन तस्य शत्रुकर्ष-

भवने रसनानि देहिनां कृतयोगानि सुखेषु भूरिशः ।
न न सन्ति तदेषु दुर्लभं प्रभु यस्स्यादमयं प्रजल्पितुम् ॥ ४१ ॥
भव जीवितसंशयेष्वपि न परित्याज्यमिदं कुलव्रतम् ।
सुलभं प्रतिजन्म जीवितं हृदयं धर्मरतं हि दुर्लभम् ॥ ४२ ॥
विरतः नावगामभिषजत्यभिषेकोत्सवदुन्दुभिः क्षणात् ।
इतिपातिनि जीविते कथं सुखमालम्ब्य सृजन्ति सत्पथम् ॥ ४३ ॥

---

विपाकमकुर्वन् इत्यर्थः । पितॄणां आश्रितानां यत्परक्षण पालनं तेन वंध्य विफलं एतादृशं कर्म क्रिया यस्य आश्रितपालनमप्यकुर्वन्नित्यर्थः । एतादृशस्य पुरुषस्य जातस्य कण्डूयने गात्रेण तदेव कण्डूयनमात्रं तेन हेतुना सार्थकः सफलः कंडूयन-मात्रफलोपीत्यर्थः । एतादृशः करः निर्गतः अर्थः प्रयोजनं यस्मात्स निरर्थकः किल 'प्रादिभ्यो धातुजस्य वाच्यो वेति समासः' । अस्तीति शेषः ॥ ४० ॥

यशसि व्रज यत्नमुज्झितस्वसुखप्रीतिरुपैहि वा तपः ।
अधिगम्यमसारमस्थिरं विषयास्वादसुखं पशोरपि ॥ ४४ ॥
यशसा सुकृतेर्न संग्रहो नियतं धर्म्ममुपार्जतो यशः ।
अनुगच्छ तदेकसङ्ग्रहादुभयं लभ्यमितीह सत्पथम् ॥ ४५ ॥
ननु तावदिहैव सज्जनप्रतिरक्षाविधिगम्यमक्षयम् ।
फलमिन्दुकरोपरञ्जितप्रहसत्कौमुदकोमलं यशः ॥ ४६ ॥

---

हृदिति समासः ' ' ऋक्पूरेति ' समासांतः कथं सृजंति उत्सृजंतीति यावत् सृज-विसर्गे लिट् ॥ ४३ ॥

यशसीति । उज्झिता त्यक्ता ' त्यक्त हीने विधुत समुज्झितं धूतमुत्सृष्टे ' इत्यमरः । स्वसुखे आत्मीयसुखे प्रीतिः प्रेमा येन एतादृशः त्वं इदं अध्याहार-लब्धं यशसि कीर्तौ विषये यत्नं प्रयत्न व्रज गच्छ, वा अथवा तपः तपश्चर्या उपैहि प्राप्नुहि 'एत्येधत्यूठ्सु ' इति वृद्धिः । अत्र उपेहीति पाठो योग्यः पुरस्ताद-पवादन्यायेन एत्येधत्यूठ्सु इति वृद्धिः 'एङि पररूपमित्यस्यैव' बाधिका ननु ओ-माङोश्चेत्येतस्य तेन ओमाङोश्चेति पररूपमेव भवतिं इति स्पष्ट कौमुद्यां । अस्थिरं चचलं असार नास्ति सारो यस्मिन् तत् असार एतादृशं विषयाणां आस्वादः अनुभवः तत्संबंधि यत्सुख तत् पशोरपि अधिगम्यते प्राप्यते इत्यधिगम्य प्राप्य-मित्यर्थः । काव्यलिंगमलङ्कारः ॥ ४४ ॥

यशसेति । सुष्ठु कृतिः सुकृतिः तस्याः पुण्यस्य यशसा कीर्त्या साधनेन 'यशः कीर्तिः समज्ञाचेत्यमरः' संग्रहः लाभ इत्यर्थः । 'ग्रहवृदृनिश्चिगमश्चेति ' अप् । न भवति धर्मं पुण्य उपार्जतीति उपार्जन् तस्य यशः कीर्तिः नियतं नियमेन भवतीति शेषः । यशसा पुण्य न जायते पुण्यमुपार्जतस्तु नियमेन यशो जायते इति तात्पर्यं । तत् तस्मात्कारणात् एकस्य धर्मस्य संग्रहात् लाभादित्यर्थः । उभयं उभौ पुण्ययशसी अवयवौ यस्य तदुभयं ' उभादुदात्तो नित्यमित्ययच् ' । लभ्यं योग्य लभ्यं ' पोरदुपधात् ' इति यत् । इति हेतोः इह अस्मिन् लोके सतांपंथा पथाः सत्पथं ' ऋक्पूरब्धूः पथामित्यनेन ' समासान्तः अप्रत्ययः सन्मार्गं अनुगच्छ प्राप्नुहि इत्यर्थः । अनुपूर्वात्गमेर्लोट् मध्यमपुरुषः ॥ ४५ ॥

नन्विति । तावत् पूर्वं इहैव अत्रैवेत्यर्थः । सतः ये जनाः लोकाः तेषां यः प्रतिरक्षाविधिः पालनकृत्यं तेन गम्यं प्राप्यं अक्षयं क्षयो नाशः तद्रहितं इंदोः चंद्रस्य कराः किरणाः तैः उपरंजितं मिश्रितमित्यर्थः । अतएव प्रहसत् हास्ययुक्तं विकसितमिति यावत् एतादृशं यत्कौमुदं कमल प्रकाशित्वात्सादृश्येन तद्वत्कोमलं मृदुलं ' कोमलं मृदुलं मृदु ' इत्यमरः । एतादृशं यशः कीर्तिः फलं अस्तीति शेषः । सज्जनरक्षणात् कीर्तिरूपं फलं प्राप्नुयमसंशयं इति भावः ॥ ४६ ॥

प्रयतः प्रतिपद्य तत्तपोवनमुग्रं त्वमुदग्रविक्रमः ।
सहसा सह कौशिकेन तं यमिनां कृन्त निबर्हकं युधि ॥ ४७ ॥
पितुरित्थमनाकुलं वचस्तदुपश्रुत्य ननाम पादयोः ।
सह सिद्धवनं यियासुना समरायावरजेन राघवः ॥ ४८ ॥
तमसि स्फुरदंशुमद्द्युतिप्रहते संसदि सौखरात्रिकः ।
यतये निरयायितरसुतौ नृपतिर्मन्त्रपवित्रदंशितौ ॥ ४९ ॥
अनुजग्मतुरश्रुवर्षिणो हृदयैः पौरजनस्य राघवौ ।
मुनिमेनमनाकुलातुरैरनुयातावविवेकचिन्तया ॥ ५० ॥

---

प्रयत इति । तत् तस्मात् कारणात् परोपकारस्य अस्मत्कुलव्रतत्वाद्धेतोः उदग्रः उच्चः महानिति यावत् विक्रमः पराक्रमो यस्य 'उच्चप्रांशून्नतोदग्रोच्छ्रिताः' इत्यमरः । प्रयतः पवित्रः 'पवित्रः प्रयतः पूतः' इत्यमरः । एतादृशः त्व कौशिकेन कुशिकस्य अपत्यं पुमान् कौशिकः 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् विश्वामित्रेण सह उग्रं भयानकं तपोवनं तपसः तपश्चर्यायाः वनं अरण्यं प्रतिपद्य प्राप्य सहसा अकस्मात् 'अतर्किते तु सहसा' इत्यमरः । अथवा सहसा बलेन 'सहो बलं सहामार्गौ' इत्यमरः । युधि आजौ 'समित्याजिसमिद्युधः' इत्यमरः । यमिनां मुनीनां निबर्हयति नाशयति इति निबर्हकः तं निपूर्वाद्बृहतेर्ण्वुल् एतादृशं तं राक्षसं कृन्त छिंधि । कृती छेदने लोट् हेर्लुक् । अनुप्रासः ॥ ४७ ॥

पितुरिति । राघवः रघोः गोत्रापत्यं राघवः 'तस्यापत्यमित्यण्' पितुः दशरथस्य अनेन प्रकारेण इत्थं 'इदमस्थमुः एतेतौरथोः' इति इदादेशः पूर्वोक्तप्रकारेण न आकुलं अनाकुलं असंकीर्णं यथास्यात्तथेत्यर्थः । तत् पूर्वोक्तं वचः भाषणं उपश्रुत्य आकर्ण्य समराय युद्धाय तादर्थ्ये चतुर्थी सिद्धानां वनं सिद्धवनं यातुमिच्छुः यियासुः तेन यियासुना जिगमिषुणा अवरजेन अपरस्मिन्काले जातः अवरजः तेन लक्ष्मणेन सह पादयोः ननाम नमनं चक्रे अनुप्रासः ॥ ४८ ॥

तमसीति । तमसि अन्धकारे स्फुरंतः अंशवः स्फुरदंशवः ते सन्ति यस्य स्फुरदंशुमान् सूर्यः तस्य या द्युतिः कांतिः तया प्रहते सति नाशिते सति सूर्योदये सतीत्यर्थः । संसदि सभायां यतये मुनये विश्वामित्रायेति भावः । सुखा रात्रिः सुखरात्रिं तां पृच्छतीति सौखरात्रिकः । 'पृच्छतौ सुस्नातादिभ्यः' इत्यनेन ठक्प्रत्ययः । एतादृशः नृणां पतिः नृपतिः आर्दो मंत्रेण पवित्रौ पश्चाद्दंशितौ पूर्वकालैकेति समासः । मंत्रेण कृतशरीररक्षौ कवचधारिणौ चेत्यर्थः । एतादृशौ सुतौ निरयायतरां निर्गमयामास अतिशयेन इत्यस्मात्तिङन्तात्तरप् चाटि द्विरुक्तः । अनुप्रासः ॥ ४९ ॥

अन्विति । राघवौ रामलक्ष्मणौ अश्रूणि नेत्रोदकानि अभीक्ष्णं वर्षन्तीति अश्रु-

**यमिनः पथि चैतिहासिकादुपशृण्वन् विविधाश्रयाः कथाः ।**
**क्लममथं न विवेद राघवो बलयाऽऽनीतबलः स विद्यया ॥ ५१ ॥**
**अथ वज्रभृतः सुहृद्द्रुहो विषयो यः स्नपनेन विश्रुतः ।**
**नृवरो निजगाद तत्पुरं पिशिताशीनिहतं निरीक्ष्य सः ॥ ५२ ॥**

---

वर्षी तस्य अश्रुवर्षिणः पुरे नगरे भवः पौरः तत्र भव इत्यण् । एतादृशो यो जनः लोकः तस्य अशिव अकल्याण स्वस्य रामलक्ष्मणयोर्वा तत्सम्बन्धिनी एका केवला चिंता तया अनाकुलानि अव्यग्राणि एतादृशानि यानि आतुराणि दीनानि आशीर्वचितारूपैकविषयासक्तत्वात् एकाग्रत्वेन अनाकुलत्वं अव्यग्रत्व दीनत्वकारण तु स्पष्टमेव । एतादृशैः हृदयैः अतःकरणैः सह एन पूर्वोक्त मुनिं विश्वामित्र अनुजग्मतुः अनुययतुः । अनुप्राससहोक्त्यलकारौ ॥ ५० ॥

यमिन इति । नः समुच्चये । पथि मार्गे ऐतिहासिकात् इतिहास वेद इति ऐतिहासिकः ' आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ' इति ठक् । तस्मात् यमिनः विश्वामित्रात् ' आख्यातोपयोगे ' इत्यपादानत्व । विविधाः अनेकप्रकाराः अर्थात् विषयाः आश्रया यासां एतादृशाः कथाः गोष्ठीः उपशृणोतीति उपशृण्वन् श्रवणकर्ता बलया एतन्नाम्न्या विद्यया मन्त्रविशेषरूपास्त्रेण आनीत प्रापित बल सामर्थ्यं यस्य एतादृशः राघव रामचन्द्रः क्लमथ क्लेश ग्लानिं वा न विवेद न जानाति स्म । उक्त च वाल्मीकीये ' रामेति मधुरा वाणीं विश्वामित्रोऽभ्यभाषत । गृहाण वत्स सलिल माभूत्कालस्य पर्ययः । मन्त्रग्राम गृहाण त्व बलामतिबलां तथा । न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः । न च सुप्त प्रमत्त वा धर्षयिष्यन्ति नैर्ऋताः । क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबला चैव पठतस्तात राघव । ततो रामो जल स्पृष्ट्वा प्रहृष्टवदनः शुचिः । प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः । विद्यासमुदितो रामः शुशुभे भीमविक्रम ' इत्यादि ॥ ५१ ॥

अथेति । अथ रामस्य विश्वामित्रात् विद्याप्राप्त्यनतर सः प्रसिद्धः नृषु वरः श्रेष्ठः विश्वामित्रः सुहृद्द्रुहः सुहृदे मित्राय द्रुह्यति जिघांसतीति सुहृध्रुद् अत्र सुहृत्पदेन वृत्रो गृह्यते । तस्य दैत्यत्वेन इन्द्रबधुत्वात् अथवा वृत्रस्य चित्रकेतोरवतारत्वेन विष्णुभक्तत्वादिन्द्रसुहृत्त्व तस्य । वज्र कुलिश बिभर्तीति धारयतीति वज्रभृत् इन्द्रः तस्य स्नपनेन अभिषेचने स्नाधातोर्णिजतात् ल्युट् ' ग्लास्नावनुवमा च ' इति मित्वात् ' मितां ह्रस्व' इति ह्रस्वः । य विश्रुतः प्रसिद्धः एतादृशः विषयः देशः मलदकरूषाख्यनामा आसीत् इति शेषः । तत्पुर तस्य देशस्य पुर पिशिताशीनिहत पिशित मांस अश्नाति भक्षयति इति पिशिताशी राक्षसी ताडकेत्यर्थः । पिशितशब्दोपपदे अश् धातोः कर्मण्यण् अण्णतत्वान्ङीप् । तया निहत ध्वस्तमित्यर्थ । एतादृश निरीक्ष्य विलोक्य निजगाद उवाच निपूर्वाद्गद् व्यक्तायां वाचि अस्माल्लिट् । इन्द्रस्याभिषेचनकथा वाल्मीकीये ' पुरा वृत्रवधे राम मलेन समभिप्लुतं । क्षुधा चैव

न भुनक्ति पुरा पुरश्रियं परितः कीर्णकरङ्कसङ्करा ।
अवमग्नशिरःकपालदृग्विवरप्रोद्गतशाद्वला मही ॥ ५३ ॥

फणिभिः प्रतिबिम्बमातरः शितिभिर्भान्ति शिरोऽवलम्बिभिः ।
रचितैरिव वेणिबन्धनैर्विरहादस्य पुरस्य शासितुः ॥ ५४ ॥

---

सहस्राक्षं ब्रह्महत्यासमाविशत् । तमिंद्रं मलिनं देवा ऋषयश्च तपोधनाः । कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन् । इह भूम्यां मलं दत्वा देवाः कारूषमेव च । शरीरजं महेंद्रस्य ततो हर्षं प्रपेदिरे । निर्मलो निष्करूषश्च शुद्ध इंद्रो यथाभवत् । ततो देशस्य सुप्रीतो वरं प्रादादनुत्तमं । इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः । मलदाश्च करूषाश्च ममांगमलधारिणौ ' इत्यादि ॥ ५२ ॥

नेति । परितः समंततः ' समंततस्तु परितः सर्वतो विष्वगित्यपि ' इत्यमरः । कीर्णाः इतस्ततो विक्षिप्ताः ये करंकाः अस्थीनि ' करंको मस्तके शस्यनालिकेर-फलास्थिनि ' इति मेदिनी । स एव संकरः अवकरो यस्यां अवमग्नानि मृत्तिकांतः प्रविष्टानि यानि शिरः कपालानि शिरोस्थीनि तत्संबंधीनि यानि दृग्विवराणि दृष्टिच्छिद्राणि तेभ्यः प्रोद्गताः ऊर्ध्वं प्राप्ताः शाद्वलाः कोमलतृणहरितभूभागा यस्यां 'नडशादाड्ड्वलच्' इति ड्वलच् प्रत्ययः । एतादृशी मही पृथ्वी पुरस्य नगरस्य या श्रीः शोभा तां पुरा न भुनक्ति नैव भुनक्ति नैव पालयतीत्यर्थः । भुज-पालनाभ्यवहारयोः लट् । पूर्ववत् एतस्याः पुरः शोभा नास्तीति तात्पर्यं । पुरा-शब्दस्य निश्चयार्थत्वे ' यावत्पुरा निपातयोर्लट् ' इत्यप्रवृत्तेः ' भुजोनवने ' इत्यत्र अनवने इति पर्युदासात् आत्मनेपदं न । अत्र वर्तमाने लट् अनेनैव लट्प्रत्ययः न तु यावत्पुरेति सूत्रेण । तत्र भविष्यतीत्यस्यानुवृत्तेः । प्रकृते भविष्यत्कालस्य असंभवात् ॥ ५३ ॥

फणिभिरिति । प्रतिबिंबानि प्रतिकृतयः ' प्रतिमानं प्रतिबिंबं प्रतिमा प्रतियातना प्रतिच्छाया ' इत्यमरः । एतादृश्यः या मातरः गौर्यादयः ताः शिरोवलंबिभिः शिरःसु मस्तकेषु अवलंबने अवरसंते इति शिरोवलंबिनः तैः ' सुप्यजातौ णिनिस्ताच्छील्ये ' इति णिनिः । शितिभिः कृष्णवर्णैः ' शिती धवलमेचकौ ' इत्यमरः । एतादृशैः फणाः फटाः संति येषां ते फणिनः ' व्रीह्यादिभ्यश्चेति ' इनिः अथवा पुंल्लिंगादपि अस्मात् 'अत इनिठनौ' इति इनिः । अस्य पुरोवर्तिनः पुरस्य नगरस्य कर्मणि षष्ठी । शास्तीति शासिता तस्य शासितुः पालयितुरित्यर्थः । विरहात् वियोगात् रचितैः कृतैः वेणीनां प्रवेणीनां बंधनानि तैरिव भांति शोभंते । प्रियविरहितानां स्त्रीणां एकवेणीधारणं शास्त्रसिद्धं । उक्तं च याज्ञवल्क्येन ' क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनं । हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ' इति ॥ ५४ ॥

भुवि भोगिनिभं विलोकयंस्तुदुमो हारमहार्यवेपथुः।
हरिहस्तहतस्य दन्तिनः कररन्ध्रे निभृतं निलीयते ॥ ५५ ॥
प्रतिमा विशदेन लूतिकापटलेनावृतदृष्टिरीक्ष्यते ।
रुदितैरिव पुष्पितेक्षणा विपुलत्रासकृतैरनेकशः ॥ ५६ ॥
श्लथभित्तिविरूढभूरुहस्थिरमूलाग्रविनिर्गमक्षतम् ।
स्फुटतीव भृशं शुचातुरं हृदयं तद्गृहचित्रयोषिताम् ॥ ५७ ॥

भुवीति । भुवि भूतले भोग अस्यास्तीति भोगी सर्पः तेन निभः सदृशः 'निभसंकाशनीकाश' इत्यमरः । त हारं मुक्तावलीं विलोकयन् अतएव हर्तुं दूरीकर्तुं योग्यः हार्यः 'ऋहलोर्ण्यत्' इति ण्यत् । न हार्यः अहार्यः एतादृशः वेपथुः कपो यस्य 'अथ वेपथुः कंप.' इत्यमरः । एतादृशः तुद्रुमः उंदुरः 'उदुरुस्तुदुमोरंध्रबभ्रु' इति त्रिकाण्डशेषः । हरेः सिंहस्य यो हस्तः । चपेटा तेन हतस्य एतादृशस्य दंतिनः हस्तिनः करस्य हस्तस्य रंध्रं छिद्रं तस्मिन् निभृत गुप्तं यथास्यात्तथा निलीयते लीनोभवति । अनुप्रासः ॥ ५५ ॥

प्रतिमेति । विशदेन पाण्डुरेण 'विशदश्वेतपाण्डुराः' इत्यमरः । लूतिकानां ऊर्णनाभानां "लूतास्त्री तंतुवायोर्णनाभमर्कटकाः समाः" इत्यमरः । पटलेन समूहेन 'समूहे पटलं न ना' इत्यमरः । तंतुवायसूत्रजालेनेत्यर्थः आवृता वेष्टिता वृञ्वरणे कर्मणि क्तः दृष्टिर्यस्याः सा एतादृशी प्रतिमा प्रतिकृतिः आलेख्यमिति यावत् जात्येकवचनं । विपुलः अतिशयितः यस्त्रासः दुःखं तेन कृतानि अनेकशः अनेकानीति यावत् एकैकश इति भाष्यप्रामाण्येन स्वार्थे शस् इत्यावेदितं प्राक् । यानि रुदितानि रोदनानि तै. पुष्पाणि संजितानि येषां तानि पुष्पितानि तारकादित्वादितच् प्रत्ययः तानि ईक्षितानि नेत्राणि यस्याः सा 'ईक्षण चक्षुरक्षिणीत्यमरः' एतादृशीव ईक्ष्यते अवलोक्यते जनैरिति शेषः । ईक्षतेः कर्मणि लट् । उत्प्रेक्षालंकारः ॥ ५६ ॥

श्लथेति । श्लथाः शिथिला या भित्तयः कुड्यानि 'भित्तिः स्त्रीकुड्यमेडूक' इत्यमरः । तासु विरूढाः प्रादुर्भूताः एतादृशा ये भूरुहः वृक्षाः रुहधातोः 'इगुपधज्ञाप्रीकिरः कः' इति क प्रत्ययः । भूशब्देन षष्ठीसमासः । तेषां वृक्षाणां यानि स्थिराणि मूलानि बुध्नाः 'मूलं बुध्नोंघ्रि' इत्याद्यमरः । तेषां अग्राणि प्रांतभागाः तस्य यो विनिर्गमः बहिर्गमनं तेन क्षतं विदीर्णं भृशं अत्यतं शुचा शोकेन 'मन्युशोकौ तु शुक् स्त्रियां' इत्यमरः । आतुरं अभ्यमितं पीडितमित्यर्थः । एतादृशं तस्याः नगर्याः संबंधीनि यानि गृहाणि सदनानि तत्संबंधिन्यः याश्चित्रयोषितः आलेख्यरूपस्त्रियः 'आलेख्याश्चर्ययोश्चित्रमित्यमरः' तासां हृदयं स्फुटतीव द्विधा भवतीवेत्यर्थः । वर्षादिना भित्तीनां शैथिल्यात् तदुत्पन्नवृक्षमूलबहिर्निर्गमनेन भित्तिलिखितचित्रस्त्रीहृदयानां द्वैधीभावात् । शोकेन तानि हृदयानि विदीर्णानीवेति उत्प्रेक्ष्यते । उत्प्रेक्षालंकारः ॥ ५७ ॥

नकुलः परिजीर्णवैबुधप्रतिबिम्बाननमध्यरन्ध्रतः ।
परिकर्षयति क्रुधा यथा स्फुरितं तद्रसनं सरीसृपम् ॥ ५८ ॥
इति जल्पति तत्र राक्षसी पुरतः प्रादुरभूद्भिदेलिमा ।
मकराकरपायिधामभिः क्षतयक्षाकृतिरुग्रविग्रहा ॥ ५९ ॥

---

नकुल इति । नकुलः सर्पघातकः प्राणिविशेषः ( मुंगूस इति भाषायां ) 'नकुलस्तु पांडवप्राणिभेदयोः' इति हैमः । विबुधानां देवानां इमानि वैबुधानि तस्येदमित्यण् 'त्रिदशा विबुधाः सुराः' इत्यमरः । एतादृशानि यानि प्रतिबिंबानि प्रतिकृतयः 'प्रतिमानं प्रतिबिंबं' इत्यमरः । परिजीर्णानि पूजाद्यभावाज्जीर्णतां प्राप्तानि यानि वैबुधप्रतिबिंबानि तेषां यानि आननानि मुखानि तत्संबंधीनि यानि मध्यरन्ध्राणि मध्यच्छिद्राणि मध्यरन्ध्राणीत्यत्र 'विशेषणं विशेष्येण' बहुलमिति समासः तेभ्य इति मध्यरन्ध्रतः आद्यादित्वात्तसिः अपादाने पंचमी । 'क्रुधा क्रोधेन क्रुध् क्रोधे' संपदादित्वाद्भावे क्विप् क्रोधेनेत्यर्थः । स्फुरितं चलायितं तेषां प्रतिबिंबानां रसनं जिह्वां जातिविवक्षायामेकवचनं । अथवा पूर्वत्र एकवचनांतेनैव विग्रहः कार्यः 'रसनं ध्वनिते स्वादे रसज्ञारशनयोरपि' इति हैमः । सरीसृपं कुटिलं सर्पतीति सरीसृपः 'नित्यं कौटिल्ये गतौ' इति सर्पतेः यङंतात् पचाद्यचि 'यङोऽचि चेति लुक्' 'रीगृदुपधस्य चेति रीगागमः' न धातुलोप इति गुणनिषेधः । सरीसृपं यथा सर्पमिवेत्यर्थः । 'भवाद्यथा तथैवैवं' इत्यमरः । 'सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः । ... सरीसृपः' इत्यमरः । परिकर्षयति आकर्षयतीत्यर्थः परिपूर्वात्कृष विलेखने इत्यस्मात् णिजन्तात् लट् । देवप्रतिमानामपि दुर्दशा हाकष्टमिति भावः ॥ ५८ ॥

इतीति । तत्र तस्मिन् नृवरे विश्वामित्रे इति पूर्वोक्तप्रकारेण जल्पति भाषते इति जल्पन् तस्मिन् जल्पति भाषमाणे सतीत्यर्थः । जल्प जल्प व्यक्तायां वाचि शतृप्रत्ययः । यस्य च भावेनेति सप्तमी । पुरतः अग्रतः दिक्शब्देभ्य इत्यधिकारे अस्तीत्यर्थे बाहुलकात् अतसुच् 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । भिद्यते इति भिदेलिमा भिदिर् विदारणे इत्यस्मात् 'कर्मार्थे केलिमर्प्रत्ययः' । मकराणां ग्राहाणां आकरः खनिः समुद्र इत्यर्थः तं पिबतीति मकराकरपायी अगस्त्यः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । तस्य यानि धामानि तेजांसि तैः क्षता नष्टा यक्षाकृतिः यक्षदेहो यस्याः अगस्त्यकोपेन नष्टयक्षदेहा इत्यर्थः । अत एव उग्रः भयंकरः विग्रहः देहो यस्याः सा एतादृशी राक्षसी ताटका राक्षस् शब्दात् स्त्रियां 'संज्ञायाम्' इति खरादिकाः प्रकृतिलिंगवचनेत्यादिना राक्षस् शब्दस्य नपुंसकत्वेऽपि अजादित्वात् टाप् ङीप् च । प्रादुरभूत् आविर्बभूव । उक्तं च रामायणे 'सुन्दे तु निहते राम अगस्त्यमृषिसत्तमं । ताटका सह पुत्रेण प्रधर्षयितुमिच्छति । भक्षार्थं जातसंरम्भा गर्जन्ती साभ्यधावत । आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः । राक्षसत्वं

नवकृत्तविलासिनीकरप्रसवोत्तंसविभूषितानना ।
नृशिरस्ततिमेखलागुणस्फुरणक्रूरकटु क्वणत्कटिः ॥ ६० ॥
परितः स्फुरदन्त्रपाश्यया परिणद्धाकुलकेशसन्ततिः ।
घनशोणितपङ्ककुङ्कुमप्रविलिप्तस्तनकुम्भभीषणा ॥ ६१ ॥

---

भजस्वेति मारीचं व्याजहार सः । अगस्त्यः परमामर्षस्ताटकामपि शप्तवान् । पुरुषादी महायक्षी विकृता विकृतानना । इदं रूपं विहायाशु दारुणं रूपमस्तु ते । सैषा शापकृतामर्षा ताटका क्रोधमूर्छिता । देशमुत्सादयत्येनमगस्त्याचरितं शुभं । इत्यादि ॥ ५९ ॥

तां राक्षसीं वर्णयति । नवेति । नवाः नूतनाः 'नवीनो नूतनो नवः' इत्यमरः । कृत्ताः छिन्नाः कृती छेदने कर्मणि क्तः 'श्वीदितो निष्ठायाम्' इतीण् निषेधः' एतादृशाः ये विलसन्ति तच्छीला विलासिन्यः स्त्रियः विपूर्वाल्लसेः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः' अथवा प्रशस्ता विलासाः सन्ति यासां ता विलासिन्यः विपूर्वाल्लसतेर्भावे घञ्ततात् 'अत इनिठनाविति' इनिः 'ऋन्नेभ्यो ङीप्' इति ङीप् । तासां कराः हस्ताः त एव प्रसवोत्तंसाः पुष्पभूषणानि 'फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । तैः विभूषितं अलंकृतं आननं मुखं यस्याः एतादृशी अथवा नवकृत्तविलासिनीकरसम्बन्धिनः ये प्रसवोत्तंसाः पुष्पभूषणानि तैः विभूषितं शोभितं आननं मुखं यस्याः सा नृणां मनुष्याणां शिरांसि मस्तकानि तेषां ततिः पङ्क्तिः येषु एतादृशा ये मेखलागुणाः काञ्चीतन्तवः 'स्त्रीकट्यां मेखला काञ्चिः' इत्यमरः । तेषां यत्स्फुरणं तेन क्रूरं कटु कर्णकठोरं च यथास्यात्तथा रणन्ती शब्दायमाना कटिः श्रोणिः यस्याः सा रणशब्दे शतृप्रत्ययः । स्त्रियाः पुंवदिति पुंवद्भावः ॥ ६० ॥

परितः समन्ततः 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । स्फुरन्ती शोभमाना या अन्त्राणां पुरीतताम् पाश्या पाशसमूहः 'पाशादिभ्यो यः' इति समूहार्थे यप्रत्ययः समूहे इत्यनुवर्तमाने 'पाश्या गव्येत्यमरः' । अर्थो-द्घातितप्राणिनामित्यर्थः तया करणेन परिणद्धा बद्धा नह बंधने क्तप्रत्ययः । आकुलानां विकीर्णानां केशानां कचानां 'कचः केशः शिरोरुहः' इत्यमरः । सन्ततिः समूहो यस्याः सा घनं निबिडं यच्छोणितं रक्तं तस्य यः पङ्कः कर्दमः तदेव कुङ्कुमं केशरं तेन प्रविलिप्तौ यौ स्तनकुम्भौ स्तनघटौ ताभ्यां भीषणा भयदा भीधातोर्णिजन्तात् 'ण्यासश्रन्थो युच्' इति युच् 'भियो हेतुभये षुक्' इति षुगागमः । एतादृशी राक्षसी प्रादुरभूत् इति पूर्वश्लोकस्थक्रियापदेनान्वयः । अत्र बीभत्सरसः । राक्षसी आलम्बनविभावः । रक्ताश्रमालादि उद्दीपनविभावः इति यथायथमुन्नेयम् । तदुक्तं 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ॥ आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः' इति ॥ ६१ ॥

इति तामतिभीमदर्शनामभिवीक्ष्योभयतस्तपोधनम्।
धनुषोरवनीभुजः सुतौ सपदि न्यस्तशरावतिष्ठताम्॥ ६२॥
स वसिष्ठतनूजपातितक्षितिपस्वर्वसतिप्रदो मुनिः।
घृणिनो नृपतेः कृतस्मयस्तनयं वीक्ष्य जगाविदं वचः॥ ६३॥

इतीति। इति पूर्वोक्तप्रकारेण अतिशयित भीमं भयकर 'घोरं भीमं भयानकं' इत्यमरः। दर्शनं अवलोकनं यस्याः एतादृशीं तां राक्षसीं अभिवीक्ष्य अवलोक्य अवनीं पृथ्वीं भुनक्ति पालयति इत्यवनीभुक् 'क्ष्मावनिर्मेदिनी मही' 'भुज्पालनाभ्यवहारयोः' इत्यस्मात् क्विप्चेति क्विप्। तस्य दशरथस्य सुतौ पुत्रौ रामलक्ष्मणौ तप एव धनं यस्य स तपोधनः विश्वामित्रः तं उभयतः उभयोर्भागयोरित्यर्थः। उभशब्दात्सप्तम्यंतात् इतरेभ्योपि दृश्यते इति तसिल्। 'उभसर्वतसोः कार्या' इत्यनेन द्वितीया। सपदि तद्दर्शनक्षणे 'सद्यः सपदि तत्क्षणे' इत्यमरः। धनुषोः कार्मुकयोः 'धनुश्चापौ धन्वशरासन' इत्यमरः। न्यस्तौ नियुक्तौ शरौ बाणौ याभ्यां एतादृशौ अतिष्ठता आस्तामित्यर्थः॥ ६२॥

स इति। वसिष्ठस्य ये तनूजाः तन्वाः देहात् अजनिषत इति तनूजाः 'पञ्चम्यामजातौ' इति जनेर्डप्रत्ययः। डित्वसामर्थ्यादभस्यापिटेर्लोपः तैः पातितः शापेन चण्डालतां प्रापितः एतादृशः यः क्षितिपः राजा त्रिशंकुरिति यावत् 'आतोनुपसर्गे' कः इति कप्रत्ययः। तस्य स्वर्वसतिः स्वर्गवासः तां प्रददाति इति स्वर्वसतिप्रदः 'प्रेदाज्ञः' इति कः एतादृशः मुनिः विश्वामित्रः। वसिष्ठपुत्रशापेन चण्डालतां प्राप्तः त्रिशंकुः विश्वामित्रं गतः तेन च तपःसामर्थ्येन स्वर्गं प्रापितः इति कथा वाल्मीकीये बालकांडे प्रसिद्धा। कृतः स्मयः ईषद्धास्य येन एतादृशः सन् एतादृश्यामपि दुष्टायां राक्षस्यां दया न युक्ता तथाप्ययं तद्विषये घृणी इति स्मयकारणं तदाह घृणिन इति। पितृगुणा पुत्रे आयांति इत्यभिप्रायेणेदं विशेषणं। घृणा करुणा अस्यास्तीति घृणी व्रीह्यादित्वादिनिः 'जुगुप्सा करुणा घृणेत्यमरः'। एतादृशस्य नृपतेः दशरथस्य तनयं पुत्रं रामचंद्रमित्यर्थः। वीक्ष्य विलोक्य इदं वक्ष्यमाणं वचः भाषणं जगौ उवाच यर्थः। गैशब्दे लिट्। अनुप्रासालंकारः। 'ततस्त्रिशंकोर्वचनं श्रुत्वा क्रोधसमन्वितः। ऋषिपुत्रशतं राम राजानमिदमब्रवीत्। प्रत्याख्यातोसि दुर्बुद्धे गुरुणा सत्यवादिना। तं कथं समतिक्रम्य शाखांतरमुपेयिवान्। इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः। न चातिक्रमितुं शक्यं वचनं सत्यवादिनः। अशक्यमिति चोवाच वसिष्ठो भगवानृषिः। तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव'। तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरं। स राजा पुनरेवैतान् इदं वचनमब्रवीत्। प्रत्याख्यातो भगवता गुरुपुत्रैस्तथैव हि। अन्यां गतिं गमिष्यामि स्वस्ति वोस्तु तपोधनाः। ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितं। शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि। इत्युक्त्वा ते महात्मानो विविशुः स्वस्वमा-

**इति सार्वजनीनसम्पदः प्रलयं देशवरस्य कुर्वतीम् ।
न निहत्य शरेण सूरिभिस्त्वमधर्मी ध्रुवमेष गीयसे ॥ ६४ ॥**

---

श्रमं । अथ रात्र्यां व्यतीतायां राजा चंडालतां गतः । नीलवस्त्रधरो नीलः पुरुषो ध्वस्तमूर्धजः । चित्यमाल्यांगरागश्च आयसाभरणोऽभवत् । इत्यादि । ततः कालेन महता विश्वामित्रो महातपाः । चकारावाहनं तत्र भागार्थं सर्वदेवताः । नाभ्यागमंस्तदा तत्र भागार्थं सर्वदेवताः । ततः कोपसमाविष्टो विश्वामित्रो महामुनिः । स्रुवमुद्यम्य सक्रोधस्त्रिशंकुमिदमब्रवीत् । पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर । एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा । दुष्प्रापं स्वशरीरेण स्वर्गं गच्छ नरेश्वर । स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलं । राजस्त्वं तेजसा तस्य सशरीरो दिवं व्रज । उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरेश्वरः । दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा । स्वर्गलोकं गतं दृष्ट्वा त्रिशंकुं पाकशासनः । सह सर्वैः सुरगणैरिदं वचनमब्रवीत् । त्रिशंको गच्छ भूयस्त्वं नासि स्वर्गकृतालयः । गुरुशापहतो मूढ पत भूमिमवाक्शिराः । एवमुक्तो महेंद्रेण त्रिशंकुरपतत् पुनः । विक्रोशमानस्त्राहीति विश्वामित्र तपोधन । तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः । रोषमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् । अन्यमिन्द्रं करिष्यामि लोकोवास्यादनिंद्रकः । देवतान्यपि सक्रोधात् स्रष्टुं समुपचक्रमे । ततः परमसंभ्रांताः सर्षिसंघाः सुरासुराः । विश्वामित्रं महात्मानं ऊचुः सानुनयं वचः । अयं राजा महाभागो गुरुशापपरिक्षतः । सशरीरो दिवं यातुं नार्हत्येव तपोधन । अब्रवीत् सुमहद्वाक्यं कौशिकः सर्वदेवताः । सशरीरस्य भद्रं वस्त्रिशंकोरस्य भूपतेः । आरोहणं प्रतिज्ञातं नानृतं कर्तुमुत्सहे । स्वर्गोस्तु सशरीरस्य त्रिशंकोरस्य शाश्वतः । नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ । यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः । अवाक्शिरास्त्रिशंकुश्च तिष्ठत्वमरसन्निभः । अनुयास्यंति चैतानि ज्योतींषि नृपसत्तम । कृतार्थं कीर्तिमंतं च स्वर्गलोकगतं यथा । विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः । ऋषिमध्ये महातेजा वाढमित्येव देवताः । इति च बालकांडे प्रसिद्धं ॥ ६३ ॥

इतीति । इति पूर्वोक्तप्रकारेण सर्वजनेषु साधवः इति सार्वजनीनाः 'प्रतिजनादिभ्यः खञ्' इति साध्वर्थे खञ्प्रत्ययः सार्वजनीनाः सम्पदः यस्य सर्वलोकोपकारकसम्पत्तिमानित्यर्थः । एतादृशस्य देशवरस्य देशोत्तमस्य प्रलयं नाशं करोतीति कुर्वती तां कृधातोः लट् शत्रादेशः उगितश्चेति ङीप् एतादृशीं राक्षसीं इत्यर्थः । शरेण बाणेन निहत्य नाशयित्वा सूरिभिः विद्वद्भिः 'धीमान् सूरिः' इत्यमरः । त्वं एषः रामचंद्रः अधर्मः अस्यास्तीति अधर्मी 'अत इनि ठनाविति' इनिः । इति ध्रुवं निश्चयेन न गीयसे न वर्ण्यसे । अत्र निहत्येति ल्यपपत्त्यर्थं स्थितः इत्यध्याहारः कर्तव्यः निहत्य स्थितस्त्वमित्यन्वयः अन्यथा निहत्य गीयसे इति

शतमन्युरवर्णवृत्तये न वधःस्त्रैण इति प्रचिन्तयन्।
निजघान विरोचनात्मजां कुलिशेन त्रिदिवस्य शान्तये ॥ ६५ ॥
वनितावपुषि द्विपज्जने पुरुषाकारविशेषितेऽपि वा।
नहि भद्रकरं शरीरिणां प्रहृतार्हे करुणावलम्बनम् ॥ ६६ ॥
युवतेरपि साधवः सुखे जगतो लोपयितुं चिरस्थितिम्।
तुलयन्ति न राम ! विक्रमं द्विषतीतापमगुण्यवृत्तिभिः ॥ ६७ ॥

---

क्रिययोः भिन्नकर्तृकत्वात् क्त्वानुपपत्तिः । स्त्रीवधेन अधर्मी स्यामिति माशङ्किष्टाः ॥ ६४ ॥

एतादृशः स्त्रीवधः पापदुष्कीर्तिजनको न भवतीति द्रढयितुं इन्द्रचरितं दृष्टान्तयति । शतमन्युरिति शत मन्यवो यज्ञा यस्य स तथा 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः' शतसंख्याकयज्ञकर्ता इन्द्रो भवति इति पुराणादिषु प्रसिद्ध (त्रिदिवस्य स्वर्गस्य 'त्रिदिवत्रिदशालया' इत्यमरः । शांतये स्वास्थ्याय) स्त्रियाः अयं स्त्रैणः । 'स्त्रीपुंसाभ्यां' इत्यादिना इदमर्थे नञ्प्रत्ययः । वर्णः स्तुतिः 'वर्णो द्विजादौ शुक्लादौ स्तुतौ' इत्यमरः । तद्विरुद्धः अवर्णः नञो विरोधोर्थः असुरादिवत् । तथा च अवर्णस्य निंदायाः वृत्तये वर्तनाय उत्पत्तये इत्यर्थः । न न भवति इत्यर्थ. । इति प्रचिंतयति विचारयति प्रचिंतयन् विचारयन् सन् विरोचनस्य दैत्यविशेषस्य आत्मजां कन्यां मथरानामिकां कुलिशेन वज्रेण 'कुलिशं भिदुरं पविः' इत्यमरः । निजघान नाशयामास निपूर्वाद्धतेर्लिट् द्वित्व होर्हंतेः रिति कुत्व । 'श्रूयतां हि पुरा शक्रो विरोचनसुतां नृप । पृथिवीं हंतुमिच्छंतीं मथरामभ्यसूदयत्' इति वाल्मीकीये बालकांडे ॥ ६५ ॥

वनितायाः स्त्रियाः वपुः शरीरं 'यस्य वनिता महिला तथेत्यमरः'। वनितारूपे इत्यर्थः । एतादृशे प्रहृतार्हे प्रहरणं प्रहृतं तत् अर्हतीति प्रहृतार्हं कर्मण्यण् द्विषज्जने द्विषोऽमित्रे इति शतृप्रत्ययः । द्विषन् एतादृशो यो जन. लोकः तद्विषये स्त्रीरूपशत्रुजने इत्यर्थः । वा अथवा पुरुषस्य नरस्य आकार. आकृतिः तेन विशेषिते युक्ते इत्यर्थः । पुरुषेऽपीत्यर्थः एतादृशद्विषज्जने विषयसप्तमीयं शरीरिणां देहिनां करुणायाः दयायाः अवलंबनं आश्रयणं भद्रं कल्याणं करोतीति भद्रकरं 'क्षेमप्रियमद्रेऽण् च' इत्यादिनाटप्रत्ययः । कल्याणकरं नहि अस्तीति शेषः ॥ ६६ ॥

युवतेरपीति । साधवः हे राम जगतः विष्टपस्य 'विष्टप भुवन जगत्' इत्यमरः । सुखे सुखविषये विषयसप्तमीय सुखार्थमिति यावत् युवतेरपि स्त्रिया अपि चिरं स्थितिः चिरस्थितिः तां बहुकालपर्यंत वासमित्यर्थः । लोपयितुं नाशयितुमित्यर्थः । द्विषतीं तापयतीति द्विषतीतापः तं कर्मण्यण् द्विषपरयोरिति खच् मुम् न भवति उपपदविधौ लिंगविशिष्टपरिभाषाया अनित्यत्वात् द्विषच्छब्देन

अपि वित्थ इदं धनुभृतोर्भवतोः पौरुषरोषवित्तयोः ।
न भजन्ति यशःश्रियं रणेऽभ्युदिते हन्त तपोधनद्विषः ॥ ६८
न विरोचनजन्मनोरिदं युवयोरायुधयुद्धतन्त्रयोः ।
द्विजवृद्धनिषेवणक्षमं महतोः श्रौत्रमलं विराजते ॥ ६९ ॥

इति मुनिचोदितो हृदि सुकेतुसुतामिषुणा
रघुपतिरक्षिणोदशनिपातपटुध्वनिना ।
स्फुटितकुचान्तरस्रवदसृक्प्लुतिनः करणात्
प्रथममपाययुस्तदसवो नु शरो नु बहिः ॥ ७० ॥

---

द्विषतीशब्दस्याग्रहणात् । एतादृश विक्रम पराक्रम ' विक्रमस्त्वतिशक्तिता
इत्यमरः । प्रशस्ता गुणा येषां ते गुण्याः ' रूपादाहतप्रशंसयोर्यप् ' इति ९
अन्येभ्योपि दृश्यते इति वार्तिकेन गुणशब्दात् यप् प्रत्ययः न गुण्याः अगुण्य
दुर्वृत्ता इत्यर्थः । तेषां या वृत्तयः वर्तनानि ' वृत्तिर्वर्तनजीवने ' इत्यमरः । तानि
सह न तुलयति तुलनां न कुर्वंतीत्यर्थः । दुर्वृत्त क्रियास्तापकरं पराक्रमं दुर्ज
वृत्तेन तुल्य न गणयंति अपि तु सत्कृत्यमेव वर्णयंतीत्यर्थः ॥ ६७ ॥

*दुर्जनेषु निर्घृणत्वेन पराक्रम एव श्रेयान् इत्याह ।* अपीति । धनुषी बिभृ
इति धनुर्भृतौ क्विप् धनुर्धारिणौ इति यावत् पुरुषस्य कर्म पौरुषं युवादित्वाद
प्रत्ययः । पराक्रमः रोषः क्रोधः तौ वित्ते द्रव्ये ययोस्तयोः भवतोः रामलक्ष्मणयो
रणे युद्धे अभ्युदिते उत्पन्ने इत्यर्थः । तपोधनद्विषः तप एव धनं येषां ते तपो
धनाः तपस्विनः तान् द्विषंतीति तथा ' सत्सूद्विषेत्यादिना क्विप् ' उपपदसमासः
यशसः कीर्तेः शोभा तां जयमिति यावत् । हंत इति हर्षे । न भजंति न प्राप्नुवंति
वर्तमानसामीप्ये लट् । न प्राप्स्यंतीति यावत् । इदं अपि वित्थः । वेत्तेर्ल
अपिः प्रश्ने संभावनायां वा ॥ ६८ ॥

नेति । विरोचनात् सूर्यात् जन्म उत्पत्तिर्ययोस्तौ तयोः सूर्यवंशोत्पन्नयोरित्यर्थः
अतएव आयुधं शस्त्रं युद्धं रणः ते तंत्रं प्रधानं ययोस्तौ ' तंत्रं प्रधाने सिद्धांते
इत्यमरः । शस्त्रयुद्धनिपुणयोरिति यावत् अतएव महतोः श्रेष्ठयोः युवयोः रामल
क्ष्मणयोः द्विजाश्च त वृद्धाश्च द्विजवृद्धाः द्विजेषु वृद्धा वा कडारादित्वात् द्विजशब्दस
पूर्वनिपातः तेषां यन्निषेवणक्षमं सेवनयोग्यं वृद्धद्विजकाचरणीयं श्रोत्रियस्य का
श्रौत्रं ' श्रोत्रियस्य यलोपश्चेत्यनेन अण्प्रत्ययः' । यलोपश्च श्रोत्रियत्वमिति
यावत् । अलं न विराजते अत्यंत न शोभते इति यावत् अलं शब्दः पर्याप्त्यर्थकः ॥ ६९ ।

इतीति । इति पूर्वोक्तप्रकारेण मुनिना विश्वामित्रेण चोदितः प्रेरितः रघूण
रघुपरमानां पतिः स्वामी । रघुशब्दस्य रघुपत्ये लक्षणा । रामचंद्रः अशनेः
वज्रस्य पातः पतन तद्वत् पटुः गभीरः ध्वनिः रवो यस्य एतादृशेन इषुणा
बाणेन सुकेतोः दैत्यविशेषस्य सुता कन्या तां ताटकामित्यर्थः । हृदि हृदये 'स्वांत

ऋषिरिति विघ्नघातविधिसञ्चितसद्यशसं
तनुजमयोजयद्दशरथस्य सुरास्त्रगणैः।
असुरनिशाचरक्षतजपानपरैर्विकस-
ल्लसितहुताशनद्युतिपिशङ्गितदिग्वदनैः ॥ ७१ ॥
वदनविनिर्गतज्वलितवह्निशिखावितते-
रुपगतवन्ति राममथ तानि ततानि रुचा।
शशधरखण्डकोणकुटिलस्फुटकोटिखरं
दशनचतुष्टयं पृथु दधन्ति बहिः प्रसृतम् ॥ ७२ ॥

---

हन्मानस मनः ' इत्यमरः । अक्षिणोत् अविध्यदित्यर्थः क्षिणु हिंसायां इति तानादिकाल्लङ् उप्रत्ययश्च । स्फुटित विदीर्णं यत् कुचयोः स्तनयो. अतरं मध्य-भागः तस्मात् स्रवती असृजः रक्तस्य स्रुतिः प्रघवण निर्झरो यस्मात् एतादृशात् करणात् शरीरात् ' करण साधकतम क्षेत्रगात्रेन्द्रियेष्वपि ' इत्यमरः । प्रथम पूर्वं क्रियाविशेषणमिद तस्याः ताटिकायाःअसवः प्राणाः सर्वनाम्नोवृत्तिमात्रे पुंवद्भावः बहिः बहिर्देशे अपाययुर्नु जग्मुर्नु नु इति वितर्के । शरः बाणः प्रथम अपाययौ नु इति वचनविपरिणामेन अन्वयः । रामबाणपातेन मृतायास्ताटिकायाः विद्ध-बाणस्य पूर्वं बहिर्गमन प्राणानां वा पूर्वगमन इति वितर्कः । एतेन मरणस्य शीघ्रता दर्शिता । अतिशयोक्त्यलङ्कार । इत आरभ्य श्लोकत्रयस्य नर्दटक वृत्तम् । तदुक्त ' यदि भवतो नजौ भजजला गुरु नर्दटकम् ' इति ॥ ७० ॥

ऋषिरिति । ऋषिः विश्वामित्र. इति पूर्वोक्तप्रकारेण विघ्नाना अतरायाणां नाशः घातः ' विघ्नोऽतराय प्रत्यूहः ' इत्यमरः । तस्य यो विधिः विधान वि-घ्नभूतरक्षोविघातकरणमित्यर्थः । तेन सचित सपादित सत् यशः सत्कीर्तिर्येन एतादृश दशरथस्य तनो' अजनीति तनुजः पुत्र. त राममित्यर्थः। असुरा दैत्याः-' असुरा दैत्यदैतेया ' इत्यमरः । निशायां चरतीति निशाचराः राक्षसा. ' चरेष्ट' इत्यादिना टप्रत्ययः । तेषा यरक्षराज रक्त ' रक्ताक्षतजशोणित ' इत्यमरः । तस्य यत्पान प्राशन तत् परं प्रधान येषां तादृशै. लसितः देदीप्यमानो यो हुताशनः अग्निः तस्यैव या द्युतिः कातिः विकसती सर्वतः प्रसृता या लसितहुताशनद्युतिः ' पुंवत्कर्मधारयेति पुंवद्भाव. ' तया पिशगितानि पिंगलीकृतानि दिशा काष्ठानां वदनानि मुखानि यैः एतादृशैः सुराणां देवाना अस्त्राणा गणाः समुदायाः तैः अयोजयत् सयोजितवान् । युज्धातोर्णिजताल्लङ् ॥ ७१ ॥

वदनेति । अथ वदनात मुखात् अर्थाद्विश्वामित्रस्य विनिर्गता एतादृशी या ज्वलिता दीप्ता एतादृशी वन्हिशिखाविततिः वन्हिज्वालापक्तिः तस्याः सकाशात् बहिर्गतानीति अर्थाक्षिप्त । रुचा कात्या ततानि विसृतानि तानि अस्त्राणि शशस्य धरः धारकः चंद्रमाः तस्य खड: छेदः तस्य कोणः प्रांतः तद्वत्कुटिला वक्रा

रक्षोहव्यहविर्भुजं स हि तथा सन्धूप्य शस्त्रेन्धनैः
प्रत्युद्गम्य सुदूरमेव हरिणैरन्वीयमानो बहिः।
छेदाय प्रसृतैरसेकिमलताजालप्रवालश्रियः
कूजत्कोकिलमाश्रमस्य निकटं सायम्प्रपेदे मुनि. ॥ ७३ ॥

इति कुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
, रामोत्पत्तिर्नाम चतुर्थः सर्गः ॥

---

या स्फुटा स्पष्टा या कोटि अग्र तद्वत्खर तीक्ष्णं बहिः प्रसृत बहिरागत पृथु महत् यद्दशनचतुष्टय दतचतुष्टय अर्थाद्रामस्य दधाति धारयति। वा नपुंसकस्येति विकल्पेन नुमागमः। एतादृशानि सति राम उपगतवंति प्राप्तानीत्यर्थः। विश्वामित्रमुखविनिर्गतवन्हिशिखासमुदायात् बहिर्विनिर्गत्य चंद्रखण्डकोणकुटिलकोटिखर रामचन्द्रस्य बहिर्गत दशनचतुष्टय स्पृशति राम प्रति प्राप्तानीत्यर्थः। अनुप्रासालंकारः ॥ ७२ ॥

रक्ष इति। स. पूर्वोक्तः मुनिः विश्वामित्र' इति प्रसिद्धो रक्षांस्येव हव्यानि हविर्द्रव्याणि यस्य एतादृशो यो हविर्भुक् अग्निः त शस्त्राण्येव इन्धनानि काष्ठानि तैः तथा तेन प्रकारेण श्रीरामचन्द्रद्वारा इत्यर्थः। सधूप्य सतापय्यर्थ सेकेन सेचनेन निवृत्ता निष्पन्नाः सेकिमा' 'भावप्रत्ययान्तादिमप् वक्तव्य' इत्यनेन सेक शब्दात् इमप् निर्वृत्तेर्थे। न सेकिमाः असेकिमाः जलसेकं विना स्वत एव वृद्धिंगता इत्यर्थः। एतादृश या लता यद्वर्धः तासां जालानि समूहा तेषां य। प्रवालश्रीः अङ्कुरशोभा 'प्रवालमङ्कुरेऽप्यस्त्री' इत्यमरः। तस्याश्छेदाय बहिः बहिर्भागे प्रसृतैः एतादृशैः हरिणै मृगै' सुदूर अतिदूरं प्रत्युद्गम्य अन्वीयमानः अनुगम्यमान. अनुपूर्वादिणधातो कर्मणि लट्। एतादृश. सन् सायं सायकाले कूजंतः शब्दायमानाः कोकिला' पिका यस्मिन् एतादृशो आश्रमस्य निकट समीपभागं प्रपेदे प्राप प्रपूर्वात्पद्धातोः लिट्। रूपकालंकारः। शार्दूलविक्रीडित वृत्तम् ॥ ७३ ॥

इतिश्री श्रुतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदवीसमलङ्कृतपण्डितप्रकाण्डश्रीहरदाटकरोपनामकश्रीमद्रोपालाचार्यान्तेवासिना निपुडकरोपाभिधेन नारायणशर्मणा विरचितायां महोपाध्यायजानकीहरणकाव्यटीकायां रामोत्पत्तिर्नाम चतुर्थः सर्गः ॥

# पंचम सर्गः ।

ततस्ततं तापसकन्यकाजनप्रसिक्तसंवर्द्धितवृक्षमण्डलैः ।
सहस्रशस्तानितसामनिस्वनप्रवर्तिताखण्डशिखण्डिताण्डवम् ॥ १ ॥
विहङ्गपानाय महीरुहां तले निवेशिताम्भःपरिपूर्णभाजनम् ।
विशोषणार्थाहितपुण्यवल्कलप्रतानतन्त्रीकृतवृक्षमस्तकम् ॥ २ ॥

---

श्रीगोपालकृष्णायनमः ॥ अथ पूर्वसर्गे ताटिकावधसन्तुष्टो विश्वामित्रः श्रीरामभद्राय अस्त्रगणं वितीर्य सायं स्वाश्रमनिकटे प्रपेदे इत्युक्तं । अथास्मिन्सर्गे तस्य स्वाश्रमप्रवेशं विवक्षुः आदौ तावत् तत्तपोवनं दशभिः श्लोकैर्वर्णयति । तत इति । ततः आश्रमसमीपप्राप्त्यनन्तरं कौशिकः कुमारयुग्मेन तपोवनं विवेश इति दशमश्लोकस्थक्रियया अन्वयः । तावत्पर्यन्तं द्वितीयान्तानि तपोवनविशेषणानि । प्रशस्तं तपः अस्ति येषां ते तापसाः 'तपः सहस्राभ्यां विनीनीती' सूत्रात् तपः शब्देऽनुवर्तमाने अण् चेति सूत्रेण मत्वर्थेऽण् प्रत्ययः । तापसाः तपस्विनः 'तपस्वी तापसः पारिकाङ्क्षीत्यमरः' । तेषां कन्यकाः अल्पाः कन्याः कन्यकाः 'अल्पे' इत्यनेन कप्रत्ययः 'केण' इति ह्रस्वः । तासां जनः समूहः तस्य यत् प्रसिक्तं सेचनं प्रपूर्वात् सिंचतेः नपुंसके भावे क्त इति क्तप्रत्ययः । 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानं' इति षष्ठी । तेन संवर्द्धितानि यानि वृक्षाणां तरूणां मंडलानि समूहाः तैस्ततं विस्तृतं व्याप्तमिति यावत् पुनः कथंभूतं तपोवनं सहस्रशः तानितानि विस्तारितानि तनु विस्तारे णिजन्तात् क्तः यानि सामानि ऋषिकुमारैः पठनार्थं उदीर्णानि सामानीत्यर्थः । तेषां यो निस्वनः ध्वनिः तेन प्रवर्तितं उत्पादितं अखंडं अनवच्छिन्नं शिखंडिनां मयूराणां तांडवं नृत्यं यस्मिन् मयूरा मेघनादानुल्लासित्वात् ऋषिकुमारोदीरितसामध्वनिं गांभीर्यात् मेघध्वनिमिव मत्वा यस्मिन्नृत्यंति एतादृशमित्यर्थः । अनेन सुच्छायतरुमधुरध्वन्यादि सौंदर्यं तपोवनस्य व्यज्यते 'तांडवं नटनं नाट्यं' इत्यमरः । अनुप्रासालंकारः अत्र मिश्रत्वात् पांचाली रीतिः तदुक्तं 'पांचालिरीतिर्वैदर्भी गौडीरित्युभयात्मिका' इति । 'अपपारुष्यरहिता शब्दकाठिन्यवर्जिता । नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते' इति । 'ओज कांतिगुणोपेता गौडी या रीतिरिष्यते' इति च । रीतिस्वरूपं तु 'रीतिर्नामगुणाश्लिष्टपदसंघटनामता' इति । एवंविधेषु पूर्वप्रगतेषु पद्येषु यथायथं रीतिलक्षणं बुधैः संघटनीयं । प्रकरणान्ते लेखस्तु सर्वोपकारकत्वात् । पूर्वस्मिन्सर्गे 'रक्षो हव्यहविर्भुजं स हि तथा सधूम्य शास्त्रैघनैः' इत्यनेन पंचमसर्गस्य रक्षोवधरूपं वृत्तं गृ चितं । अस्मिन् सर्गे मनु पंचाशत्तमश्लोकपर्यंतं वंशस्थं वृत्तम् । उक्तं च 'जतौ तु वंशस्थमुदीरितं जरौ' इति ॥ १ ॥

विहङ्गेति । महीरुह' महीशब्दे उपपदे रुहधातोः क्विप् चेति क्विप् उपपदम-

कृतासु नीवारविभागवृत्तिषु स्वकीयमंशं मृदुहस्तसम्पुटैः ।
हरद्भिरालोहितगण्डमण्डलैः प्लवङ्गमैः सेवितशैलकन्दरम् ॥ ३ ॥

स्वमङ्कमारुह्य सुखं परिष्वपत्कुरङ्गशावप्रतिबोधशङ्कया ।
चिरोपवेशव्यथितेऽपि विग्रहे सुनिश्चलासीनजरत्तपोधनम् ॥ ४ ॥

---

मासः । महीरुहां वृक्षाणां तले मूले 'अधःस्वरूपयोरस्त्री तल स्यात्' इत्यमरः । विहायसा गच्छंतीति विहंगाः विहायःशब्दे उपपदे गम्धातोः खच् सचडित् विहायस्शब्दस्य विहादेशश्च । तेषां पक्षिणां पान प्राशन तत्कर्तृक पानमित्यर्थः । तस्मै तादर्थ्ये चतुर्थीयं निवेशितानि स्थापितानि अम्भःपरिपूर्णानि उदकपरिपूर्णानि भाजनानि पात्राणि यस्मिन् 'पात्रामत्र च भाजनेत्यमरः'। पुनः कथंभूतं विशोषणाय शुष्ककरणाय इति विशोषणार्थं आहितानि स्थापितानि यानि पुण्य-वल्कलानां प्रतानानिसमूहा. प्रपूर्वात्तनुविस्तारे इत्यस्माद्भावे घञ् तैः नम्रीकृ-तानि प्रव्हकितानि नम्रशब्दात् अभूततद्भावे च्विः टेर्लोपे अस्य च्वाविनीति दीर्घ ब्यंतत्वात् गतिसंज्ञाया कृतशब्देन कुगतिप्रादय इति समासः । वृक्षाणां मस्त-कानि अग्रभागा यस्मिन् एतादृश तपोवनम् ॥ २ ॥

कृतास्विति । पुनः कथंभूत नीवाराणां तृणधान्यानां 'तृणधान्यानि नीवाराः' इत्यमरः । ये विभागाः अंशाः ते एव वृत्तयः जीवनसाधनानि 'वृत्ति-र्वर्तनजीवने' इत्यमरः । तासु कृतासु रचितासु सतीषु मृदवः मृदुलाः ये हस्तसंपुटाः करसंपुटाः 'कोमल मृदुल मृदु' इत्यमरः । तैः स्वस्य अयं स्वकीयः । 'कुक्' इत्यनुवर्तमाने 'स्वस्य चे'ति वार्तिकेन छप्रत्ययः कुगागमश्च अंश भागं हरतीति हरत तैः हरतेः शतृप्रत्ययः ईषल्लोहितं आलोहितं कुगतीति समासः । आलोहितं गंडानां कपोलानां मडलं चक्रवालं येषां एतादृशैः प्लवगमैः वानरैः 'कपिभेकौ प्लवगमौ' इत्यमरः । सेवितानि शैलानां पर्वतानां कदराणि गुहा यस्मिन् 'चलशैल शिलोच्चया दरी तु कदरो वा स्त्री' इत्यमरौ ॥ ३ ॥

स्वमिति । स्वमात्मीय 'स्वो ज्ञातावात्मनिस्व त्रिष्वात्मीये स्वः स्त्रियां धने' इत्यमरः । अंक उत्संग 'उत्संगचिन्हयोरंकः' इत्यमरः । आरुह्य प्राप्येत्यर्थः । सुख यथास्यात्तथा परिस्वपतः परिशयानाः अत्र परिस्वपद्‌भिरेव पाठः साधुः पञ्चस्याप्रासेः । ये कुरंगशावाः मृगपोताः 'मृगे कुरंगवातायु' 'पोतः पाकोऽर्भको-डिंभः पृथुकः शावकः शिशुः' इत्यमरौ । तेषां प्रतिबोधशंकया जागृतिशंकया विग्रहे देहे 'शरीरं वर्ष्मविग्रहः' इत्यमरः । चिरं चिरकाले उपवेशः उपवेशनं तेन व्यथितेति पीडिते शरीरेऽप्यर्थः । सुनिश्चलं यथास्यात्तथा आसीना उपविष्टाः जरंतः वृद्धाः तपोधनाः तपस्विनः यस्मिन् एतेन तत्रत्यमुनीनां दयालुत्वं व्यज्यते ॥ ४ ॥

हिरण्यरेतःशरणानि सर्वतः प्रवृत्तपुण्याहुतिधूमधूसरम् ।
बृहल्लतातानभृतः फलेग्रहेरधस्तरोरासितशायितातिथि ॥ ५ ॥
तपस्विवर्गस्य वधूषु वह्नये वितन्वतीषु प्रकृतां बलिक्रियाम् ।
मृगाङ्गनाभिः परिलिह्य जिह्वया विनोदितत्याजितरोदितच्छिशु ६
बलिक्रियातानितलाजकर्षणे समेतकीटप्रतिघातशङ्कया ।
प्रमृज्यमानं शनकैस्तपस्विभिःकुशस्य मुष्ट्याऽनलमन्दिरोदरम् ७

---

हिरण्यरेत इति । हिरण्यरेतसां अग्नीनां शरणानि स्थानानि 'हिरण्यरेता हुतभुग्' 'शरणं गृहरक्षित्रोः' इत्यमरः। सर्वतः सर्वत्रेत्यर्थः । 'इतराभ्योऽपि दृश्यन्ते' इति सर्वशब्दात् तसिल्प्रत्ययः । 'उभसर्वतसोः कार्या' इत्यादिना हिरण्यरेतःशरणानीत्यत्र द्वितीया अभिगृह्याणां आसमंतात् भागे सर्वत इत्यर्थः। प्रवृत्तः उत्पन्नः यः पुण्याहुतिधूमः पुण्यार्थं पुण्यकारिका वा या पयआदिहविर्दव्याहुतयः तासां धूमः तेन धूसरं मलिनं पुनश्च बृहन् महान् यो लतानां वल्लीनां तानः विस्तारः तनु विस्तारे भावे घञ् तं बिभर्ति धारयति इति तथा 'क्विप् चेति' भृधातोः क्विप् 'ह्रस्वस्येति' तुक् फलानि गृह्णातीति फलेग्रहिः 'फलेग्रहिरात्मभरिश्चे'-ति निपातनात्साधुः एतादृशस्य तरोः अधः अधोभागे आसिताः उपविष्टाः शायिताश्च सुप्ताश्च अतिथयः प्राघूर्णिका यस्मिन् एतादृशं तपोवनं। आशित इति पाठे पूर्वं आशिताः भोजिताः पश्चाच्छायिताः स्वापिताः अतिथयः यस्मिन् एतादृशं तपोवनं आशितशायिता इत्यत्र पूर्वकालैकेति समासः । एतेन तस्य पावित्र्यं विविक्तत्वं च सूचितं ॥ ५ ॥

तपस्वीति । प्रशस्तं तपो येषां ते तपस्विनः 'तपः सहस्राभ्यां विनिनीति' तपःशब्दात् विनिप्रत्ययः । ऋषयः तेषां वर्गः समूहः तस्य वधूषु स्त्रीषु वन्हये अग्नये प्रकृतां उपक्रांतां आरब्धामिति यावत् बलेः उपहारस्य क्रिया करणं 'बलिर्दैत्योपहारयोः' इति हैमः । वितन्वतीति वितन्वन्त्य साधुः विपूर्वात् तनुधातोर्लटः शत्रादेशः उगितश्चेति ङीप् । कुर्वतीषु सतीषु मृगांगनाभिः मृगाणां अंगनाः स्त्रियः हरिण्य इत्यर्थः । ताभिः कर्त्रीभिः जिह्वया रसनया परिलिह्य आस्वाद्य आदौ विनोदिताः पश्चात्त्याजिताः विनोदितत्याजिताः पूर्वकालैकेति समासः । अतएव रोदिनः विनोदितत्याजितरोदिनः आवश्यकाधमर्ण्येति रुद-धातोः णिनिप्रत्यय. तासां तपस्विवर्गवधूनां शिशवः अर्भकाः यस्मिन् ॥ ६ ॥

बलीति । बलेः पूजोपहारादेः या क्रिया करणं तस्मिन् तानिताः विस्तारिताः ये लाजाः तेषां कर्षणे आकर्षणे आकृष्य अन्यत्र नयने इति यावत् समेताः मिलिताः ये कीटाः तेषां प्रतिघातः नाशः प्रतिघात इत्यत्र उपसर्गस्येति दीर्घो न बहुलग्रहणात् । तस्य शङ्कया आशङ्कया तपस्विभिः मुनिभिः शनकैः मंद मंद यथास्यात्तथा कुशस्य दर्भस्य जात्येकवचनं कुशानामित्यर्थः । मुष्ट्या

**महीरुहभ्रष्टविहङ्गपोतिकासुखोपवेशाय तपस्विसूनुभिः।**
**इषीकतूलेन विधाय मार्दवं क्वचित्समासज्जितनीडपञ्जरम् ॥ ८॥**
**सवारिमृत्स्नापरिपूर्णखातकप्रजन्यमानाङ्कुरबीजमेकतः ।**
**प्रहृष्टसारङ्गकिशोरवल्गितप्रकीर्णपुञ्जीकृतगुग्गुदीफलम् ॥ ९ ॥**
**समीरणैराहुतिगन्धपावनैर्वितानितोद्दामशिखण्डिनिस्वनम् ।**
**तपोवनं तत्तपसामधिश्रयः कुमारयुग्मेन विवेश कौशिकः ॥१०॥**

---

प्रमृज्यते तत्प्रमृज्यमान प्रपूर्वान्मार्ष्टेः कर्मणि लट् शानच् अनलानां गार्हपत्याद्यग्नीनां यन्मंदिर गृह अग्निशाला तस्या उदरं मध्यभागो यस्मिन् एतादृश तपोधन। यद्यप्यत्र ' प्रमृज्यमान शनकैस्तपस्विभिः ' इति पाठो दृश्यते । तथापि तादृशपाठे अन्यपदार्थः तपोवन न लभ्यते । अतः कुशस्य मुष्टया शनकैस्तपस्विभिः प्रमृज्यमानानलमंदिरोदर इत्येव पाठः साधुः इति भाति ॥ ७ ॥

महीरुहेति । महीरुहेभ्यः वृक्षेभ्यः भ्रष्टाः अधः पतिताः महीशब्दे उपपदे रुहधातोः मूलविभुजादित्वात्कप्रत्ययः महीरुहेभ्यः भ्रष्टा इति साधन कृतेति समासः । या विहगपोतिकाः विहगानां या पोतिकाः शावाः तासां सुखेन उपवेशाय उपवेशनाय उपपूर्वात् विशतेर्भावे घञ् तादर्थ्ये चतुर्थी । तपस्विनां ऋषीणां सूनवः पुत्राः तैः कर्तृभिः इषीकाणां तूल कार्पासं इषीकतूलं ' इष्टकेषीकामालानां चिततूलेति' ह्रस्व तेन मार्दवं मृदोर्भावः मार्दवं मृदुत्वमिति यावत् इगन्ताच्चलघुपूर्वादिति अण्प्रत्ययः। विधाय कृत्वा क्वचित् कुत्रचित् तपोवनप्रान्ते किम्शब्दात् ' किमोत् अत् क्वातीति' क्वादेशः 'अमाकल्ये तु चिचनेत्यमरः' । समासञ्जितानि नीडानि कुलाया येषु ' कुलायो नीडमास्त्रियां ' इत्यमरः । एतादृशाः पञ्जरा यस्मिन् एतादृशं तपोवन तस्मिन् ॥ ८ ॥

सवारीति । एकत एकस्मिन् भागे वारिणा उदकेन सहिता सवारिः ' तेन सहेति तुल्ययोगे ' इति बहुव्रीहौ वोपसर्जनस्येति सादेशः एतादृशी प्रशस्ता मृत् मृत्स्ना ' मृदस्तिकन् ' इत्यत्र मृद इत्यनुवर्तमाने 'सस्नौ प्रशंसायामिति ' स्नप्रत्ययः तया परिपूर्णा ये खाताः तेभ्यः प्रजन्यमाना अङ्कुरा येभ्यः एतादृशानि बीजानि यस्मिन् । प्रहृष्टाः ये सारङ्गकिशोराः हरिणशावाः तेषां वल्गितेन इतस्ततो भ्रमण तेन प्रकीर्णानि इतस्ततो विक्षिप्तानि एतादृशानि पुञ्जीकृतानि गुग्गुदीफलानि इङ्गुदीफलानि यस्मिन् इङ्गुदीत्यत्र विकारप्रत्ययस्य फले लुप् इत्यनेन लुप् 'लुपियुक्तवद्व्यक्तिवचने' इति युक्तवद्भाव. ॥ ९ ॥

समीरणैरिति । तपसां तपश्चर्याणां अधिश्रयः आश्रयः कौशिकः कुशिकस्य अपत्यं 'तस्यापत्यम्' 'ऋष्यण्' विश्वामित्रः आहुतीनां गंध सुगंधः तेन पावनैः पवित्रैः एतादृशैः समीरणैः वायुभिः वितानितः विस्तृतः उद्दामः महान् शिखण्डिनां मयूराणां निस्वन ध्वनिः यस्मिन् एतादृशं तत्पूर्वोक्तं तपोवन

विधित्सुरिष्टिं नृपतेरतन्द्रितं सुतं ततो वैबुधलौकिकीमृषिः।
समादिदेश प्रकृताय कर्मणे चिराय तद्रक्षणरूप्यमादृतः॥ ११॥
तमग्निमिन्धन्तमधिक्रतु भ्रमन् रिरक्षिषुः सन् परितो रिपोरसौ।
क्षमाभुजः सज्यशरासनः सुतो हृतो जगादावरजं वनश्रिया॥१२॥

---

कर्म इमाख्योः रामलक्ष्मणयोः यद्युग्म युगल 'सहयुक्ते प्रधाने' इति तृतीया। तेन सहेत्यर्थः विवेश प्रविवेशेत्यर्थः। विश्धातोर्लिट्॥ १०॥

*विधित्सुरिति*। ततः तपोवनप्रवेशानन्तर आदृतः सादरः रामविषयकादरवा-नित्यर्थ। आर्चितो वा पूजित इति यावत् "आदृतौ सादरार्चितौ" इत्यमरः। विबुधलोकानां देवलोकानां इय वैबुधलौकिकी तस्येदमित्यण् अण्णतान्ङीप् 'त्रिदशा विबुधाः सुराः' इत्यमरः। अनुशतिकादित्वादुभयपदवृद्धिः एतादृशीं इष्टिं यज्ञ विधित्सुः विधातुमिच्छुः विपूर्वात्दधातेः सनि सनिमीमेति इसादेशे अभ्यासलोपः 'सनाशंसभिक्षउः' इति उप्रत्ययः। एतादृशः ऋषिः विश्वामित्रः अतन्द्रितं तन्द्रा आलस्य सजाता अस्य तन्द्रित. तारकादित्वादितच् तादृशो न भवतीति अतन्द्रितः त अनलसमित्यर्थः। अतएव चिराय चिरकाल 'चिराय चिररात्राय' इत्यमरः। तद्रक्षणरूप्य तस्य यज्ञस्य रक्षण पालन ततः आगत तद्रक्षणरूप्य फलस्यापिहेतुत्वं अध्ययनेन वसतिरितिवत् 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य.' इति रूप्यप्रत्ययः। एतादृशं नृपतेः दशरथस्य सुत पुत्र श्रीरामभद्र प्रकृ-ताय कर्मणे यज्ञरक्षणरूपकर्मणे इत्यर्थः। समादिदेश आज्ञापयामास समाङ्पूर्वा-द्दिशतेर्लिट्॥ ११॥

तमिति। असौ पूर्वोक्तः ज्यया मौर्व्या सहित सज्य अस्यते अनेनेति असन असुक्षेपणे करणे ल्युट् शराणां बाणानां असन शरासन धनुष्य सज्य मौर्वीविशिष्ट शरासन यस्य 'धनुश्चापौ धन्वशरा' इत्यमरः। एतादृशः क्रतौ इत्यधिक्रतु सप्तम्यर्थेऽव्ययीभावः यज्ञे इत्यर्थ। अग्नि गार्हपत्याद्यग्नीनित्यर्थः। जात्य-पेक्षया एकवचन इधत दीपयत इन्धीदीप्तौ लटः शत्रादेशः श्नसोरल्लोपः अनुदा-त्तत्वलक्षणात्मनेपदस्यानित्यत्वात्परस्मैपद। त विश्वामित्र परितः समततः 'अभितः परितः समयेत्यादिना' परितयोगे द्वितीया। किमर्थं परिभ्रमणमित्यपेक्षायामाह रिपोरिति। रिपोः शत्रोः सकाशात् भीत्रार्थानामित्यपादानत्वं रक्षितु इच्छुः रिरक्षिषुः रक्षपालने सन्नंतादुप्रत्ययः। अर्थात्तमिति कर्मात्र सबध्यते एतादृशः क्षमाभुजः क्षमा पृथ्वी भुनक्ति पालयति इति क्षमाभुक् तस्य दशरथस्य सुतः श्रीरामभद्र. वनस्य अरण्यस्य श्रीः लक्ष्मीः तया हृत. आकृष्टः सन् अवरज अनुज लक्ष्मणमित्यर्थ.। जगाद उवाचेत्यर्थः गदव्यक्तायां वाचि लिट्। अनुप्रासालङ्कारः॥ १२॥

बिभर्ति नीवारवदम्बुजाकरश्रिया परीतं सततं तपोजुषाम् ।
अखातमाहावमनुप्त्रिमं परं सदाफलं शस्यमिदं तपोवनम् ॥१३॥
सवेदवेदाङ्गविदो यमव्ययं विदन्ति यत्नेन परं तपस्विनः ।
स लोककृत्यानि विचिन्त्य कानिचित् तपस्यति सोऽह पुमान् पुरातनः

---

पूर्वश्लोके क्षमाभुज सुतः अवरज जगादेत्युक्त किं जगादेत्यत आह—बिभर्तीति । नीवारा तृणधान्यानि सति यस्मिन् तन्नीवारवत् ' तदस्यास्त्यस्मिन्निति ' मतुप् मादुपधायाश्चेतिवत्व अम्बुजानां कमलाना आकर. खनि तस्य या श्री· शोभा तया परीत युक्त तप· जुषन्ते सेवन्ते इति तपोजुष· जुषी प्रीतिसेवनयोः क्विप् तपस्विनामित्यर्थ । इद पुरोदृश्यमान तपस वन अरण्य सतत निरतर ' सततेऽनारताश्रान्तसंतताविरतानिश ' इत्यमरः । अखात देवखातक ' अखात देवखातक ' इत्यमरः । आहाव निपान ' आहावस्तु निपान स्यादुपकूपजलाशये ' इत्यमर· । वापेन क्षेत्रविकरणेन निर्वृत्त उप्त्रिमं तथा न भवतीति अनुप्त्रिम ' डुवप् बीजसताने ' इत्यस्मात् ड्वितः क्त्रि यजादित्वात्सम्प्रसारण क्त्रेर्मम्नित्यमिति स्वार्थे मप्प्रत्यय. । वाप विना स्वतएवोत्पन्नमित्यर्थ. । अतएव पर श्रेष्ठ सदा सतत फल यस्य एतादृश सस्य धान्य बिभर्ति धारयति । डुभृञ् धारणपोषणयोः लट् तिप् शप. श्लौ द्वित्व अभ्यासस्येत्व च । अखात आहाव सस्य मित्यत्र चकार विनापि समुच्चय. ' यस्या हिरण्य विंदेय गामश्व पुरुषानहं ' इतिवत् द्रष्टव्य· ॥ १३ ॥

सेति । इह अस्मिन् वने 'इदमोह' इति हप्रत्यये 'इदमइश्' इति इशादेशः । वेदा. ऋगादय· तै. सहितानि सवेदानि यानि वेदागानि शिक्षादीनि षट् तानि च ' शिक्षाकल्पो व्याकरण निरुक्तं छदोज्योतिषामित्यगानि ' इति चरणव्यूहे स्पष्टानि तेषां विशिष्य पादाद्यगत्व शिक्षायामुक्त तथाहि ' छद· पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयन चक्षुर्निरुक्त श्रोत्रमुच्यते ॥ शिक्षाघ्राण तु वेदस्य मुख व्याकरण स्मृत । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते' इति। तानि विदति जानति ते सवेदवेदागविद· विद ज्ञाने सुप्युपपदे क्विप् चेति क्विप् उपप-दमतिङ् इति समासः । एतादृशा तपस्विन· नि य तपोयुक्ता भूमनिंदाप्रशसासु इत्यनेन नित्ययोगे ' तपः सहस्राभ्यां विनीनौ इति ' विनिप्रत्यय· यं पुराणपुरुषं अव्ययं नास्ति व्ययः षड्भावविकारा यस्य एतादृश षड्भाववर्जितमित्यर्थ· । ते च यास्केन दर्शिता· 'जायतेऽस्तिविपरिणमतेवर्धतेऽपक्षीयतेविनश्यतीति' । अतएव काठके उक्त 'न जायते म्रियते वा विपश्चिन् नायं कुतश्चिन्नबभूवकश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ' इति । एतादृश परं मस्थुरर्थं ' पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ' इत्यमर· । यत्नेन उपनि-षदर्थविचारादिरूपप्रयत्नेन विदति जानति विद ज्ञाने लट्। स· पूर्वोक्त. पुरातनः

सुदर्शनच्छिन्नसमाहृतेन्धनं द्विजेन पक्षव्यजनेन वीजितम्।
त्रिनेत्रमूर्त्यन्तरमादिपूरुषो जुहाव हव्यैरिह हव्यवाहनम् ॥ १५ ॥
तपस्यति स्वामिनि शत्रुशातने समित्कुशच्छेदनमात्रतत्परः।
सुसंयतो नाभिननन्द नन्दकः सुरारिवक्षःक्षतजासवं तदा ॥ १६ ॥
गदा रणद्वन्द्वभिभैरवं रणं तदा समभ्येत्य भयं वितन्वति।
शिरस्यपध्वस्तशिरस्त्रजालके निमज्य मज्जां न जघास विद्विषाम्

पुराणः पुमान् पुरुषः कानिचित् लोकानां कृत्यानि कार्याणि 'विभाषाकृवृषोरिति' कृधातो. क्यप् लोककार्याणीत्यर्थः। विचिंत्य विचार्य लोककार्याण्युद्दिश्येत्यर्थः। तपस्यति स्म लट्स्मे इति स्मयोगे भूतार्थे लट् ॥ १४ ॥

तस्य आयुधान्यपि तपसा अनुकूलतां यातानीति क्रमेण दर्शयति। सुदर्शनेति। इह अरण्ये आदिपूरुष विष्णुः त्रीणि नेत्राणि यस्य सः त्रिनेत्रः शंकरः 'विरूपाक्षस्त्रिलोचनः' इत्यमरः। अन्या मूर्तिः मूर्त्यंतरं मयूरव्यंसकादित्वात्समास । त्रिनेत्रस्य शंकरस्य मूर्त्यंतरं देहांतरं अन्यदेहं इति यावत् शंकरस्य अष्टमूर्तित्वात् अष्टासु मूर्तिषु अन्यतमा वह्निर्भवति तथाचोक्तं 'पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचंद्रमसौ सोमयाजीचेत्यष्टमूर्तय.' इति। पूर्वंसुदर्शनेन चक्रेण छिन्नानि पश्चात्समाहृतानि सुदर्शनसमाहृतानि 'पूर्वकालैकेति समास'। एतादृशानि इंधनानि काष्ठानि यस्य द्विजेन गरुडेन 'दंतविप्राण्डजाद्विजाः' इत्यमरः। पक्षः गरुत् सएव व्यजनं तेन वीजितं ध्मातं एतादृशं हव्यवाहनं अग्निं 'हुतभुक् दहनो हव्यवाहन' इत्यमर.। हूयते इति हव्यानि हुधातोः कर्मणि यत् हविर्द्रव्यैरित्यर्थः जुहाव हुधातोः कर्मणि लिट्। रूपकालङ्कारः ॥ १५ ॥

इदानीं खड्गोपयोगं दर्शयति। तपस्यतीति नदकः एतन्नामकः विष्णोः खड्गः शातयति नाशयति इति शातनः शद्धातोः णिजंतात् कर्तरि नंद्यादित्वात् ल्यु शदेरगतौ तः इति शदेस्तादेशः। शत्रूणां रिपूणां शातके घातके स्वामिनि प्रभौ श्रीविष्णौ 'स्वामिन्नैश्वर्ये' इति निपातनात्साधु. तपस्यति तपश्चरति सती-त्यर्थः। तपश्शब्दात् 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् तपसः परस्मैपदं चेति परस्मैपद। समिधः इध्मानि कुशा. दर्भाः तेषां छेदनं द्वैधीकरणं समित्कुशच्छेदनमेव मात्रं समित्कुशच्छेदनमात्रं तस्मिन् तत्परः आसक्तः 'तत्परे प्रसितासक्तेत्यमरः' अतएव सुसंयतः नियतः सन् सुराणामरयः शत्रवः दैत्याः तेषां वक्षांसि 'उरसि उरोवत्सं च वक्षश्चेत्यमरः'। तत्सबंधि क्षतजं रक्तं तदेव आसवं मद्यं 'मैरेयमासवः सीधु' इत्यमरः। तं तदा तप.काले न अभिननंद न मानयामासेत्यर्थं स्वामिनि शत्रुहिंसां त्यक्त्वा तपस्यति सति तदायुधं नंदकोपि समित्कुशच्छेदनतत्परः सन् दैत्यवक्षोरक्तपानं तत्याजेत्यर्थः ॥ १६ ॥

इदानीं गदयापि हिंसा त्यक्तेत्याह। तदा तप.काले गदा कौमोदकी

**नवं स्वकोशाहृतवारिधारया वनं तरूणामनुगृह्णता रणे।**
**न पाञ्चजन्येन जनस्य तेनिरे भियो विशुष्काशनिभैरवैरवैः॥ १८॥**
**सलीलमुद्दण्डसरोजविष्टरे निषद्य पादेन पुरोऽवलम्बिना।**
**परिस्पृशन्त्या चलवीचिमस्तकं तदा किलागायि कलं न पद्मया १९**

नाम्नी रणंतः दुंदुभयो यस्मिन् स रणदुदुभिः अतएव भैरवः भयंकरः एतादृशो यो रणः युद्धं तंसमेभ्येत्य प्राप्य भय भीतिं वितनोति वितन्वन् तस्मिन् अपध्वस्तानि धिक्कृतानि शिरस्त्राणां जालानि येन एतादृशे भयाभावात् त्यक्तशिरस्त्राणके इत्यर्थः। एतादृशे विद्विषां शत्रूणां शिरसि मस्तके मस्तकेषु इत्यर्थः। जात्येकवचन निमज्य पतित्वेति यावत् मज्जां धातुविशेष न जघास न भक्षयामास अदुभक्षणे लिटयन्यतरस्यां इत्यनेन घसादेशः। अनुप्रासालंकारः। विष्णौ तपस्यति शस्त्रप्रहाराभावात् गदायाः शत्रुमज्जाभक्षण न जातमित्यर्थः॥ १७॥

इदानीं पांचजन्योपयोगं दर्शयति। नवमिति। स्वस्य यः कोशः कुड्मलः तेन आहृता आनीता या वारिधारा उदकधारा तया तरूणां वृक्षाणां वन अनुगृह्णता अनुगृह्णातीत्यनुगृह्णन् तेन स्वकोशानीतवारिणा वन सेचयतेत्यर्थः। एतादृशेन पाचजन्येन पचजने दैत्यविशेषे भवः पांजजन्यः तेन विष्णोः शङ्खेन 'गंभीराञ्ज्यः' इति सूत्रे पचजनादितिवार्तिकेन ञ्यप्रत्ययः रणे युद्धे विशुष्कः जलरहितः य. अशनिः विद्युत् 'अशनिः स्त्रीपुंसयोः स्याच्चचलायां पवावपी' ति मेदिनी तद्वत् रवैः शब्दैः अशनिपातवत् शब्दैरित्यर्थः जनस्य लोकस्य भियः भीतयः न तेनिरे न विस्तारिताः तनु विस्तारे कर्मणि लिट् एत्वाभ्यासलोपौ अनुप्रासः॥ १८॥

'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनं। हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका' इति याज्ञवल्क्योक्तेः प्रोषितभर्तृकाणां कुलस्त्रीणां क्रीडादिनिषेधात् स्वपतौ विष्णौ तपस्यति लक्ष्म्यापि क्रीडादि त्यक्तमित्याह—सलीलमिति। तदा पुरपतपःकाले उत्कृष्टः दण्डः नाल यस्य तदुद्दंडं एतादृश यत् सरोज कमलं तदेव विष्टरः आसन 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासन' मित्यमरः। तस्मिन् सलीलं लीलया सहित सलील 'तेन सहेति तुल्ययोगे' इति समासः। निषदनक्रियाया विशेषणमेतत् सलीलं यथास्यात्तथा निषद्य उपविश्य षद्लृविशरणगत्यवसादनेषु अस्मात् क्त्वा ल्यबादेशश्च। पुर अग्रभागे अवलंबते तच्छीलः अवलंबीतेन 'सुप्यजातौणिनि' ताच्छील्ये णिनिः एतादृशेन पादेन चरणेन चलाः चचलाः या वीचयः ऊर्मयः 'स्त्रियां वीचिरथोर्मिषु' इत्यमरः। तासां मस्तकं शिरः अग्रमिति यावत् तत् परिस्पृशन्त्या परिस्पृशति इति परिस्पृशती तया परिपूर्वात् स्पृशतेः लटः शत्रादेशे उगितश्चेति ङीप् आच्छीनद्योर्नुम्। एतादृश्या पद्मया लक्ष्म्या 'लक्ष्मीः पद्मालया पद्मेत्यमरः' कला कलं

फणावतामुद्धरणेषु वारिधिप्रवाहसिक्तावुदयाचलस्थितः ।
वितत्य पक्षावधिपः पतत्रिणां व्यशोषयन्न प्रतिसूर्यमायतम् ॥२०॥
विहारमारण्यकमिष्टवस्तुदं विहाय वल्केन समं वितूस्तयन् ।
इतः किल क्रोधपराहतो हरिः पुरा प्रतस्थे बलिबन्धसिद्धये ॥२१॥
ततः प्रकृत्यैव गुणस्य सम्पदा हिरण्यगर्भस्य विधूतहिंसया ।
निषेव्यते श्वापदसम्पदा पदं तपस्विनामृद्धमिदं शमावहम् ॥२२॥

---

मधुरं यथास्यात्तथा न अगायि किल गानं न कृतमेवेत्यर्थः । कैगैशब्दे कर्मणि लुङ् चिण् तलोपः ॥ १९ ॥

फणावतामिति । पतत्रिणां पतत्राणि पक्षाः सन्ति येषां तानि पतत्रिणः पक्षिणः 'अत इनि ठनाविति' इनिः 'पतत्रं च तनूरुहं' इत्यमरः । तेषां अधिपः प्रभुः गरुड इति यावत् फणाः फटाः सन्ति येषां ते फणावन्तः सर्पाः तेषां उद्धरणेषु उत्कर्षणेषु इत्यर्थः । वारीणि धीयन्ते यस्मिन् वारिधिः समुद्रः कर्मण्यधिकरणे चेति किप्रत्ययः तस्य प्रवाहः तेन सिक्तिः सेचनं तस्यां सत्यां 'यस्य च भावेनेति' सप्तमी । सर्पोद्धरणकाले समुद्रोदकेन आर्द्रत्वे सति इत्यर्थः । उदयाचले स्थितः विद्यमानः सन् प्रतिसूर्यं सूर्यस्य आभिमुख्यं प्रतिसूर्यं 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन अव्ययीभावः । आयतं विस्तृतं यथास्यात्तथा पक्षौ पत्रे 'गरुत्पक्षच्छदाः पत्रं' इत्यमरः । वितत्य विस्तार्य न व्यशोषयन् न विशोषितवान् । भगवतस्तपसि स्थितत्वात् तत्रैव गरुडस्याप्यागमनात् समुद्रस्थसर्पाणां ग्रहणाभावात् आर्द्रीभावाभावेन पक्षशोषणं नासीदित्यर्थः । अनुप्रासालंकारः ॥ २० ॥

विहारमिति । पुरा कदाचित् पूर्वस्मिन् काले इत्यर्थः इष्टवस्तुदं अभीष्टं वस्तु ददातीति अभीष्टवस्तुदः तं अभीष्टप्रदमित्यर्थः आरण्यकं अरण्ये भवं आरण्यकः 'अरण्यान्मनुष्ये' इति सूत्रस्थेन 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यं' इति वार्तिकेन वुञ्प्रत्ययः तं । विहारं तपोवनं वा विहाय त्यक्त्वा क्रोधेन कोपेन बलिविषयकेणेत्यर्थः । पराहतः ताडितः व्याप्त इति यावत् एतादृशः हरिः वामनरूपः वल्केन समं वल्कलेन सार्धमित्यर्थः । वितूस्तानि जटीभूतकेशान् विहरति इति वितूस्तयन् जटाभावं परित्याज्य मृदूकुर्वन् इत्यर्थः । 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति वितूस्तशब्दात् णिच् । अत्र तपःकरणाभावात् जटाभारत्यागपूर्वकं मृदुकरणमिति भावः । बलेः एतन्नाम्नो दैत्यस्य यो बन्धः बन्धनं तस्य सिद्धिः निष्पत्तिः बलिबन्धनार्थमित्यर्थः । इतः एतस्मात् प्रदेशात् प्रतस्थे किल जगामेत्यर्थः । समवसमविप्रेभ्यः स्थः इति कर्तर्यात्मनेपदं ॥ २१ ॥

ततइति । ततः वामनप्रस्थानानंतरं हिरण्यं सौवर्णं ब्रह्माण्डं गर्भे यस्य सः हिरण्यगर्भः अत्र हिरण्यगर्भपदेन विष्णुरुच्यते 'हिरण्यगर्भः समवर्तताग्रे' इति

**प्रगृह्य पुच्छे शिशवस्तपस्विनां मसीपयः सेककृतानिवासितान् ।**
**यदङ्गबिन्दून् गणयन्ति चापलाद्विलोकयद्वीपिनमेनमप्रतः ॥ २३ ॥**

---

श्रुतौ । हिरण्यगर्भपदेन 'आत्मा वा इदमेकमेवाग्र आसीत्' इत्यादि श्रुतिसमाख्यया योग्यतया च विष्णोरेव निर्णीतत्वात् । तथा च हिरण्यगर्भस्य विष्णोः गुणस्य अर्थात्सत्त्वगुणस्य संपदा सपत्त्या अत्र संपदः इति पाठः समीचीनः प्रहत्येति कृद्योगेन कर्तृकर्मणोः कृतीति कर्तरिषष्ठ्या न्याय्यत्वात् यथाश्रुततृतीयांतपाठे तु अतर्थौ येनादर्शनमिच्छतीति निर्देशेन कर्तृकर्मणोरित्यस्य अनित्यत्वात् कर्तृकरणयोस्तृतीया इत्यनेन तृतीया बोध्या । प्रहत्येव प्रहारेणैव विधुता उत्सृष्टा हिंसा यया '.समुज्झितं धूतमुत्सृष्टे ' इत्यमरः । एतादृश्या श्वापदसपदाश्वापदमित्यत्र 'शुनोदंतदष्ट्रा' इति वार्तिकेन पदशब्दे परे पूर्वपदस्य श्वन् इत्यस्य दीर्घः रथतरादिवत् वनचरेषु पशुषु रूढोयं तेषां सिंहव्याघ्रादिवनचरपशूनां वा सपत् सपत्तिः तया प्रभूतश्वापदैरित्यर्थः । शमावहं आवहतीत्यावहं वहप्रापणे पचाद्यच् शमस्य शांतेः आवहं शमावहं अत्रत्यानां मनः शांतिकारीति यावत् एतादृश तपस्विनां प्रशस्तं तपो येषां ते तपस्विनः 'तपः सहस्रेति विनिः' तेषां ऋद्धं समृद्धं इदं पुरोवर्तिपदं स्थानं ' पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ' इत्यमरः । निषेव्यते निपूर्वात् सेवृधातोः कर्मणि लट् । अत्र विष्णोः सत्वगुणत्वेन तत्सद्भावेन नैजं रजोगुणं हित्वा सहजवैराण्यपि श्वापदानि हिंसावर्जं सुखेन वर्तते इति तात्पर्यं । उत्प्रेक्षानुप्रासौ ॥ २२ ॥

पूर्वस्मिन् श्लोके विधुतहिंसतेति सहजवैरैरपि श्वापदैः यानुकरं त्यक्तमित्युक्तं तदेव दर्शयति द्वाभ्यां । प्रगृह्येति । तपस्विनां तापसानां 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः' इत्यमरः । शिशवः शावकाः 'पृथुकः शावकः शिशुः' इत्यमरः । पुच्छे प्रगृह्य पुच्छे धृत्वेत्यर्थः । अग्रे वृक्षः कपिसंयोगीतिवत् अवच्छेद्यावच्छेदकभावः संबंधः सप्तम्यर्थः पुच्छावच्छेदेन गृहीत्वेति यावत् मस्याः कज्जलस्य पयः उदकं मेला इत्यर्थः ( शाई इति भाषायां ) तस्य यः सेकः सेचनं तेन कृतानिव उत्पादितानिव असितान् कृष्णवर्णान् ' कृष्णे नीलासितश्यामे 'त्यमरः । एतादृशान् यदङ्कबिन्दून् यस्य द्वीपिनः अङ्गे शरीरे तत्संबंधिनः ये बिंदवः पृषता. ' पृषंति बिंदुपृषता ' इत्यमरः । तान् चापलात् चपलानां चंचलानां भावः चापलं चांचल्यं तस्मात् गणयति संख्यान् करोति एतादृशं अमतः अप्रमादे इत्यर्थः । शान्त्यादिव्याघ्रसम्बन्धातातिशयोक्तिः एवं पूर्वोक्त अन्वादेशात्वात् 'द्वितीया टौस्स्वेनः' इत्येनादेशः । एतादृशं द्वीपिनं शार्दूलं ' शार्दूलद्वीपिनौ व्याघ्रे ' इत्यमरः । विलोकय पश्य भोक्तशीने निर्वंताशोद् । उत्प्रेक्षालंकारः ॥ २३ ॥

इमौ हरी संहृतरोषशङ्कितौ नितान्ततप्तौ तपनस्य दीप्तिभिः।
तलं गजस्य स्नुतगण्डसम्पदः फणातपत्रं फणिनश्च वाञ्छत ॥२४॥
तथा गिरं व्याहरतैव रोदसी वितत्य यातं पवनेन रंहसः।
विधूनयत्तद्विपिनं द्विपद्बलं ध्वजैरुपालक्ष्यत काकलाञ्छनैः ॥२५॥
सरोषरक्षः प्रतिबिम्बविग्रहं कृपाणपत्रे शरदम्बरत्विषि।
विगूढतां जीवितपातलिप्सया स्थितः समास्थाय यमो यथा बभौ

---

इमाविति। संहृतरोषशङ्कितौ रोषः क्रोधः शङ्कित आशङ्का भावे क्तः संहृते रोषशङ्किते याभ्यां एतादृशौ इमौ पुरोवर्तिनौ हरी सिंहभेकौ 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिः' इत्यमरः। द्वन्द्वादौ संहृतपदस्य संयोगात् त्यक्तकोपशङ्कावित्यर्थः। सिंहः त्यक्तकोपः भेकः त्यक्तशङ्क इति यावत्। तपनस्य सूर्यस्य दीप्तिभिः तेजोभिः नितान्तं अत्यन्तं यथास्यात्तथा तप्तौ 'तीव्रैकान्तनितान्तानि' इत्यमरः। एतादृशौ सन्तौ स्नुतगण्डसम्पद स्नुता गण्डसम्पत् कटसम्पत्तिर्यस्य मदस्राविण इत्यर्थः। एतादृशस्य गजस्य हस्तिनः तलं उदराधोभागं च फणिनः सर्पस्य 'चक्षुःश्रवाः काकोदरः फणी' इत्यमरः। फणा एव फटैव आतपत्रं छत्रं 'स्फटायां तु फणा द्वयोः' 'छत्रं स्यादातपत्रं' इत्युभयत्राप्यमरः। वाञ्छतः इच्छतः वाञ्छेरिच्छायां लट् उत्प्रेक्षानुप्रासौ ॥ २४॥

तथेति। तेन प्रकारेण तथा पूर्वोक्तप्रकारेण गिरं वाणीं 'गीर्वाग्वाणी सरस्वती' इत्यमरः। व्याहरतीति व्याहरन् व्याहारे मृते इति तथा 'व्याहार उक्तिर्लपितं' इत्यमरः। तेन एव ब्रुवतैव श्रीरामचन्द्रेण कर्त्रा रंहसः वेगस्य 'रंहस्तरसी तु रयः स्यदः' इत्यमरः। पवनेन वायुना रोदसी द्यावापृथिव्यौ 'द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी' इत्यमरात्। वितत्य विस्तीर्य व्याप्येति यावत् यातं गतं तत् रक्षाधिष्ठितं विपिनं अरण्यं विधूनयति कम्पयतीति विधूनयत् अथवा रंहसा पवनेन तद्विपिनं विधूनयत् रोदसी वितत्य यातमिति अन्वयः एतादृशं द्विपतां शत्रूणां बलं सैन्यं काकाः वायसाः लाञ्छनानि चिह्नानि येषां ते एतादृशैः ध्वजैः केतनैः हेतुभिः उपालक्ष्यत आज्ञायत ॥ २५॥

सरोष इति। रोषेण क्रोधेन सहितं सरोषं तच्च तत् रक्षः राक्षसं विगृह्णाति विगृहीति देहं ब्रुवन्ति इति विग्रहस्तं शरीरमित्यर्थः। तेषां जीवितस्य जीवनस्य पातः पातं तस्य लिप्सा लब्धुमिच्छा लभ् धातोः सन्नन्तात् अप्रत्ययः इत्यनेन अप्रत्ययः इत्यादेशः अन्यापादलोपश्च तया शरदः संबन्धि यत् अम्बरं आकाशं तद्वत् त्विट् कान्तिर्यस्य एतादृशे कृपाणपत्रे खड्गधारायां स एव पत्रं दलं तस्मिन् प्रतिबिम्बमेव विग्रहं देहं तं समास्थाय स्थितः यथा यमः संवृतः तथा बभौ शुशुभे ॥ २६॥

असंख्यगृह्या अपि तत्र सैनिकाः पिशाचरक्षस्ततिभिर्निरन्तरम् ।
कृतान्धकारं रथचक्ररेणुभिर्जगुर्जगत्सत्त्वरजस्तमोमयम् ॥ २७ ॥
चकार लक्ष्यं प्रथमो बलोत्तरो नभःश्रितं तत् पदिको बलं द्विषाम् ।
ततिं क्षितिस्थामनुजो जघान च द्रवत्तुरङ्गामतिदन्तयद्विभुम् ॥२८॥

---

असंख्यगृह्या इति । नास्ति संख्या येषां ते असंख्याः ते च ते गृह्याः ह्येयाः गृह्णग्रहणे 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप् । विशेषणं विशेष्येणेति समासः । अथवा संख्याया अभावः असंख्यं तत्र गृह्याः असंख्यगृह्याः संख्यया परिच्छेत्तुमशक्या इत्यर्थः । एतादृशाः तत्र राक्षससेनायां सैनिकाः सेनायां समवेताः सैनिकाः समवायान् समवैति इति अधिकारे सेनायावेति ठक्प्रत्ययः । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः । पिशाचाश्च रक्षांसि च तेषां ततयः पंक्तयः ताभिः हेतुभिः निरंतरं निर्गत अंतरं अवकाशो यस्मात् तत् व्याप्तमित्यर्थः । रथानां स्यदनानां चक्राणि तेषां रेणुभिः रजोभिः 'रेणु द्वयोः स्त्रियां धूलिः पांसुर्ना न स्त्रियां रजः' इत्यमरः । तैः हेतुभिः कृतः उत्पादितः अंधकारः ध्वांतं यस्मिन् 'अंधकारोऽस्त्रियां ध्वांतं' इत्यमरः । एतादृशं जगत् विष्टपं सत्वं च रजश्च तमश्च सत्वरजस्तमांसि सत्वरजस्तमःप्रचुरं सत्वरजस्तमोमयं तत्प्रकृतवचने मयट् इति मयट् । अपिः संभावनायां 'गर्हासमुच्चयप्रश्नशंकासंभावनास्वपीत्यमरः' । सत्वरजस्तमोगुणात्मकमिति संभावितमिति यावत् तथा जगुः वर्णयामासुः कैगैशब्दे लिट् । पिशाचादिप्राणिसत्वात् सत्वमयं रेणुभिः रजोमयं अंधकारात्तमोमयमिति ज्ञेयं ॥ २७ ॥

चकारेति । बलोत्तरः बलेन वीर्येण उत्तरः श्रेष्ठः तृतीया तत्कृतार्थेति समासः एतादृशः पदिकः पादाभ्यां चरतीति पदिकः 'चरतीति ठक्' इत्केचरतावुपसंख्यानमिति पद्भावः एतादृशः प्रथमः पूर्वोत्पन्नः श्रीरामभद्र इत्यर्थः । नभः आकाशं 'नभोंतरिक्षं गगन'मित्यमरः । तत् श्रितं आश्रितं तत्पूर्वोक्तं द्विषां शत्रूणां 'द्विड्विपक्षाहितामित्रे 'त्यमरः । बलं सैन्यं लक्ष्यं शरव्यं 'लक्ष्यं लक्ष्यं शरव्यं चेत्यमरः' । चकार अनु अजनीत्यनुजः यवीयान् 'अन्येष्वपि दृश्यते इति जनेर्डः' लक्ष्मणः इत्यर्थः । क्षितौ पृथ्व्यां तिष्ठतीति क्षितिस्था । सुपीति योगविभागेन स्थाधातोः क प्रत्ययः तां द्रवन्तुरंगा द्रवंतः पलायन्तः तुरंगा अश्वा यस्यां सा तथा तां द्रवंतीं शतृप्रत्ययः । पुनः लक्ष्मणग्रामस्थां प्रथमाभावानाभिकल्प्येति क्वचित् शतृप्रत्ययः । 'घोटकेवीति तुरग तुरंगाश्चेत्यमरः' । अतिदंतवाहिषु इतिवक्तरघटितः पाठ. साधु अवाहता दंता येषां ते दंतहतः इतिभग्नार्थः अस्य 'अत इनि ठनौ' इति मतुबर्थको गुणः तथा वाहुल्यात् समासेऽयं इति विग्रहस्य गौ इर्ति अस्तुतत्र प्रकार एवायमिति भाति इतीति दंतहस्य कारि अंशादात्तुत्कमात् । अर्थात्कातिबाहुल्यवाध्यये प्रमाणाभावाच्च अति-

युधि द्विपा रामशरेण दारिताः कृतत्वराधोरणमुक्तकन्धराः ।
यतो धरण्यामनुकृष्टवारिदं दिवः पतन्तो दद्दृशुः स्वसैनिकान् २९
शरासने वर्त्मनि लक्ष्यभेदने परैरुपालक्ष्यत नेषुसन्ततिः ।
ऋतेऽपि हेतोरिव दीर्णवक्षसो निपेतुरस्य प्रधने सुरद्विषः ॥ ३० ॥
यथा गुणस्य ध्वनयः समुद्ययुर्निपातशब्देन समं युधि द्विपाम् ।
तथाऽस्य योद्धुर्धनुषो विनिर्गता जवे विशेषं विदधुः शिलीमुखाः ३१

प्रयोगाणामशुद्धानामुपलभ्येत्यास्तां तावत् अतिदंतयत् इति यथास्थितपाठो मा अर्थबोधको भवेदित्यादरणीयः । अतिशयिता ये दंतवंतः तैः विभुः व्यापिद्य एतादृशीं तति पंक्तिं अर्थात् द्विषामिति संबध्यते जघान च नाशयामास । हन् हिंसागत्योः लिट् द्वित्वअभ्यासादेति कुत्वं ॥ २८ ॥

युधीति । युधि आजौ 'समित्याजि समिद्युधः' इत्यमरः । रामस्य रामभद्रस्य शरः बाणः तेन दारिता. भेदिताः 'दारिते भिन्नभेदितौ' इत्यमरः । अत एव कृता त्वरा यैः एतादृशा ये आधोरणाः हस्तिपकाः 'आधोरणा हस्तिपका' इत्यमरः । तैः मुक्ता त्यक्ता कंधरा ग्रीवा येषां ते 'शिरोधिः कंधरेत्यपी'-त्यमरः । स्वपातभिया आधोरणैस्त्यक्तकंधरा इत्यर्थः । वारीणि उदकानि ददतीति वारिदाः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । अनुकृष्टा अनुकृताः वारिदाः मेघाः यस्मिन् कर्मणि तत् अनुकृष्टवारिदं पतनक्रियाविशेषणमिदं 'वारिदोऽम्बुभृत्' इत्यमरः । दिवः आकाशात् पततः पत् गतौ शतृप्रत्ययः । द्विपाः द्वाभ्यां तुंडात् शुंडाभ्यां पिबंतीति द्विपाः । हस्तिनः युधीति भोगविभागात् कः धरण्यां पृथिव्यां यतः गच्छतः इण् धातोः शतृप्रत्ययांतस्य द्वितीयांतमिदं रूपं एतादृशान् स्वसैनिकान् स्वस्य सैनिकाः तान् ददृशुः बभंजुः ॥ २९ ॥

शरासन इति । शरासने धनुषि 'शरासनकोदंडकार्मुकं' इत्यमरः । वर्त्मनि मार्गे लक्ष्यस्य शरव्यस्य भेदने विदारणे तस्मिन् इषूणां बाणानां संततिः परंपरा परैः शत्रुभिः नोपालक्ष्यत न प्राज्ञायतेत्यर्थः । एतेन श्रीरामभद्रस्य हस्तलाघवं दर्शितं । अतएव हेतोर्ऋतेऽपीव हेतुं विनापीवेत्यर्थः । 'अन्यारादितरर्तेति' ऋते शब्दयोगे पंचमी । दीर्णे विदीर्णे वक्षः उरो येषां ते दीर्णवक्षसः एतादृशाः सुरद्विषः सुरान् द्विषंतीति तथा असुराः सुप्युपपदे क्विप् अस्य श्रीरामभद्रस्य प्रधने युद्धे 'प्रधनप्रविदारणमित्यमरः' । निपेतुः निपूर्वात्पत् इत्यस्मात् लिट् एत्वाभ्यासलोपौ । उत्प्रेक्षालंकारः ॥ ३० ॥

यथेति । युधि युद्धे यथा गुणस्य धनुर्गुणस्य ध्वनयः शब्दाः द्विपां शत्रूणां निपातस्य पतनस्य शब्दः ध्वनिः तेन समं सह 'साकं सत्रा समं सहेत्यमरः', समुद्ययुः समुत्थामुरित्यर्थः । तथा तेन प्रकारेण योद्धुः युध्यतीति योद्धा तस्य योद्धुः युध संप्रहारे तृच् एतादृशस्य अस्य रामभद्रस्य धनुषः शरासनात् विनिर्गता विनिष्क्रांताः शिलीमुखाः बाणाः जवे वेगे 'रंहस्तरसी तु रयः स्यदः जवः'

सुरारिहस्तच्युतशस्त्रजालकान्यलब्धलक्ष्याणि चिरं नभस्तले ।
विशुष्कपत्रप्रतिमानि तच्छरप्रतानवातोपहतानि बभ्रमुः ॥ ३२ ॥
प्रभञ्जनेनाहितपक्षतिध्वनि प्रसर्पतां राजसुतस्य पत्रिणाम् ।
ऋभुद्विषस्ते प्रतिलोममाहृतैः शरैर्निजैरेव दृढं निजघ्निरे ॥ ३३ ॥
क्षतं पृषत्केन पतत्रिणां पथः पतद्बलं तत्तनयस्य भूभृतः ।
निपातखेदादशिवे भुवस्तले भियेव तूर्णं जहुरन्तराऽसवः ॥ ३४ ॥

---

इत्यमरः । विशेषं आधिक्यं विदधुः चक्रुः । विपूर्वाद्धातेः कृञर्थेवर्तमानात् लिट् । सहोक्त्यलंकारः ॥ ३१ ॥

सुरारीति । विशुष्काणि यानि पत्राणि पर्णानि तानि प्रतिमा उपमा येषां तानि ' प्रतिमान प्रतिबिंब प्रतिमा प्रतियातना प्रतिच्छाया ' इत्यमरः । अतएव तस्य रामचन्द्रस्य ये शरा बाणाः तेषां ये प्रतानाः समूहाः तनुविस्तारेभावे घञ् । वातेन वायुना उपहतानि ताडितानि अतएव वाय्वधीनत्वेन इतस्ततो गमनात् न लब्ध प्राप्त लक्ष्य शरव्य यैः एतादृशानि सुराणां अरयः शत्रवः दैत्याः तेषां हस्तेभ्यः च्युतानि यानि अस्त्राणां जालकानि समूहाः नभस्तले आकाशमार्गे चिरं चिरकालं बभ्रमुः भ्रमुचलने लिट् ॥ ३२ ॥

प्रभञ्जनेनेति । ऋभून् देवान् द्विषन्ति ते ऋभुद्विषः दैत्याः ' आदित्या ऋभवः ' इति कोशः । सत्सूद्विषेति क्विप् । आहित' पक्षतीनां पक्षमूलानां ध्वनिः शब्दो यस्मिन् तत् आहितपक्षतिध्वनि यथास्यात्तथा प्रसर्पणक्रियाया विशेषणमिदं । "पक्षात्तिरितिसूत्रेण' तिप्रत्ययः ' स्त्री पक्षतिः पक्षमूल ' इत्यमरः प्रसर्पंति गच्छन्तीति प्रसर्पंतः तेषां सशब्द गच्छतामित्यर्थः । राज्ञः दशरथस्य सुतः पुत्रः तस्य रामचन्द्रस्य पतत्राणि पक्षाः सन्ति येषां ते पतत्रिणः बाणाः तेषां ' अत इनि ठनौ ' इति इनिः । ' पत्रीरोपमद्युद्वर्णयोः ' इत्यमरः । प्रभञ्जनेन वायुना ' पवमानप्रभञ्जनौ ' इत्यमरः । प्रतिलोमं विलोमं ' अच्प्रत्यन्ववपूर्वात्सामलोम्नः ' इत्यच्प्रत्ययः । आहरणक्रियाविशेषणं चैतत् । आहृतैः आनीतैः निजैरेव आत्मीयैरेव ' स्वके निजे निज निजु ' इत्यमर । शरैः बाणैः दृढं यथास्यात्तथा निजघ्निरे ताडिताः निपूर्वाद्धन्तेः कर्मणि लिट् । अनुप्रासः ॥ ३३ ॥

क्षतमिति । भुवं बिभर्तीति पालयतीति भूभृत् दुभृञ्धारणे क्विप्चेति भृञाद्धो. क्विप् । तस्य दशरथस्य तनयस्य पुत्रस्य श्रीरामभद्रस्य पृषत्केन बाणेन ' पृषत्कबाणविशिखा ' इत्यमरः । क्षतं ग्रहृत पतत्रिणां पक्षिणां 'पतत्रिपत्रिपतगपतत् पत्ररथाण्डजा' इत्यमरः । पथः मार्गात् आकाशादित्यर्थः । पतदिति पतत् एतादृशं तत्पूर्वोक्त बलं राक्षससैन्य कर्म असवः प्राणाः अपांल्लिङ्गवत्वं 'पुंसिभूम्न्यसवः प्राणा' इत्यमरः । अशिवे अमङ्गले पूर्वं राक्षससैन्यव्याप्तत्वात् अशिवे. मीति व्यवत् तद्युक्त निर्जनसिथौ बुद्धिस्थ—'
कस्यचित् । प्रमाणं तावदार्यो वा निर्गते दुःखितास्मिवत् '

शिताङ्कुशन्यासविधूतमस्तकाः शिरःसमीपे विनिविष्टबाहवः ।
ध्रुवं नदन्तो युधि तं प्रहारिणं भयादयाचन्त यथाऽरिदन्तिनः ॥३५
द्विपं करीरीयुगमूलखण्डितप्रशीर्णदन्तं समदेन पश्यता ।
मृधावतारव्यथितेन चेतसि क्षणं विचक्रे निकटेन दन्तिना ॥३६॥
करी करं यातमुदग्रविग्रहः परं प्रहर्तुं प्रतिहत्य रंहसा ।
शरेण भित्त्वा निखिले निकीलिते शशाक मोक्तुं न भुजस्य मण्डले ३७

पृथिव्याः तले निपातस्य पतनस्य खेदः दुःखं तस्मात् भियैव भीत्यैव 'भीत्रार्थानां भयहेतु'रित्यपादानत्वं अतरा मध्ये तूर्णं सत्वरं 'सत्वरं चपलं तूर्णमविलंबितमित्यमरः' जहु तत्यजुः ओहाक् त्यागे लिट् । उत्प्रेक्षानुप्रासौ अलंकारौ ॥३४॥

शितेति । शिताः तीक्ष्णाः ये अंकुशाः सृणयः 'अंकुशोऽस्त्रीसृणिः स्त्रियां इत्यमरः । तेषां ये न्यासाः आरोपणानि तैः विधूतानि कंपितानि मस्तकानि यैः अतएव शिरःसमीपे शिरसां मस्तकानां समीपे समीपभागे विनिविष्टाः स्थिताः बाहवो येषां ते युधि समरे नदंतः अव्यक्तशब्दं कुर्वंतः नदअव्यक्ते शब्दे लटः शत्रादेशः एतादृशाः अरिदंतिनः शत्रुहस्तिनः प्रहरति तच्छीलः प्रहारी प्रपूर्वाद्धरतेः सुप्यजाताविति णिनिः तं रामचंद्रं भयात् ध्रुवं अयाचंत यथा प्रार्थयत इवेत्यर्थः । यथा कश्चिद्दुर्बलः हस्तौ मस्तके परिधृत्वा शिरः कंपयन् सन् प्रबलं शरणं याति तद्वत् हस्तिनः रामभद्रं शरणं ययुः किमित्युत्प्रेक्षा । उत्प्रेक्षानुप्रासावलंकारौ ॥३५॥

द्विपमिति । करीर्योः दंतमूलयोः युगं युग्मं 'करीरी चीचिकायां स्यात् दंतमूले च दंतिनां' इति मेदिनी । 'युगं युग्मे कृतादिषु' इत्यमरः । तेन यत् मूले मूलभागे खंडितं भेदः खंडिभेदने अस्मात् नपुंसके भावे क्तः तेन प्रशीर्णौ दंतौ रदनौ यस्य एतादृशं द्विपं हस्तिनं 'द्विरदोऽनेकपो द्विपः' इत्यमरः । पश्यति अवलोकयति इति पश्यन् तेन मदेन दानेन सहितः समदः तेन अनेन गर्वितत्वं सूचितं एवंभूतेनापि मृधे युद्धे योऽवतारः आगमनमित्यर्थः । 'मृधमास्कंदनं संख्यं' इत्यमरः । तेन व्यथितेन पीडितेन पूर्वं सगर्वत्वेपि भग्नदंतद्विपावलोकनात् युद्धप्रासिसंजातदुःखेनेत्यर्थः एतादृशेन निकटेन समीपस्थेन 'समीपे निकटासन्ने' इत्यमरः' । दंतिना हस्तिना चेतसि अंतःकरणे क्षणं क्षणमात्रं क्रियाविशेषणमिदं विचक्रे विकृतमित्यर्थं । विकारो लब्ध इति यावत् । वेःशब्दकर्मणः इत्युक्ते धेरित्य नुवर्तमाने अकर्मकाच्चेति सूत्रेण वेः कृञोऽकर्मकत्वप्रयुक्तात्मनेपदविधानेन छात्रा विकुर्वते इत्युदाहरणदानेन च विकारार्थकस्य कृञोऽकर्मकत्वं स्पष्टमेव । अतएवात्र भावे लिट् । अनुप्रासः ॥ ३६ ॥

करीति । उदग्रः उच्चः विग्रहः देहो यस्य 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुंगे च वामने' । 'शरीरं वर्ष्मविग्रहः' इत्युभयत्राप्यमरः । एतादृशः करी हस्ती रंहसा वेगेन 'रंहस्तरसी तु रयः स्यदः' परं शत्रुं प्रहर्तुं प्रतिहन्तुं समाहन्तुं यातं गतं करं शुंडां शरेण बाणेन अर्थात् रामेण भित्त्वा निखिले संपूर्णे भुजस्य

सुरारिहस्तच्युतशस्त्रजालकान्यलब्धलक्ष्याणि चिरं नभस्तले ।
विशुष्कपत्रप्रतिमानि तच्छरप्रतानवातोपहतानि बभ्रमुः ॥ ३२ ॥
प्रभञ्जनेनाहितपक्षतिध्वनि प्रसर्पतां राजसुतस्य पत्रिणाम् ।
ऋभुद्विषस्ते प्रतिलोममाहृतैः शरैर्निजैरेव दृढं निजघ्निरे ॥ ३३ ॥
क्षतं पृषत्केन पतत्त्रिणां पथः पतद्बलं तत्तनयस्य भूभृतः ।
निपातखेदादशिवे भुवस्तले भियेव तूर्णं जहुरन्तराऽसवः ॥ ३४ ॥

---

इत्यमरः । विशेषं आधिक्य विदधु' चक्रुः । विपूर्वाद्धातेः कृञर्थेवर्तमानात् लिट् । सहोक्त्यलंकारः ॥ ३१ ॥

सुरारीति । विशुष्काणि यानि पत्राणि पर्णानि तानि प्रतिमा उपमा येषां तानि ' प्रतिमान प्रतिबिंब प्रतिमा प्रतियातना प्रतिच्छाया ' इत्यमरः । अतएव तस्य रामचन्द्रस्य ये शरा बाणाः तेषां ये प्रतानाः समूहाः तनुविस्तारेभावे घञ्। वातेन वायुना उपहृतानि ताडितानि अतएव वाय्वधीनत्वेन इतस्ततो गमनात् न लब्ध प्राप्त लक्ष्य शरव्य यैः एतादृशानि सुराणां अरय' शत्रवः दैत्याः तेषां हस्तेभ्यः च्युतानि यानि अस्त्राणां जालकानि समूहाः नभस्तले आकाशमार्गे चिर चिरकाल बभ्रमुः भ्रमुचलने लिट् ॥ ३२ ॥

प्रभञ्जनेनेति । ऋभून् देवान् द्विषति ते ऋभुद्विषः दैत्या' ' आदित्या ऋभवः ' इति कोशः । सत्सूद्विषेति क्विप् । आहितः पक्षतीनां पक्षमूलानां ध्वनिः शब्दो यस्मिन् तत् आहितपक्षतिध्वनि यथास्यात्तथा प्रसर्पणक्रियाया विशेषणमिदं । 'पक्षात्तिरितिसूत्रेण' तिप्रत्ययः ' स्त्री पक्षतिः पक्षमूल ' इत्यमरः प्रसर्पति गच्छतीति प्रसर्पतः तेषां सशब्द गच्छतामित्यर्थः । राज्ञः दशरथस्य सुतः पुत्रः तस्य रामचन्द्रस्य पतत्राणि पक्षाः सन्ति येषां ते पतत्रिणः बाणाः तेषां ' अत इनि ठनौ ' इति इनि' । ' पत्रीरोपइषुर्द्वयोः ' इत्यमरः । प्रभञ्जनेन वायुना ' पवमानप्रभञ्जनौ ' इत्यमरः । प्रतिलोम विलोमं ' अच्प्रत्यन्वपूर्वात्सामलोम्नः ' इत्यच्प्रत्ययः । आहरणक्रियाविशेषणं चैतत् । आहृतैः आनीतैः निजैरेव आत्मीयैरेव ' स्वके नित्ये निज त्रिषु ' इत्यमरः । शरैः बाणैः दृढं यथास्यात्तथा निजघ्निरे ताडिताः निपूर्वाद्धतेः कर्मणि लिट् । अनुप्रासः ॥ ३३ ॥

क्षतमिति । भुवं बिभर्तीति पालयतीति भूभृत् सत्सूद्विषेति क्विप्चेति भृधातोः क्विप् । तस्य दशरथस्य तनयस्य पुत्रस्य श्रीरामचन्द्रस्य पृषत्केन बाणेन ' पृषत्कबाणविशिखा ' इत्यमरः । क्षतं [illegible] पतत्रिणां पक्षिणां 'पतत्त्रिपक्षिशकुनिशकुन्त पत्ररथाण्डजाः ' इत्यमरः । पथः मार्गात् आकाशादित्यर्थः । पतदिति पतत् एतादृश तत्पूर्वोक्त बल राक्षससैन्यं कर्म असवः प्राणाः कर्तारः 'पुंसि भूम्न्यसवः प्राणाः ' इत्यमरः । अशिवे अमङ्गले पूर्वंसुरराक्षसभटाधिष्ठितत्वात् अशुचि-मीति [illegible] तदुक्तं निर्णयसिन्धौ वृद्धमनुः—' ग्राममध्यगतो यावत् शवस्तिष्ठति कस्यचित् । ग्रामस्य तावदशौचं न क्रियते हविशाभिचारात् ' इति । एतादृशे भुवः

शितांकुशन्यासविधूतमस्तकाः शिरःसमीपे विनिविष्टबाहवः ।
ध्रुवं नदन्तो युधि तं प्रहारिणं भयादयाचन्त यथाऽरिदन्तिनः ॥३५

द्विपं करीरीयुगमूलखण्डितप्रशीर्णदन्तं समदेन पश्यता ।
मृधावतारव्यथितेन चेतसि क्षणं विचक्रे निकटेन दन्तिना ॥३६॥

करी करं यातमुदग्रविग्रहः परं प्रहर्तुं प्रतिहत्य रंहसा ।
शरेण भित्वा निखिले निकीलिते शशाक मोक्तुं न भुजस्य मण्डले ३७

---

पृथिव्याः तले निपातस्य पतनस्य खेदः दुःख तस्मात् भियैव भीत्यैव 'भीत्रार्थानां भयहेतु'रित्यपादानत्व अंतरा मध्ये तूर्णं सत्वर 'सत्वर चपलं तूर्णमविलम्बितमित्यमरः' जहु तत्यजुः ओहाक् त्यागे लिट् । उत्प्रेक्षानुप्रासौ अलंकारौ ।३४॥

शितेति । शिताः तीक्ष्णाः ये अङ्कुशा. सृणय 'अङ्कुशोऽस्त्रीसृणिः स्त्रियां इत्यमर । तेषां ये न्यासाः आरोपणानि तैः विधूतानि कंपितानि मस्तकानि यैः अतएव शिर.समीपे शिरसां मस्तकानां समीपे समीपभागे विनिविष्टाः स्थिताः बाहवो येषां ते युधि समरे नदतः अव्यक्तशब्दं कुर्वतः नदअव्यक्ते शब्दे लटः शत्रादेशः एतादृशाः अरिदंतिनः शत्रुहस्तिन प्रहरति तच्छीलः प्रहारी प्रपूर्वोऽहरतेः सुप्यजातौ णिनि: तं रामचंद्रं भयात् ध्रुवं अयाचत यथा प्रार्थयत इवेत्यर्थः । यथा कश्चिद्दुर्बलः हस्तौ मस्तके परिधृत्वा शिरः कंपयन् सन् प्रबलं शरणं याति तद्वत् हस्तिनः रामभद्रं शरणं ययुः किमित्युत्प्रेक्षा । उत्प्रेक्षानुप्रासावलकारौ॥३५॥

द्विपमिति । करीर्योः दंतमूलयोः युगं युग्मं 'करीरी चीरिकायां स्यात् दंतमूले च दंतिनां' इति मेदिनी । 'युगं युग्मे कृतादिषु' इत्यमरः । तेन यत् मूले मूलभागे खंडितं भेदः खडिभेदने अस्मात् नपुंसके भावे क्तः तेन प्रशीर्णौ दंतौ रदनौ यस्य एतादृशं द्विपं हस्तिनं 'द्विरदोऽनेकपो द्विपः' इत्यमरः । पश्यति अवलोकयति इति पश्यन् तेन मदेन दानेन सहितः समदः तेन अनेन गर्वितत्वं सूचितं एवंभूतेनापि मृधे युद्धे योऽवतारः आगमनमित्यर्थः । 'मृधमास्कंदनं संख्य' इत्यमरः । तेन व्यथितेन पीडितेन पूर्वं सगर्वत्वेपि भग्नदंतद्विपावलोकनात् युद्धप्राप्तिसजातदुःखेनेत्यर्थः एतादृशेन निकटेन समीपस्थेन 'समीपे निकटासन्ने' त्यामरः' । दंतिना हस्तिना चेतसि अंतःकरणे क्षणं क्षणमात्रं क्रियाविशेषणमिदं विचक्रे विकृतमित्यर्थ । विकारो लब्ध इति यावत् । वेः शब्दकर्मणः इत्युतौ वेरित्यनुवर्तमाने अकर्मकाच्चेति सूत्रेण वेः क्रियोऽकर्मकत्वप्रयुक्तात्मनेपदविधानेन छात्रा विकुर्वते इत्युदाहरणदानेन च विकारार्थकस्य क्रियोऽकर्मकत्वं स्पष्टमेव । अतएवात्र भावे लिट् । अनुप्रास- ॥ ३६ ॥

करीति । उदग्रः उच्च विग्रहः देहो यस्य 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुंगे च वामने' । 'शरीरं वर्ष्मविग्रहः' इत्युभयत्राप्यमरः । एतादृश. करी हस्ती रंहसा वेगेन 'रंहस्तरसी तु रय स्यदः' परं शत्रुं प्रहर्तुं प्रतिहत्य गतं करं शुंडां शरेण बाणेन अर्थात् रामेण

निकीलिते रामशरेण वेगिना दृढं विभिद्योरुयुगं तुरङ्गमे ।
कृतेऽपि दोषे भयमूढवृत्तिना हयेन कश्चिद्विचचाल नासनात् ॥ ३८
रिपोरपूर्णेन्दुमुखेन कश्चन स्थिरासनः पत्त्रियुगेन राक्षसः ।
निकृत्तयोरप्यधिजानु पादयोः पपात वेगेन यतो न वाजिनः ॥ ३९
वधाय धावन्नभिशम्भु विद्विषः शरेण कृत्तच्युतमस्तकोऽपरः ।
हतायुरप्यादिकृतेन कानिचित्पदानि वेगेन जगाम राक्षसः ॥ ४० ॥
जवेन कश्चिज्जवनाम्बुदोपमं क्षणं सिताभ्रैः कृतकर्णचामरम् ।
निपत्य कुंभे तरसा द्विधा गतैर्विहायसा वाहयति स्म दन्तिनम् ४१

चक्रवाले निकीलिते खिलीकृते सति, मोक्तुं न शशाक समर्थो नाभूदित्यर्थः । मोक्तुमित्यत्र शकधृषज्ञेत्यादिना तुमुन् । अनुप्रासः ॥ ३७ ॥

निकीलित इति । कश्चिद्योद्धा वेगः रहः अस्यास्तीति तथा एतादृशेन रामस्य रामभद्रस्य बाणः तेन उरुयुगं सक्थ्नोः युगलं दृढं यथास्यात्तथा विभिद्य निकीलिते संयते 'बद्धे कीलितसंयते' इत्यमरः । एतादृशे कुरङ्गमे मृगे दोषे निकीलितदोषे कृतेऽपि आचरितेऽपि भयेन भीत्या मूढा विवेकरहिता वृत्तिः यस्य एतादृशेन हयेन अश्वेन आसनात् न विचचाल । मृगवत् स्वस्यापि कीलितत्वं जातमिति भ्रांत्या न चचालेत्यर्थः । अनुप्रासालंकारः ॥ ३८ ॥

रिपोरिति । कश्चन स्थिरं दृढं आसनं यस्य स स्थिरासनः । एतादृशः राक्षसः रिपोः शत्रोः अपूर्णः अर्ध इत्यर्थः एतादृशो यः इंदुः चंद्रमाः तद्वत् मुखं यस्य एतादृशेन अर्धचन्द्राकारेणेत्यर्थः । एतादृशेन पत्त्रिणोः बाणयोः युग युग्मं तेन जानुनोरित्यधिजानु 'विभक्त्यर्थेऽव्ययीभावः' । पादयोः निकृत्तयोरपि छिन्नयोरपि वेगेन एतीति यत् तस्मात् यतः गच्छतः इत्युपातोः शत्रंतस्येदं रूप एतादृशात् वाजिनः अश्वात् न । पपात पत्लृ गतौ लिट् ॥ ३९ ॥

वधायेति । शत्रोः संमुख अभिशम्भु 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन अव्ययीभावः । शत्रोः संमुखमिति यावत् वधाय नाशाय तादर्थ्ये चतुर्थी धावतीति धावन् गच्छन्नित्यर्थः । तावत् विद्विषः शत्रोः रामभद्रस्येत्यर्थः । शरेण बाणेन आदौ कृत्त छिन्नं पश्चात् च्युतं गलितं कृत्तच्युतं 'पूर्वकालैककर्मसमानाः' । एतादृश मस्तकं उत्तमाङ्गं यस्य अतएव हत अपहृतं आयुर्यस्य एतादृशोऽपि अपरं अन्यः राक्षसः आदौ छेदनात्पूर्वं कृतः आदिकृतः तेन वेगेन जवेन कानिचित्पदानि जगाम । मस्तके छिन्नेऽपि पूर्ववेगानुवृत्त्या कानिचित्पदानि जगामेति भावः ॥ ४० ॥

जवेनेति । कश्चिद्राक्षसः जवनः तरसा 'तरसी स्यद[illegible]वेगौ प्रजवी जवनो जव' '[illegible]' एतादृशः यः अम्बुदः मेघः सः उपमा यस्य । कुंभे [illegible] निपत्य पतित्वा तरसा वेगेन दन्तिनं सिताभ्रैः वा द्विधा द्विप्रकारेण 'अधिकर्णं [illegible] चामरम्' [illegible] [illegible]

पृषत्कभिन्नोदररन्ध्रनिर्गतं स्वमन्त्रमुत्कृत्य खुराग्रपातनैः ।
दिशि क्षिपन्तं युधि वेगधारयाऽपरो भुवं वाहयति स्म वाजिनम् ॥४२
निकृत्य सौमित्ररथाङ्गधारयाऽपवर्णितं स्वं तरसा क्षपाचरः ।
क्रुधा युधीकृत्य भुजं महीभुजः सुतं जघान ध्वनिकम्पितस्थलः ॥४३
न्यमज्जदर्द्धेन रथाङ्गमीरितं परेण शत्रोरुपदण्डमस्तकम् ।
तमेव दण्डं परशुं विधाय तं शिरस्यरातिर्निजघान सस्वनः ॥४४

---

'अभ्रं मेघो वारिवाहः' इत्यमरः । तैः कर्णैः इते कर्णयोश्चामरे प्रकीर्णके यस्य 'चामरं तु प्रकीर्णकं' मित्यमरः । कुम्भभिन्नस्थितान्यग्राणि यस्य कर्णयोः चामरवत् प्रतिभातः एतादृशं दन्तिनं हस्तिनं विहायसा आकाशमार्गेण 'पुंस्याकाशविहायसी' इत्यमरः । वाहयति स्म प्रापयति स्मेत्यर्थः । लट् स्मे इति स्मयोगे लट् अनुप्रासालङ्कारः ॥ ४१ ॥

पृषत्केति । युधि युद्धे अपरः राक्षसः पृषत्कैः बाणैः 'पृषत्कबाणविशिखाः' इत्यमरः । भिन्नं विदीर्णं यदुदरं तस्य यद्रन्ध्रं छिद्रं तस्मान्निर्गतं बहिर्गतं एतादृशं स्वं निजं 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वः स्त्रियां धने' अन्त्रं पुरीतत् उत्कृत्य खुराणां अग्राणि प्रान्तभागाः तेषां यानि पातनानि तैः हरितां दिशि हरितीति 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । क्षिपति प्रेरयति इति क्षिपन् तं वाजिनं घोटकं 'वाजिवाहार्वगन्धर्व' इत्यमरः । भुवं पृथिवीं वाहयति स्म प्रापयति स्म । अत्र गतिबुद्धीति सूत्रेण अणि कर्तुः णौ कर्मत्व ॥४२

निकृत्येति । ध्वनिना शब्देन कंपितं चलितं स्थलं येन एतादृशः क्षपाचरः राक्षसः क्षपायां रात्र्यां चरतीति तथा 'त्रियामा क्षणदा क्षपेत्यमरः' । चरेष्ट इति टप्रत्ययः । सुमित्रायाः अपत्यं पुमान् सौमित्रः लक्ष्मणः स्त्रीभ्यो ढगिति ढकं बाधित्वा 'अवृद्धाभ्यो नदीमानुषीभ्य इत्यण्प्रत्ययः' । तस्य यत् रथाङ्गं चक्रं 'चक्रं रथाङ्गं' इत्यमरः । तस्य धारया निकृत्य कृतीछेदने इत्यस्य निपूर्वस्य ल्यबन्तस्य रूपं । अपवर्जितं त्यक्तं अपवर्णितमिति पाठेऽप्यशुद्धिरिति भाति लेखकप्रमादो वा स इति ज्ञेय । रामात्मीयं भुजं तरसा वेगेन क्रुधा क्रोधेन क्रुध्यतेः सम्पदादित्वात् भावे क्विप् आयुधीकृत्य प्रहरणीकृत्य 'आयुधं तु प्रहरणं' इत्यमरः । आयुधशब्दाच्च्विप्रत्यये च्व्यन्तत्वादूर्यादिच्व्यनेन गतिसंज्ञायां कुगतीत्यनेन गतिसमासे ल्यबादेशः मही पृथ्वी भुङ्क्ते इति महीभुक् दशरथः तस्य सुतं पुत्रं लक्ष्मणं जघान प्रजहारेत्यर्थः । लक्ष्मणचक्रेण छिन्नं स्वभुजमेव आयुधत्वेन प्रजहारेत्यर्थः । अनुप्रासालंकारः ॥ ४३ ॥

न्यमज्जदिति । परेण शत्रुणा ईरितं प्रेरितं रथाङ्गं चक्रं शत्रोः उपदण्डमस्तकं 'दण्डस्य मस्तकं शिरः' तस्य समीपं इति तथा 'अव्ययं विभक्ति' इत्यादिना समीपेऽव्ययीभावः दंडाग्रे इत्यर्थः । अर्द्धेन अर्धभागेन शत्रुणा क्षयंस्य खंडित्वात् अवशिष्टार्धेनेत्यर्थः । न्यमज्जत् पराहेति यावत् । अरातिः शत्रुः स्वनेन

स्वपाणियन्त्रच्युतशस्त्रसादितं विधाय वृन्दं बहुधा सुरद्विषाम् ।
रणाय कोशादसिमीशितुः सुतश्चकर्ष कृष्णं विवरादिवोरगम् ॥४५
परस्य सौमित्रिकृपाणपाटितद्विधाभवद्देहभृतो निकीलयन् ।
शरेण पार्श्वे नृहरिः समग्रतां व्यधत्त रोषेण नु लीलया नु सः ४६
करं रणाय प्रतिहृत्य धावति द्विपे निजघ्ने तनयेन भूभुजः ।
बहूनि खण्डानि विधित्सुनाऽसिना समेत्य सम्पिण्डित एव तत्करः

---

सहितः तथा सशब्दः सन् इत्यर्थः । तत्पूर्वोक्तमेव दड परशु परश्वध 'परशुश्च परश्वध' इत्यमरः । विधाय कृत्वा तं पूर्वोक्त शत्रु शिरसि शिरोवच्छेदेन निजघान ताडयामास । अय भावः एकेन शस्त्रेण तावत् चक्र प्रहृत । अपरेण तत् प्रहृत । अतस्तस्यार्धं यस्मिन् तत् प्रहृत तस्य दण्डे पतित अतः स परशु सपन्नः । चक्रार्धं दण्डस्य शिरसि सलग्न चेत् परश्वधाकारो भवति । अतः सः तमेव परशु गृहीत्वा प्रहर्तरि निजघानेत्यर्थः ॥ ४४ ॥

स्वपाणीति । ईशितुः ईश्वरस्य ईशऐश्वर्ये अस्मात् ताच्छील्ये तृन्प्रत्ययः । दशरथस्य पुनः रामो वा लक्ष्मणो वा सुरान् द्विषतीति सुरद्विपः 'सत्सूद्विषेति क्विप्' तेषा दैत्यानां वृन्द समूह 'स्त्रियां तु संहतिर्वृन्द' इत्यमरः । बहुधा बहुप्रकारेण 'सङ्ख्याया विधार्थे धा' इति धाप्रत्ययः । स्वस्य यः पाणिः हस्तः तदेवयन्त्र तस्मात् च्युतानि गलितानि 'स्रस्त पन्न च्युत गलित' इत्यमरः । यानि शस्त्राणि आयुधानि तैः साधित नाशित विधाय कृत्वा रणाय युद्धाय तादर्थ्ये चतुर्थी । विवरात् बिलात् विवरं बिलं इत्यमरः । कृष्णं कृष्णवर्णं उरग उरसा गच्छतीति उरगः तं 'उरसो लोपश्चेति' उरःशब्दे उपपदे गमधातोः डः प्रत्ययः इव सर्पमिवेत्यर्थः । कोशात् खड्गपिधानात् 'कोशोऽस्त्री कुड्मले खड्गपिधाने' इत्यमरः । असिं खड्ग चकर्ष उज्जहारेत्यर्थः । उपमानुप्रासावलङ्कारौ ॥ ४५ ॥

परस्येति । सुमित्राया अपत्य पुमान् सौमित्रिः लक्ष्मणः 'स्त्रीभ्यो ढक्' इति ढक् बाधित्वा बाह्वादित्वादिञ् । तस्य यः कृपाणः खड्गः 'करवालः कृपाणवत्' इत्यमरः । तेन पाटितः विदीर्णः अतएव द्विधाभवन् शकलीभवन् यो देहः कायः तं बिभर्तीति देहभृत् तस्य परस्य शत्रोः इद समग्रतामित्यनेन अन्वेति । पार्श्वे पार्श्वभागे शरेण बाणेन निकील्यतीति निकीलयन् व्यधत्त स पूर्वोक्त नृहरिः ना मनुष्यः हरिरिव सिंह इव नृहरिः 'उपमित व्याघ्रादिभिरिति' समासः । रोषेण नु कोपेन नु लीलया नु हेलया नु समग्रस्य सपूर्णस्य भावः समग्रता तां ... विभूर्णादिपाठेर्लिङ् लाप् तडः ... । अत्र नुद्वय उत्प्रेक्षाद्वयसूचनार्थं । उत्प्रेक्षालङ्कारः ॥ ४६ ॥

करमिति । रणाय युद्धाय करं शुण्डां प्रतिहृत्य विरचय्येत्यर्थः । उर्ध्वीकृत्येति वा धावति अतिवेगेन गच्छति द्विपे हस्तिनि भूभुजः दशरथस्य तनयेन पुत्रेण निजघ्ने प्रहृतमित्यर्थः । ... भावे लिट् । तदुक्तं

कृपाणकृत्तस्य दृढोरुयन्त्रितं न पश्चिमार्द्धं निपपात सादिनः ।
तुरङ्गवल्गादृढकष्टमुष्टिना परेण भागेन च लम्बितं पुरः ॥ ४८ ॥
परेण खड्गेऽनुपपात पातिते सुरारिरुत्तानविसृष्टविग्रहः ।
अपि व्यपाये सति सत्त्वमानयोर्द्विषे न दित्सन्निव पृष्ठमाहवे ॥४९॥
निमग्नखड्गे जठरे सुरद्विपः परिक्षरच्छोणितसिक्तमूर्तयः ।
परस्परस्य प्रसभं समुच्छलत्प्रहारघातेन पुनर्विशोपिताः ॥ ५० ॥

---

'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति । बहूनि प्रभूतानि खण्डानि शकलानि विधित्सुना विधातुमिच्छुना निपूर्वाद्धातेः सन् सनिमीमेति इसादेशोऽभ्यासलोपश्च सनन्तात् 'सनाशंस भिक्ष उः' इति उप्रत्ययः । एतादृशेन असिना खड्गेन समेत्य सङ्गत्य तस्य द्विपस्य करः शुण्डा पिण्डित एव एकीकृत एव अथ च मण्डलीकृत एवेत्यर्थः । बहुखण्डचिकीर्षया प्रवृत्तेन असिना करस्य सङ्गमे तस्य पिण्डीकरणं विरोधः असिसंयोगे हस्तिनां करः सङ्कुचित इति परिहारः । विषमालङ्कारः ॥ ४७ ॥

कृपाणेति । कृपाणेन असिना कृत्तस्य छिन्नस्य सादिनः अश्वारोहस्य 'अश्वारोहास्तु सादिनः' इत्यमरः । दृढोरुयन्त्रितं दृढौ यौ ऊरू सक्थिनी ताभ्यां यन्त्रितं संबद्धं पश्चिमार्धं पश्चिमं च तत् अर्धं च पश्चिमार्धं अत्र समांशाभावात् अर्धं नपुंसकं इति समासो न किंतु कर्मधारय एव । न निपपात तुरगस्य अश्वस्य या वल्गा (लगाम इति भाषायां) 'वल्गादेरावन्ध्यदन' इति निर्देशः । तया दृढं यथास्यात्तथा कष्टा मुष्टिरिति समासः । मुष्टिः यस्य एतादृशेन परेण भागेन उपरिभागेनेति यावत् पुरः अग्रभागे 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । लम्बितं च । मध्यभागे सादिनि छिन्नेऽपि दृढसंमतत्वात् अधोभागोऽश्वात्पपात उपरितनभागोऽपि वल्गासक्तमुष्टित्वात् नैवपपात किंतु केवलं लम्बे इत्यर्थः ॥ ४८ ॥

परेणेति । परेण शत्रुणा एकेनेत्यर्थः । खड्गे असौ पातिते सति त्यक्ते सति उत्तानं यथास्यात्तथा विसृष्टः त्यक्तः विग्रहः देहो यस्य एतादृशः सुराणां देवानां अरिः शत्रुः दैत्यः अनुपपात शत्रुखड्गपातानन्तरं उत्तानविसृष्टविग्रहः पपातेत्यर्थः । उत्तानं देहपतनं उत्प्रेक्षते अपीति । सत्त्वमानयोः प्राणाभिमानयोः 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः । व्यपाये नाशे सत्यपि आहवे समरे द्विषे शत्रवे पृष्ठं पृष्ठभागं न दित्सन्निव न प्रदातुमिच्छन्निव उत्तानविसृष्टविग्रहः इति पूर्वेणान्वयः । उत्प्रेक्षालङ्कारः ॥ ४९ ॥

निमग्नेति । सुरद्विषः दैत्याः 'पूर्वदेवाः सुरद्विषः' इत्यमरः । जठरे उदरे निमग्नः अन्तर्गतः खड्गोऽसिर्येषां एतादृशे सति यस्य च भावेनेति सप्तमी । परितः सर्वतः क्षरत् शोणितं रक्तं 'रक्तं क्षतजशोणितं' इत्यमरः । तेन सिक्ता आर्द्रा मूर्तिः देहो येषां ते एतादृशा अभवन् पुनः प्रसभं बलात्कारेण परस्परस्य अन्योन्यस्य समुच्छलत् अन्तर्गतो न सञ्जातः इति असंगत्यलङ्कारः 'असमासगते

ततस्तताসृक्स्रवलोहिताम्बरः श्रियं जयस्थामुपयन्तुमुद्यतः ।
यथेप्सपानाशनतृप्तचेतसश्चकार राजन्यवरश्चिरं द्विजान् ॥ ५१ ॥
ततो मरुत्पावकशस्त्रनिर्धुतप्रदग्धमारीचसुबाहुविग्रहः ।
बलं बलीयानबलीकृतं भिया ततं दिगन्तं स निनाय नायकः ॥५२
रणे दधानो हृदयं दयाऽहृतं सलीलमायम्य धनुर्धनुर्धरः ।
पराङ्मुखानां शनकैः शिलीमुखान् द्विषद्द्विपानां जघने जघान सः

पूर्वपदस्य सुप सुर्वक्तव्य ' इति । समुच्छ्वसन् ऋद्धिं प्राप्नुवन् यः प्रहारवातः प्रहारसबधी वात वायु तेन विशोषिताः शुष्कीकृताः आसन्निति शेषः ॥ ५० ॥

तत इति । तत युद्धप्रवृत्त्यनतर तत विस्तृत यत् असृक् तस्य यः स्रवः स्रुतिरित्यर्थः । ऋदोरप् इति स्रुधातोर्भावे अप्प्रत्ययः । तेन लोहित रक्त ' लोहितो रोहितो रक्त ' इत्यमर । अवर वस्त्र यस्य एतादृश । जये विजये तिष्ठति इति जयस्था ता शत्रुजयप्राप्तामित्यर्थः । सुपीति योगविभागात् स्थाधातोः कप्रत्ययः एतादृशीं श्रिय लक्ष्मीं जयलक्ष्मीमिति यावत् उपयंतु उद्वोढु उद्यतः प्रवृत्तः राजन्यवरः । राजन्येषु क्षत्रियेषु वर श्रेष्ठः सुप्सुपेति समासः । रामचद्रः लक्ष्मणो वा ' मूर्धाभिषिक्तो राजन्य ' इत्यमरः । चिर चिरकाल द्विजान् ब्राह्मणान् पक्षिणश्च ' दतविप्राण्डजा द्विजाः ' इत्यमरः । तत्र ब्राह्मणानां जन्मना सावित्र्युपदेशेन च द्विर्जातत्वात् द्विजत्व 'जन्मना जायते शूद्र संस्काराद्द्विज उच्यते' इत्युक्तेः । पक्षिणां द्विजत्व तु अण्डरूपेण स्वरूपेण च । तान् ईप्सां इच्छां अनतिक्रम्य वर्तते इति यथेप्स । आप्नोतेः समतात् अप्रत्ययः द्वित्वे ईत्वे अभ्यासलोपः पदार्थानतिवृत्तौ अव्ययीभाव । यथेप्से ये पानाशने प्राशनभक्षणे पानकपक्वान्नानां रक्तमांसाना च यथायोग्य ज्ञेय । ताभ्यां तृप्त चेतः अतःकरण येषां ते एतादृशान् चकार । यथा विवाहादौ यथेच्छपानाशनादिभि ब्राह्मणाः तर्प्यंते एव जयश्रीविवाहेपि मांसादिभिः तेन पक्षिणः तर्पिता इत्यर्थ । श्लेषानुप्रासावलंकारौ ॥ ५१ ॥

तत इति । तत जयश्रीप्राप्त्यनतर मरुत् वायुः पावकः अग्निः तयोः शस्त्रे वायव्याग्नेये इत्यर्थः । ताभ्यां पूर्वं निर्धुतौ कम्पितौ पश्चात् प्रदग्धौ पूर्वकालेति समासः । निर्धुतप्रदग्धौ मारीचसुबाह्वोः एतन्नामकयोः दैत्यविशेषयोः विग्रहौ देहौ येन यद्यप्यत्र सुबाहु मारीचेति भवितव्य द्वन्द्वेघीति सूत्रात् तथापि ' समुद्राभ्राद्. ' इति निर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वात् समाधेय । बलीयान् अतिशयेन बलवान् इति तथा विन्मतोर्लुगिति ईयसुनि मतुपो लुक् एतादृशः सः पूर्वोक्तः नायकः रामचद्रः तत विस्तृत भिया भीत्या अबलीकृत अबलेन बलवत् कृत अबलाताम्रन् च्विप्रत्ययः अस्य च्वाविति ईत्वं अबलीकृतमित्यत्र कृभ्वस्ति समासः । बल सैन्य दिगत दिशां अतः तं निनाय प्रापयामास । अनुप्रासं चेत्यनेन द्विर्भेदकारं अनुप्रासालंकार ॥ ५२ ॥

रण इति । रणे युद्धे दयाहृतं दयाहृता येन दयार्द्रमित्यर्थः । पूर्वनिपातप्रकरण-

भृशं न सेहे युधि राममाशुगप्रतानशुष्काशनिपातभीषणम् ।
युगान्ततिग्मद्युतितेजसं द्विषो बलीयसो भ्रातृबलान्वितं बलम् ४५

स्थित्वा गुणे महति तत्क्षणलब्धमोक्षाः
सुश्लिष्टपुङ्खसफलाननसम्पदस्ते ।
श्लाघया इवास्य विशिखा रिपुसैनिकेभ्य-
श्चक्रुस्त्रिविष्टपसभागमनोपदेशम् ॥ ५५ ॥

---

स्यानित्यत्वात् निष्ठेति पूर्वनिपातो न भवति । अथवा दयया आहृतं आकृष्टं तृतीयासमासो वा एतादृशं हृदयं अंतःकरणं ' चित्तं तु चेतो हृदयं ' इत्यमरः । यस्तेऽसौ दधानः एतादृशः धरतीति धरः पचाद्यच् धनुष. धरः धनुर्धरः सः रामः धनुः चापं लीलया सहितं सलील यथास्यात्तथा आयम्य आकृष्य पराङ्मुखानां विमुखानां द्विषतां शत्रूणां ये द्विपाः तेषां जघने कटिपूर्वभागे शिलीमुखान् बाणान् ' अलिबाणौ शिलीमुखौ ' इत्यमरः । शनकैः मंद यथास्यात्तथा शनैः शब्दस्याकच् जघान प्रजहार हंतेर्लिट् । अनुप्रासः ॥ ५३ ॥

भृशमिति । बलीयसः अतिबलयुक्तस्य द्विषः शत्रोः बलं सैन्य कर्तृ युधि युद्धे आशुगानां बाणानां ' अजिह्मगखगाशुगाः ' इत्यमरः । तेषां प्रतानः विस्तारः प्रपूर्वात्तनोतेर्भावे घञ् स एव शुष्काशनिपातः जलरहितवज्रपातः अशनिपातेहि प्रायः जलं अनुवर्तते प्रकृतबाणेषु जलाभावात् शुष्केति विशेषणं । तेन भीषणं भयकरं अतएव युगांते प्रलयांते तिग्मद्युतिः तीक्ष्णकांतिः सूर्य इत्यर्थः । तद्वत् तेजो यस्य भ्रातृबलान्वित भ्राता लक्ष्मणः तस्य यत् बलं सामर्थ्यं तेन अन्वितं अनुकूलितमित्यर्थः । एतादृश रामं भृशं अत्यंतं न सेहे न ममृषे इत्यर्थः । सह-धातोर्लिट् एवाभ्यासलोपौ अनुप्रासः ॥ ५४ ॥

सर्गांते भिन्नवृत्तेन वर्णयति । स्थित्वेति । महति उत्कृष्टे गुणे सत्वशांत्यादिके स्थित्वा तत्क्षणे गुणस्थितिक्षणे लब्धः प्राप्तः मोक्षः निर्वाणं यैः ' श्रेयो निःश्रेयसामृतं मोक्षो ' इत्यमरः । सुश्लिष्टाः सुतरां विद्यमानाः युक्तयः योगाः शुभकर्मप्रयोगा वा तैः सफलाः आननानां मुखानां सपदो येषां एतादृशाः उत्तमयुक्तिवर्णनेन उत्तमयोगवर्णनेन वा सफलमुखा इत्यर्थः । एतादृशाः श्लाघयाः सुरविशेषा इव अस्य रामभद्रस्य महति विशाले ' विशालं पृथुलं महत् ' इत्यमरः । गुणे मौर्व्यां ' रज्जुस्त्रिषुवटीगुणः ' इत्यमरः । स्थित्वा तत्क्षणे धनुर्गुणस्थितिक्षणे लब्धः प्राप्तः मोक्षः धनुर्विभागो यैः एतादृशाः सुश्लिष्टा पुङ्खाः आननसपदः अग्रभागसंपदो येषां सुश्लिष्टाग्रतान्यग्रपदइत्यर्थः । ते पूर्वोक्ताः विशिखा बाणाः रिपोः सैनिकाः सेनासमवेताः लोकाः ' सेनायांवेति ' ठक् लोभ्यः तृतीय विष्टप त्रिविष्टपं अत्र वृत्तौ त्रिशब्दः पूरणप्रत्ययांतः ' त्रिदिवं दिवि त्रिविष्टपं ' इति कोशः । त्रिविष्टपं स्वर्गः तस्य या सभा सुधर्माख्या तस्यां गमनस्य मार्गस्य उपदेशं चक्रुः विदधुः । युद्धमरणेन स्वर्गप्राप्तिरित्यर्थः । श्लेषा-

हुतभुजि निधनाख्ये शत्रुहव्यानि हुत्वा
परिणयति जयश्रीवीरकन्यां नृवीरे ।
समरपटहघोषे तत्र नृत्तं कबन्धै-
र्बहलरुधिरपङ्कस्फारिसिन्दूरलेपैः ॥ ५६ ॥

मध्येनिकृत्तरजनीचरपूर्वकाया-
श्छेदैः स्थिता भुवि निपत्य भयं वितेनुः
रक्षःसु युद्धविमुखेषु विभिद्य भूमी-
मर्द्धोत्थिता इव पुनः समराय दैत्याः ॥ ५७ ॥

नुप्राणितोपमालंकारः । वसततिलका वृत्तम् ' ज्ञेय वसंततिलकं तभजा जगौ गः' इति लक्षणात् ॥ ५५ ॥

हुतभुजीति । नृषु वीरः तस्मिन् रामभद्रे निधनं मरण आख्या यस्य ' मरणं निधनोऽस्त्रियां 'आख्याह्वे अभिधान चेत्यमरौ' । हुतभुजि अग्नौ ' हिरण्यरेता हुतभुग्' इत्यमरः । शत्रवः रिपवः एव हव्यानि हविर्द्रव्याणि तानि हुत्वा जयश्रीरेव वीरकन्या तां परिणयति उद्वहति सति समरस्य युद्धस्य यः पटहः ढक्का तस्य यो घोषः ध्वनिः तस्मिन् अत्र कोपे इति पाठः प्रामादिक इति भाति । तत्र रणभूमौ बहलः य रुधिरपंकः रक्तकर्दमः तेन स्फारिणः स्फुरद्रूपाः स्फुर स्फुरणे णिजतात्सुप्यजाताविति णिनिः ' चिस्फुरोर्णौ' इति वात्व सिंदूरलेपा येषां तैः कबंधैः मूर्धविरहितक्रियायुक्तशरीरैः कर्तृभिः 'कबंधोऽस्त्रीक्रियायुक्त' इत्यमरः । नृत्तं नर्तन कृतमित्यर्थः । नृतीगात्रविक्षेपे भावे क्तः विवाहे हि वरेण अग्नौ हविर्हुत्वा कन्या उद्वह्यते नटनर्तकाश्च अनेकवेषयुक्ताश्च वाद्यघोषानुरोधेन नृत्यंतीति सार्वजनीनमेवेतत् । रूपकालंकारः । मालिनीवृत्तं उक्तं च ' ननमयययुतेयं मालिनी भोगिलोकैः ' इति ॥ ५६ ॥

मध्ये इति । मध्ये मध्यभागे छेदैः भुवि भूतले निपत्य पतित्वा स्थिताः निकृत्तानां छिन्नानां रजनीचराणां राक्षसानां ये पूर्वकायाः कायानां देहानां पूर्वाणि पूर्वकायाः कर्तारः ' पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ' इति समासः । रक्षःसु राक्षसेषु युद्धस्य रणस्य विमुखाः पराङ्मुखाः तेषु युद्धपराङ्मुखेषु सत्स्वित्यर्थः । भूमिं पृथ्वीं भूमीमिति पाठे 'कृदिकारादक्ति न' इति ङीप् । पुनः समराय युद्धाय अर्धोत्थिताः अर्धं यथास्यात्तथा उत्थिताः सुप्सुपेति समासः । दितेः अपत्यानि पुमांसो दैत्याः ' दित्यदित्यादित्यनेन ' दिति शब्दात् ण्यप्रत्ययः । असुरा इव भयं भीतिं ' भितिर्भीः साध्वसं भय ' इत्यमरः । वितेनुः विस्तारयामासुः । तनु विस्तारे लिट् । दैत्यानां रसातलनिवासित्वात् उत्प्रेक्षेयं । तदुक्तं श्रीमद्भागवते ' ततोऽधस्ताद्रसातले दैतेया दानवाः पणयो नाम निवातकवचाः कालेया हिरण्यपुरवासिन इति विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकमहानुभावस्य हरेरेव तेजसा प्रतिहतबलावलेपा बिलेशया इव निवसंति' इत्यादि । उत्प्रेक्षालंकारः । वसंततिलकावृत्त लक्षण मुक्तं ॥ ५७ ॥

रामायुधव्यथितराक्षसरक्तधारा-
स्पर्शेन लोहितरुचो मुहुरम्बुवाहाः ।
गौरीपतिप्रणतिसम्भ्रमलाभवन्ध्यां
सन्ध्यामकालघटितां गगने वितेनुः ॥ ५८ ॥

सक्रीडद्रथतुरगद्विपाभ्रवृन्द-
व्युत्क्रान्तौ विरतपृषत्कपातवृष्टि ।
निस्त्रिंशस्फुरिततडिद्वियुक्तमाप
व्यक्तार्कद्युति शरदीव तन्नभः श्रीः ॥ ५९ ॥

रक्षोवसापिशितपूरितकुक्षिरन्ध्रः
काकुत्स्थबाणहतहस्तिमुखाधिरूढः ।
पर्यन्तलग्नरुधिराणि मृदुप्रणाद-
स्तुण्डानि वायसगणो वदने ममार्ज ॥ ६० ॥

---

रामेति । रामस्य रामभद्रस्य यानि आयुधानि प्रहरणानि 'आयुधं तु प्रहरणं' इत्यमरः । तैः व्यथिताः भीताः ताडिता इति यावत् एतादृशा ये राक्षसाः तेषां रक्तस्य या धारा प्रवाहः तस्याः स्पर्शेन संबन्धेन लोहिता आरक्ता रुक् कांतिर्येषां 'स्युः प्रभारुग्रुचिस्त्विड्भा' इत्यमरः । एतादृशाः अंबूनि उदकानि वाहयन्तीति अंबुवाहाः मेघाः अंबुशब्दे उपपदे वाहेः कर्मण्यण् 'अभ्रं मेघो वारिवाहः' इति कोशः । गगने आकाशे मुहुः पुनःपुनः यदा यदा रक्षोरक्तसंबन्धो भवति तदातदेत्यर्थः गौर्याः पार्वत्याः पतिः स्वामी शंकरः तस्य या प्रणतिः नमस्कारः तत्संबन्धी यः संभ्रमः त्वरा 'आवेगः संभ्रमस्त्वरेति' कोशः तस्य यो लाभः प्राप्तिः तेन वन्ध्या रहितामित्यर्थः । एतादृशीं अकालघटितां अकाले घटिता निर्मिता इति तथा संध्यां पितृप्रसूं 'सायंसंध्या पितृप्रसूरि'त्यमरः। वितेनुः विस्तारयामासुः । अतिशयोक्त्यलंकारः । वसंततिलकावृत्तम् ॥ ५८ ॥

सक्रीडतीति । रथतुरगद्विपं रथाः स्यन्दनाः तुरगाः अश्वाः द्विपाः हस्तिनः एतेषां समाहारः रथतुरगद्विपं सेनांगत्वात् 'द्वंद्वश्च प्राणितूर्यसेनांगानामित्येकवद्भावः' संक्रीडत् विहरत् यत् रथतुरगद्विपं तदेव अभ्रवृंदं मेघसमूहः तस्य व्युत्क्रान्तौ अपगतौ सत्यां विरतौ सत्यामिति यावत् विरता शांता पृषत्कानां बाणानां विद्धौ च पातः पतनं स एव वृष्टिः वर्षणं यस्मिन् निर्गतः त्रिंशद्भ्यः अंगुलिभ्यः इति निस्त्रिंशः खड्गः 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इत्यनेन बहुव्रीहिसमासः । तस्य स्फुरितं स्फुरणं तदेव तडित् विद्युत् तया वियुक्तं विरहितं अतएव मध्ये व्यवधानाभावात् व्यक्ता स्पष्टा अर्कस्य सूर्यस्य द्युतिः कांतिः यस्मिन् एतादृशं तत्पूर्वोक्तं नभः कर्म शरदीव शरत्काले इव श्रीः शोभा कर्त्री आप प्राप । उपमालंकारः । प्रहर्षिणी वृत्तम् । उक्तं च 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति ॥ ५९ ॥

रक्ष इति । रक्षसां राक्षसानां वसा हृन्मेदः पिशितं मांसं च ताभ्यां

राजात्मजौ मुनिसुताश्रुभिराहिताघ्यौं
प्रत्युद्गतौ मृगकुलैरुटजानि गत्वा ।
आवर्जिते विदधतुः शिरसी सुबाह्वो
र्बाणव्रजेन गुरुणी गुरुपादमूले ॥ ६१ ॥

इति कुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
मारीचसुबाहुवधो नाम पञ्चमः सर्गः ॥

पूरितं पूर्णं कुक्षेः उदरस्य रंध्रं बिलं यस्य ककुत्स्थस्य राजविशेषस्य गोत्रापत्यं पुमान् काकुत्स्थः रामः शिवादित्वादण् तस्य ये बाणाः शराः तैः हताः नाशिताः ये हस्तिनः दंतिनः तेषां मुखेषु अधिरूढः आरूढः मृदुः मृदुलः प्रणादः ध्वनिः यस्य आकंठं उदरपूर्तेः आक्रोशे शक्त्यभावात् मृदुप्रणादत्वं । एतादृशः वायसानां काकानां गणः समूहः पर्यंते प्रांतभागे लग्नानि संलग्नानि रक्तानि येषां एतादृशानि तुंडानि मुखानि चंचुरित्यर्थः । रदने हस्तिदंते ममार्ज शोधयति स्म मृजूशुद्धौ लिट् । अत्र काकजातेः स्वभाववर्णनात् स्वभावोक्त्यलंकारः । तदुक्त 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनमिति' अनेन रक्षसां वसामांसरक्तादीनां संमर्दो वर्णितः तेन च बहूनां राक्षसाना हनन ध्वनितं । वसंततिलका॥६०॥

राजात्मजाविति । मुनीनां सुताः पुत्राः तेषां अश्रूणि तैः आहिताघ्यौं अर्घाय पूजाविधये इदं अर्घ्यं ' मूल्ये पूजाविधावर्घः ' इत्यमरः । आहितं कृतं अर्घ्यं याभ्यां तौ तथोक्तौ ऋषिकुमारैः तयोर्दर्शनानन्देन प्रेमाश्रूणि पातितानि तानि अर्घ्यत्वेन कल्प्यंते मुनिसुताक्षिभिः इति पाठे तु अक्ष्णां तेजोरूपत्वेन अक्षिस्पंद रहितदर्शनात् आर्तिमयत्वेन पूजा ज्ञेया । मृगाना हरिणानां कुलानि समूहाः तैः प्रत्युद्गतौ राज्ञः दशरथस्य आत्मजौ पुत्रौ रामलक्ष्मणौ उटजानि पर्णशालाः 'पर्णशालोटजोऽस्त्रियां ' इत्यमरः । सुबाह्वोः मारीचस्य सुबाहोश्चेत्यर्थः । सुबाहुरिति यदृच्छाशब्देन यौगिकसुबाहुशब्दस्यैकशेषात् द्विवचनं यद्वा प्रथमयोः पूर्वसवर्णयोरित्यत्र यथा प्रथमासहचरितद्वितीयायाग्रहणं तद्वत् सुबाह्वोरिति द्विवचनसामर्थ्यात् सुबाहुसहचरितस्य मारीचस्यापि ग्रहण बाणव्रजेन बाणसमूहेन आवर्जिते अपहृते कृते इत्यर्थः । गुरुणी गुरुत्ववती शिरसी मस्तके गुरोः विश्वामित्रस्य पादमूले चरणसमीपे विदधतुः स्थापयामासतुरित्यर्थः । विपूर्वाद्धातेः लिट् अतुस् । वसंततिलकावृत्तम् ॥ ६१ ॥

इतिश्रीश्रुतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यलंकृतपंडित-
प्रकांडश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्यांतेवासिना निगुडकरो-
पाभिधेन नारायणशर्मणा विरचितायां महोत्साहाख्यजानकी-
हरणकाव्यटीकायां पंचमः सर्गः समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# TRANSLATION

OF

# JANAKIHARANA.

———0:———

Stanza 1 The city of *Ayodhá* was, as it were, the celestial city (*Amarávati*) come down from heaven on this world in consequence of an excess of the weight of enjoyable objects, it was the (special) abode of the *Kshatriyas* just as the *Shami* plant is that of fire, and *it stood foremost among cities by its wealth*

2 The moon being covered by the rays issuing from the rubies studded in the topmost balustrades [of palaces], appeared *to* have assumed a reddish hue through irritation on account of being, as it were slighted by the beautiful faces of the ladies belonging to the city

3 This city, though it gave satisfaction to all (its inhabitants) by its affluence, did *not become a source of delight to* the women seeking secret meetings with (their) lovers at night, since the thick darkness [here] was dispelled by the radiance of the jewels fixed in the golden arches

